THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NOS. 105, 106, 151 & 161



चक्रनारायणीयनिबन्धापरपर्य्यायः

# स्मृतिसारोद्धारः।

मध्यपल्ली(मझौली)नरेशा श्रीनारायणमल्लदेवानाम
ज्ञामनुसरद्भिः पण्डित विश्वम्भर-
दीक्षितैः सङ्कलितः।

मध्यपल्लीपाठालयाध्यापकेन मङ्गलमिश्रेण शोधितः।

SMRITISÂRODDHÂRA,

BY

VISVAMBHARA TRIPATHI, EDITED BY

PAṆḌIT MANGAL MIŚRA,

The Teacher of The Majhaoli School.

*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT.
BENARES.
AGENTS:- OTTO HARRASSOWITZ, LEIPZIG:
PAṆḌITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Dâsa Gupta.*
AT THE VIDYÂ VILÂSA PRESS.
BENARES.

*1911.*

# प्रस्तावना ।



इह खलु परमप्रशस्तस्वेतरसमस्तपुरुषार्थसार्थहेतुजीवातुधर्मतत्वनिर्णयार्थमनेकमहर्षिप्रणीतानां स्मृतिवचसामातिसङ्क्षिप्तानामतिगूढव्यूढभावंभावनाऽभिभूतमिथोऽर्थभेदबुद्धीनां व्यवस्थायै निबन्धानारचितवतां श्रीविज्ञानेश्वरप्रभृतीनां देवदर्शनानां विदुषां गतानुगतिकः श्रीमान् विश्वम्भरदीक्षितः स्मृतिसारोद्धारनामानमिमं ग्रन्थं प्रणिनाय । अयञ्च महाशयः कदा क चासीदिति जिज्ञासाच—

अमुञ्चक्रनारायणीयं निबन्धो-
त्तमं भीममल्लक्षितीशात्मजस्य ॥
व्यधान्मल्लनारायणक्षोणिभर्तु-
स्त्रिवेदी निदेशेन विश्वम्भराख्यः ॥

इत्यनेनैतद्ग्रन्थान्तिमश्लोकेन निरस्यते, तथाहि जगत्प्रख्यातसरयूपारदेशस्थमध्यपल्लीराजधानीस्वामिन्या विश्वसेनाख्यक्षत्रराजमहामणिमालाया घटकस्य महाप्रतापश्रीभीममल्लपुत्रश्रीमन्नारायणमल्लराजस्याज्ञानुसारेण "श्रीमच्चक्रनारायणेत्यादिविविधविरुदावलीविराजमान" इत्याद्युक्तराजवंशप्रशास्तिसमुल्लिखितविरुदावलीसन्निविष्टचक्रनारायणशब्दमुद्राङ्कितश्चक्रनारायणीयनिबन्धनामाऽयं निबन्धो रचितः। एतच्चोक्तराजवंशकरीरधीरवीरवरमहाराजश्रीखड्गबहादुरमल्लप्रणीतायां विश्वसेनवंशवाटिकायामपि षष्ठपरिच्छेदे महाराजनारायणमल्लवर्णनावसरे "इन्ह के

समय में अच्छे २ पण्डित वर्तमान थे, जिन में पिण्डी के त्रिपाठी विश्वम्भरपण्डित बड़े विद्वान् थे, इन्हो ने राजा की आज्ञा से स्मृतिधर्मसारनामक बड़ी पुस्तक बनाई" इत्युक्तम् । महाराजनारायणमल्लपित्रे वर्षीयसे महाराजभीममल्लाय च पञ्चाधिकषोडशतमे ख्रिस्ताब्दे भारतेश्वरेण जहांगीरशाहेन पारितोषिकं दत्तम् ( तुजुकेजहांगीरी ) अतश्च महाराजनारायणमल्लः ख्रिस्ताब्दानां सप्तदशाब्द्याः प्रथमपाद आसीदिति निश्चीयते ।

ततश्च गोरक्षपुरमण्डलान्तर्गतमध्यपल्ली ( मझौली) राजधानीप्रान्ते ख्रिस्तसप्तदशशताब्द्यारम्भे विश्वम्भरपण्डितोऽभूदिति न तिरोहितम् ॥

एवञ्चाद्ययावदपि मध्यपल्लीराजपरम्पराऽधीनोऽपि दैववशादमुद्रित एवायं ग्रन्थ आसीत् । अत एव च विश्वसेनवंशवाटिकाभागस्यानन्तरोद्धृतस्य टिप्पणे "यह पुस्तक वर्तमान है, अभी छपी नहीं है, विचार है कि छपवा दी जाय" इत्युक्तम् । एतद्ग्रन्थान्तिमश्लोके स्वं त्रिपाठ्यपरपर्य्यायं त्रिवेदिनं मध्ये-ग्रन्थं च "अस्मात्पितामहचरणाः श्रीनीलकण्ठदीक्षितास्तु" इति स्वपितामहं दीक्षितं वदता ग्रन्थकृता तदाप्रभृति सम्प्रतियावत् प्रचलिता जनश्रुतिः सत्याप्यते, सा यथा " पिण्डीग्रामत्रिपाठी नीलकण्ठशर्म्मा मध्यपल्लीराजप्रार्थनया मध्यपल्लीसमीपस्थवनकटाग्रामे यज्ञे दीक्षितो भूत्वा दीक्षितपदवीमवाप " इति ॥

मध्यपल्लीमहाराजखड्गबहादुरमल्लस्याभिप्रायमनुसरन्ती तद्धर्मपत्नी स्वनामधन्या महाराज्ञी चण्डिकाप्रसाददेवी तत्पुत्रः श्रीमहाराजकोसलकिशोरप्रसादमल्लश्चैतद्ग्रन्थमुद्रणाय सोत्साहावभूताम्, तयोराज्ञया च काशीचौखम्भासंस्कृतसिरीजाधीशहरिदासगुप्ताय मुद्रणार्थमयं ग्रन्थोऽर्पितः, योऽयं तेन मुद्रयित्वा

प्रकाशितस्तत्रभवद्भ्यो धीमद्भ्य उपाह्रियते ।

धारेश्वरश्रीभोजदेवसभासज्जगद्विख्यातमहाकविश्रीबाणभट्ट-भामस्य विश्वविख्यातस्य महाकविमुकुटमाणिक्यवत्समहर्षिवं-शावतंसमिश्रोपनाममयूरभट्टस्य ब्राह्मण्यां भार्य्यायां प्रवर्तितना-गेश्वरमिश्रमूलकवंशपरम्परस्य द्वितीयस्यां क्षत्रियायां भार्य्या-यां शाश्वतो मातृजातीयः क्षत्रियप्रवरोविश्वसेनः पुत्रोऽजनि । स एवास्य मध्यपल्लीं (मझौली) राजवंशस्य कूटस्थस्तद्वंश्या एव चा-न्येऽपि विश्वसेनाः क्षत्रियाः, मयूरवंश्यत्वादेव चास्य राजवंश-स्येयमधस्तनी मायूरीमुद्रा ( माटो ) ग्रन्थस्य मुद्रणे राजाज्ञाम-भिव्यञ्जंती जागर्ति—इति ॥

निवेदको

मङ्गलप्रसादशर्म्मा ।



# अथ शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| विधेयस्वकर्मण | विधेयस्य कर्मणः | ४ | २८ |
| पारक्याम- | पारक्यम- | ८ | ४ |
| न्हि- | ह्नि- | १३ | १ |
| मृणमयीं | मृन्मयीं | ३५ | २४ |
| प्रवालमुक्ता- | प्रवालयुक्ता- | ७३ | २३ |
| षोठश | षोडश | ७४ | १६ |
| दरिद्य | दारद्य- | ७७ | ६ |
| च्छोद्ध- | च्छेद्धि- | ८९ | २ |
| र्मध्यांह्निक- | र्माध्याह्निक- | १०० | १६ |
| का | कान् | १०१ | २ |
| दृश | देश- | १०२ | १६ |
| मकोका- | मशोका- | १११ | ८ |
| सीद्वहूजननीरात्तै | सिन्दूरजनितै रागै | ११२ | ६ |
| हृष- | झष- | ११२ | ७ |
| संभु- | संधु | ११२ | १७ |
| पीतमासान्विप्रो ! | युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् । | १२६ | १६ |
| दस- | दश- | १२७ | २४ |
| मत्रैव तत्र- | मत्रैव तिलदानं च शस्यते । क- | | |

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्ति |
|---|---|---|---|
| | म्वलाजिनरत्नानि मोचकौ पापमोचकौ ॥ उपानद्दानमत्रैव कथितं-सर्वकामदम् । यत्र वा तत्र वा | ११३ | १६ |
| तुर्यदा | तु यदा | १५९ | १२ |
| पाशत- | पासन- | १६१ | १४ |
| कार्य्ये नशुद्धे | कार्य्यं न शुद्धे | १६१ | २४ |
| चान्द्रसमः | चान्द्रमसः | १९५ | १२ |
| मत्याब्दिकं | मसाब्दिके | १८० | १८ |
| सीख- | सखि- | १८९ | १३ |
| पैत्रि- | पैतृ- | १९८ | १३ |
| दनुतिष्ठतम् | दनतुष्ठितम् | २०५ | ५ |
| मृण्मयं | मृन्मयं | २१८ | १३ |
| ब्राह्मणसमाय ? | ब्रह्मणे शिवाय | २१९ | २ |
| चैतस्मि- | चेत्तस्मि- | २२० | १३ |
| भवन्त्येते | पृथक्शौचाः | २२९ | ७ |
| क्षतं | घृतं | २४५ | २० |
| मेव । क्षुद्रसमिधा | मेवं क्षुद्रसमिधां | २४५ | १३ |
| षष्ठाय- | षष्ठाया- | २५४ | २४ |
| शुक्लानि | शुक्तानि | २६५ | २३ |
| ब्राह्मणे न | ब्राह्मेण | ३०४ | १० |
| ऽङ्करः | ऽङ्कुरः | ३१५ | २५ |
| सीमां | सीम्नां | ३२८ | १२ |

# सूचीपत्रम् ।




॥ श्रीः ॥

श्रीगणेशाय नमः

# अथ स्मृतिसारोद्धारप्रारम्भः ।

कृपाशालि जगत्पालि धनुःपाणि सुवाणि यत् ।
स्फुरत्सीतं घनस्फीतं श्यामधाम नमाम तत् ॥ १ ॥
प्रभुर्यः कौशल्याहृदयदृढशल्यापहरणो
गभीरश्चाश्चल्यानधिकरणबाल्यादिरपि यः ।
वयं पाल्यास्तस्य प्रबलतरकल्याहितभया-
दहल्याकल्याणाकरचरणरेणोर्भगवतः ॥ २ ॥
अहं प्रवृत्तः स्मृतिसागरांभसां विलोडनेऽल्पोहविमन्दमन्दरः ।
सुधार्थनिर्णीतिकृते कृपानिधिर्भवेत्सहायो मम पार्थसारथिः ॥३॥
पीताम्बरं रुचिरकुण्डलभव्यगण्ड-
मापीनवक्षसमुदारकिरीटहारम् ।
स्मेराननं नलिननेत्रमशेषसिध्द्यै
वन्दे प्रियं मुदिरमेदुरमिन्दिरायाः ॥ ४ ॥
अस्मिन्काले जनान्वीक्ष्य सालसानल्पमेधसः ।
विश्वंभरेण धर्माणां सारोद्धारो विधीयते ॥ ५ ॥

अथ विधिबोधितकर्मकलापस्य पर्य्यायकतया तदाधारकतया प्रथमं तिथयो निर्णीयन्ते ।

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
त्रिविधविध्युपपादनम् तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ॥

असन्तमप्राप्तौ सत्तां यः प्रापयति प्रवर्त्तयति स विधिस्त्रि-

विधः नित्यविधिर्नैमित्तिकविधिः काम्यविधिश्च । नित्यविधिर्यथा अहरहः सन्ध्यामुपासीत । नैमित्तिकविधिर्यथा पुत्रे जाते नान्दीमुखान् पितॄन्यजेत् । काम्यविधिर्यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेति । ऋतौ भार्य्यामुपेयादिति नियमविधिः, पञ्च पञ्चनखा भक्ष्या इति परिसङ्ख्या । आवश्यकत्वं नियमविधेः परिसङ्ख्यातो भेदकमिति दिक् । पुनर्द्वितीयो विधिः प्रवर्त्तको निवर्त्तकश्चेति, प्रवर्त्तको यथा—

दर्शे स्नात्वा पितृभ्यो यद्दद्यात्कृष्णतिलोदकम् ।
अन्नं च विधिवद्दद्यात्सन्ततिस्तेनवर्द्धते ॥ इति,

निवर्त्तको यथा—अमावास्यायां नाध्यापयेत नाधीयीत नच्छिन्द्यादार्द्रदारु नाद्यादन्नम्परस्येति । तथा, अमावास्यायां न गच्छेत्प्राप्तकालामपि स्त्रियम् । तैलं न च स्पृशेदार्द्रवृक्षादींश्च न खण्डयेदिति । एवमुभयविध्युक्तकर्मकलापाधिकरणत्वेन तिथिनिर्णयस्समुचितः । निर्णयो नाम परस्परविरुद्धार्थानां वाक्यानां विरोधपरिहारेणार्थावधारणम् । उक्तं हि,

तत्त्वे विप्रतिपन्नानां वाक्यानामितरेतरम् ।
विरोधपरिहारोऽत्र निर्णयस्तत्त्वदर्शनम् ॥

स निर्णयस्स्मृतितो भवति स्मृतीनां च वेदमूलकत्वेन प्रामाण्यं न स्वतः । तदुक्तं भट्टपादैः ।

पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा ।
अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते ॥

स्मृतिप्रामाण्यव्यवस्थापनम्

ननुस्मृतीनां न प्रामाण्यनिश्चयः पौरुषेयत्वेन वक्तृदोषशङ्काकलङ्कात् । नोदनात्मकवेदस्यापौरुषेयत्वात्स्वतः प्रामाण्यम् औत्पत्तिकसूत्रपर्यालोचनेन, तत्रौत्पत्तिकपदेन सम्बन्धस्य नित्यत्वं निर्दोषत्वं च प्रतिपादयता पौरुषेयत्वनिराकरणात्, नच

भाष्यकृता प्रवर्त्तकवचनस्य प्रामाण्याभिधानात् स्मृतीनामपि प्रामाण्यमिति वाच्यम्। भाष्यपर्यालोचनया प्रवर्तकापौरुषेयवचनस्यैव प्रामाण्यावधारणात् न श्रुतिस्मृतिसाधारणतादृशवचनमात्रस्य। तस्मादौत्पत्तिकत्वेन पुरुषदोषनिराकरणादनुपलब्धार्थत्वाच्चापौरुषेयनोदनायाः प्रामाण्यं न सवक्तृकनोदनायाः। यदुक्तम्।

औत्पत्तिकगिरा दोषः करणस्य निवार्य्यते।
अबाधाव्यतिरेकेण स्वतस्त्वेन प्रमाणता।
सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा॥ इति।

स्मृतीनां पौरुषेयत्वेनैवंरूपताभावः। तथा च पारमार्ष सूत्रम्। धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति। भाष्यं च शब्दमूलको धर्म इत्युक्तम् नोदनालक्षणोऽर्थो धर्म इति। अतो निर्मूलत्वान्न स्मृतीनां प्रामाण्यम्। न च प्रत्यक्षमूलत्वेन प्रामाण्यम् धर्माधर्मयोस्तदप्रवृत्तेः, न च श्रेयस्करभाष्ये द्रव्यक्रियागुणानामपि धर्मत्वकथनात्प्रत्यक्षगम्यत्वं, फलसाधनत्वरूपेण धर्मत्वात्, फलस्य च जन्मान्तरभावित्वाद्धर्मरूपेण प्रत्यक्षविषयत्वासंभवात्। यदाह वार्तिककृत्। अष्टकादिस्वर्ग्गादिसाध्यसाधनभावम्प्रत्यक्षादीनि तावन्न गृह्णन्तीति, प्रत्यक्षमूलकत्वाच्चानुमानादिकमपि निरस्तम्, नचास्तु वेदमूलकत्वेन प्रामाण्यम् अनुपलम्भात्। न ह्यनुपलभ्यमानो वेदः स्वप्रमेयं प्रतिपादयितुमीष्टे। नचायं प्रत्यक्षेणोपलभ्यते अनुच्चार्य्यमाणत्वात्। उच्चार्यमाणत्वे वा स्मृतिप्रणयनवैयर्थ्यात्। नाप्युत्सन्नशाखामूलत्वमतिप्रसङ्गात् पाखण्डस्मृतीनामपि प्रामाण्यप्रसङ्गात् मृतसाक्षिकव्यवहारवत्। यथा, मद्व्यवहारं योजानातिस्म स साक्षीमृतः, तथा मन्मतं प्रलीनशाखायामस्तीति पाखण्डोऽपि स्वमतप्रामाण्यं निश्चापयेदिति। नापि नित्यानुमेयश्रुतिमूलत्वम्। अन्धपरंपरापातात्। नच विकीर्णशाखामूलत्वं स्मृतिप्रणयनवैयर्थ्यात्। विकी-

र्णशाखानां सञ्चरणादेव क्रियासिद्धेः, अतः स्मृतिप्रामाण्यं विरहिमानोरथिकमैथुनमनुकरोतीति । अत्रोच्यते, वेदप्रामाण्याभ्युपगन्तॄणाम्मन्वादीनामष्टकादिषु धर्मत्वस्मरणं स्वकृतस्मृतेर्वेदमूलकत्वं विनानुपपन्नं । कथमन्यथा वेदस्यैव प्रामाण्यम् वेदमूलकस्य वेति मन्वादयोनिश्चिनुयुः, दूरे वेदामूलकस्मृतिप्रणयनं तेषां, कथमनुच्चारितानां मूलत्वोपपत्तिरितिचेत् । उच्चार्यन्त एव स्मृतिमूलभूताः श्रुतयः । संप्रत्यपि केचिद्धर्माः कस्यांचिच्छाखायामन्ये तदन्यस्यामिति शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भः, एकस्यामपि शाखायां केचिद्धर्माः क्वचिदुक्ताः केचिदादावन्ते च केचिदिति विप्रकीर्णानामनुसन्धानं मन्दधीभिर्दुष्करमिति क्रमेणैकत्रोपसंहारार्थं स्मृतिप्रणयनमिति युक्तमवधारयामः । तदुक्तं भट्टपादैः, शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः, नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न दृश्यत इति । सम्प्रदायोच्छेदभीतैर्वेदवाक्यान्येव संहृतानि विशिष्टानुपूर्व्या । व्यवस्थितो हि स्वाध्यायोऽध्येतव्य इतिश्रूयते । स्मार्त्तश्चाचारः क्वचित्कस्यांचिच्छाखायां तत्र यदि तावन्त्येव वाक्यान्युद्धृत्याध्यापयेयुस्तदा क्रमान्यत्वात्स्वाध्यायविरोधः स्यादिति, यद्वै किञ्चिन्मनुरवदत्तद्भेषजमभवदिति श्रुत्या मनुवचनस्यादृतत्वात्सुतराम्प्रामाण्यम्, एवं सदाचारादीनामपि श्रुतिमूलकत्वेन प्रामाण्यमवधार्य्यम् । विवेकस्तु—

आचाराच्चु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन ह्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥ इति ।

अलमधिकेनेति । मन्वादिशास्त्राणां तु वेदमूलत्वेन निरपेक्षप्रमाणानामपि परस्परसाकांक्षत्वम्, अन्यथा क्वचिदधिकाङ्गकर्मविधिः क्वचिन्न्यूनाङ्गकर्मविधिरिति परस्परविरोधादप्रामाण्यप्रसंगः । सर्वशाखाधिकरणन्यायेन सर्वत्र विधेयस्वकर्मण एकत्वे

प्रधानाविरोधान्नाप्यङ्गविरोधः । यस्मिन्शास्त्रे न्यूनाङ्गविधिस्त-च्छास्त्रं स्वोक्ते निरपेक्षप्रमाणमित्युक्तेंऽशे शास्त्रान्तरमपेक्षत इति नात्यन्तनिरपेक्षता अत एवाविरोधान्नाप्रामाण्यम्। उक्तं च।

यन्नाम्नातं स्वशाखायां पारक्यामविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥ इति संक्षेपः॥

अथ द्वैधपरिहारः।

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक्॥
श्रुतिस्मृतिविरोधेतु श्रुतिरेव गरीयसीति।

ननु तथापि कालनिर्णयो व्यर्थः कर्मण एव निर्णेयत्वात्, यदुक्तम्, कालेहि कर्म चोद्यते नकर्मणि कालः, इति चेन्न, पौर्णमास्यां पौर्णमास्यां यजेत अमायाममायां यजेत इत्यादिश्रुत्या कालकर्मसम्बन्धस्य विधेयत्वप्रतिपादनात्। यदाह गार्ग्यः। तिथिनक्षत्रवारादि साधनं पुण्यपापयोः, प्रधानगुणभावेन न स्वातन्त्र्येण ते क्षमा इति।

अथ कालनिर्णये सम्वँत्सरस्य मुख्यत्वात्सम्वँत्सरो निर्णीयते। ब्रह्मसिद्धान्ते। चान्द्रसावनसौराणां मासानां तु प्रभेदतः। चान्द्रसावनसौराः स्युस्त्रयः सम्वँत्सरा अमी, यद्यपि नाक्षत्रोपि मासस्तथापि नाक्षत्रो नाब्दो गण्यते, तथाच हेमाद्रिसिद्धान्तकारिका, तत्तन्मासजमासषट्कयुगतस्त्र्यब्दी भमानं विनेति। ज्योतिश्शास्त्रे संवत्सरस्य पञ्चविधत्वमुक्तम्। सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः। मातुलयातालातुलविमलवराडाश्च वत्सराः पञ्च। तदुक्तम्। चान्द्रः संवत्सरो ज्ञेयस्तिलकादिव्रतेषु च। सौरस्य तु सुजन्माक्षिव्रतादावुपयोगिता। सावनस्य तु सत्रादावुपयोगः प्रकीर्तितः। नाक्षत्रवार्हस्पत्योस्तु ज्योतिश्शास्त्रोपयोगिता। सच द्वादशमासा-

त्मकः, द्वादशमासाः सम्वँत्सरइतिश्रुतेः । मलमासपातेतु त्रयोदश मासाः स्युः । तत्र षष्ठिदिनात्मक एक एव मासः श्रौतद्वादशमासतोपपत्तये गणनीयः । उक्तंहि, षष्ठ्यातु दिवसैर्मासः कथितो बादरायणैरिति । अयनं द्विविधम् दक्षिणोत्तरभेदात् । तच्चायनं सौरमेव ऋतुत्रयपरिमितंच, तथाच संग्रहः, सौरर्तुत्रितयं प्रदिष्टमयनमिति० । अयनोपयोगश्च सत्यव्रतेन दर्शितः । देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ । दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात् । ऋतुर्मासद्वयात्मकः सच षड्विधो वसन्तादिः, ऋतुः सौरश्चान्द्रोपि षोढैव गण्यः, षड्धा ऋतव इतिश्रुतेः । यत्तु द्वादश मासाः पञ्चर्त्तवइति श्रूयते तत्प्रयाजानुमन्त्रोपयोगितया हेमन्तशिशिरयोरेकीकरणाभिप्रायेण, पञ्चर्त्तवो हेमन्तशिशिरयोस्समासेनेतिश्रुतेः । उपयोगश्च वसन्ते ब्राह्मणमुपनयीतेत्यादिश्रुतिसिद्धिः । चान्द्रवर्षस्य चैत्रशुक्लप्रतिपद्युपक्रमः चान्द्रवसन्तस्यापि तथैवेति, सौरयोरब्दवसन्तयोस्तु विकल्पेन मीनमेषावुपक्रमौ कलौ ज्ञेयौ । तदुक्तं संग्रहे, सौरश्चान्द्र इति द्विमासज ऋतुर्द्वेधा वसन्तादिकश्चान्द्रोऽब्दो मधुशुक्लगप्रतिपदारम्भो वसन्तस्तथा । चैत्रादब्दवसन्तयोरविजयोर्वा मीनमेषौ मुखमिति । मासश्चतुर्विधः प्रोक्तः सावनादिप्रभेदतः, त्रिंशद्दिनात्मकस्तत्र सावनः परिकीर्त्तितः । एकस्मात्संक्रमादासंक्रान्ति सौरोऽभिधीयते, शुक्लपक्षादिकृष्णान्तश्चान्द्रः स्यादन्यथापि वा । सर्वनक्षत्रभुक्त्या तु नाक्षत्रो मासउच्यते । उपयोगश्च, सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः, आब्दिके पितृकार्य्येवा चान्द्रोमासः प्रशस्यते । शुक्लकृष्णप्रभेदेन पक्षोपि द्विविधो मतः, सावनादिषु भेदेन पक्षश्च द्विविधोमतः । सावनादिप्रभेदेन दिवसोपि चतुर्विधः । नाडीषष्ठिमितस्तत्र सावनो दिवसः स्मृतः । त्रिंशांशकश्चार्कराशेर्दिवसः सौरउच्यते । चान्द्रस्तु तिथ्यवच्छिन्नो

अयनर्तुमास पक्षभेदाः

भात्रधिश्च भभूः स्मृतः। अथ मुहूर्त्तस्वरूपं गार्ग्यः। अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः। द्वौ निमेषौ त्रुटिर्नाम द्वौ त्रुटी तु लवः स्मृतः, द्वौ लवौ क्षण इत्युक्तः काष्ठा प्रोक्ता दशक्षणा, त्रिंशत्काष्ठा कला प्रोक्ता कलात्रिंशन्मुहूर्त्तकः, तेतु त्रिंशदहोरात्र इत्याह भगवान् हरः। महाभारते, नाडीद्वयं मुहूर्त्तस्तु ते पञ्चदश वासरः। एवं रात्रिस्तथा-पक्षमासर्त्वयनवत्सराः, कर्षेणाभ्यधिकैः षड्भिः पलैस्ताम्रस्य भाजनम्। त्रिंशदङ्गुलविस्तारमुच्छ्रितं चतुरङ्गुलम्, स्वर्णमाषेण कृत्वाच चतुरङ्गुलकाष्ठिकाम्, मध्यभागे तया विद्धं नाडिका घटिका स्मृता, तद्रन्ध्रेणाम्भसा पात्रं यावत्कालेन पूर्यते, स कालो नाडिका तस्याः षष्ठिभागो विनाडिका। स्वर्णमाषादिमानञ्चागस्त्येनोक्तम्। यवः स्यात्सर्षपैः षड्भिर्गुञ्जाच स्यात्रिभिर्यवैः। गुञ्जाभिः पञ्चभिश्चैको माषकः परिकीर्त्तितः, भवेत्षोडशभिर्माषैः सुवर्णस्तैः पुनःस्मृतः, पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्। कर्षस्तु पलस्य चतुर्थभागः सएव सुवर्णोपि। तदुक्तं त्रिकाण्ड्याम्। मानन्तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः। ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयमिति। इतिसंवत्सरादिनिरूपणम्।

माषादितुलामानम्

अथैकभक्ताद्युपयोगितया दिवसभागो निरुप्यते। तत्र स्कान्दे द्विधा विभागउक्तः। आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्तथापरः, आवर्त्तनं मध्यंदिनम्। शातातपोऽन्हस्त्रैविध्यमाह। पूर्वाह्णो मध्यान्होऽपराह्णइति। पूर्वाह्णो वै देवानां मध्यान्होमनुष्याणां अपराह्णः पितॄणामिति। चतुर्द्धाऽपि, पूर्वाह्णः प्रहरः सार्द्धो मध्यान्हः प्रहरात्मकः। अपराह्णोऽर्द्धयामात्मा सायान्हस्तुर्ययामक इति। व्यासेन पञ्चविधतान्ह उक्ता, मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः। मध्यान्हस्त्रिमुहूर्त्तः स्यादपराह्णश्च तादृशः। सायान्हस्त्रिमुहूर्त्तः

स्यात्सर्वकर्मसु गर्हितः । शातातपेयी श्रुतिरपि पञ्चविधत्वमाहाह्नः । आदित्यस्त्वेव ऋतवो यदैवोदेत्यथवसन्तो यदा सङ्गवोऽथग्रीष्मो यदा मध्यन्दिनो अथवर्षा यदापराह्णोप्यथशरद् यदैवास्तमेत्यथ हेमन्तइति । माधवीयेतु पञ्चदशधा विभागोदर्शितः । शङ्खः । रौद्रश्चैत्रश्च मैत्रश्च तथा चारभटः स्मृतः, सावित्रश्च जयन्तश्च गान्धारः कुतपस्तथा, रौहिणश्च विरिञ्चिश्च विजयो नैऋतस्तथा । महेन्द्रो वरुणश्चैव भागः पञ्चदशः स्मृतः । एषां विभागानां मध्ये क्वचित्कश्चिदुपयुज्यते । राजमार्त्तण्डेतु श्रुत्यनुगृहीतत्वात्पञ्चधाविभागस्यैव मुख्यत्वमुक्तम् । क्षयवृद्धिसाम्यवशाद्दिनद्वयव्यापिन्यां तिथौ विहितं कर्म कुत्र कार्यमिति सन्देहे निर्णयार्थमाह गोभिलः, पर्वोदर्पस्तथाहिंसा त्रिविधं तिथिलक्षणम्, धर्माधर्मवशादेव तिथिस्त्रेधा विवर्त्तते इति । पर्वो दिनद्वयेपि तिथ्योः साम्यम्, दर्पः पूर्वतिथ्यपेक्षयाऽग्रिमतिथेरधिकत्वम्, हिंसा पूर्वपूर्वापेक्षयाऽग्रिमाग्रिमतिथेर्न्यूनत्वम् । तत्र निषेधः कालमात्रापेक्षः विधिस्तु पूज्यतिथिविषयः, तिथेः पूज्यत्वं नाम पूर्वविद्धात्वेन परिविद्धात्वेन वा विहितत्वम् । तदाहगार्ग्यः । निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः, विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके । तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता, निषेधस्तु निवृत्तात्मा कालमात्रमपेक्षते, तिथीनां पूज्यत्वधीर्वेधज्ञानाधीनेति वेधमाह पैठीनसिः । पक्षद्वयेपि तिथयस्तिथिं पूर्वामथोत्तराम् ।

तिथिवेधनिरूपणम्

त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योयं विधिः स्मृतः । उभयपक्षीयप्रतिपदाद्यास्तिथयः सूर्योदयादूर्द्ध्वमवर्त्तिनीभिः षड्भिर्नाडीभिः पूर्वतिथ्या विद्धाःस्युः, एवंतिथ्यादिवर्त्तिनीभिः षड्भिरेव नाडीभिरर्थात्सायाह्नव्यापिनीभिरुत्तरतिथ्या विद्धाः स्युरिसर्थः, अयञ्च त्रिमुहूर्त्तादिवेध उदयादूर्द्ध्वम्पूर्वतिथ्या अस्तमयात्प्राक्-

परतिथ्येति गम्यते, सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः। वर्द्धमानस्य पक्षस्य ह्रासे त्वस्तमये स्थितेतिवचनात् । वृद्धवशिष्ठः—यस्यां तिथावभ्युदियात्सूर्यस्तु त्रिमुहूर्त्तके। स्नानदानजपादिभ्यस्तामेवोपक्रमेत्तिथिम् । वशिष्ठः—त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी, त्रिमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी । स्कान्दे । यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्तापि या भवेत् । शिवरहस्ये सौरपुराणे- यां प्राप्यास्तमुपैत्यर्क्कः सातु चेत्त्रिमुहूर्त्तिका, धर्मकृत्येषु सर्वेषु सम्पूर्णेति विदुर्बुधाः । क्षये पूर्वा प्रकर्त्तव्या वृद्धौ ग्राह्या तथोत्तरा, तिथेस्तस्यास्त्रिक्षणाया ह्रासवृद्धी न कारणम् । त्रिक्षणायास्त्रिमुहूर्त्तायाः । स्कान्देतु—तस्यास्तु त्रिमुहूर्त्तायाइति तृतीयःपक्षः। अत्र हेमाद्रिः त्रिमुहूर्त्ताया ह्रासवृद्ध्योः कारणत्वं पितृकार्ये न पुनर्व्रतोपवासादिषु तेषु युग्माग्निवाक्येन व्यवस्थाकरणादिति पूर्ववाक्येन सह विरोधं पर्यहार्षीत् । भविष्ये । व्रतोपवासनियमे घटिकैका यदा भवेत्, सा तिथिस्तदहोरात्रं पित्रर्थे चापराह्णिकी । पाद्मे—व्रतोपवासनियमे घटिकैका यदा भवेत्, उदये सा तिथिर्ज्ञेया श्राद्धादावस्तगामिनी । व्यासः—व्रतोपवासस्नानादौ घटिकैका यदा भवेत्, तामेव तिथिमाश्रित्य कुर्यात्कर्माण्यतन्द्रितः। बौधायनः। आदित्योदयवेलायां या स्तोकापि तिथिर्भवेत्, पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति। यदा दिनद्वयेप्यल्पकर्मकालव्यापिनी तदोदाहरिष्यमाणैर्वृद्धिह्रासादिवाक्यैर्युग्मादिवाक्यैर्यथायोग्यं पूर्वा परा वा ग्राह्या। अत्र पक्षद्वये संपूर्णतिथिसंपादितमिव तिथिस्पर्शमात्रेणापि कृतं कर्म सगुणं भवतीति ज्ञापयितुमाह देवलः। यांतिथिं समनुप्राप्य उदयं याति भास्करः, सा तिथिः सकला ज्ञेया स्नानदानजपादिषु। विष्णुधर्मोत्तरे स्नानदानादिकर्मस्विति पाठः। व्यासः-

तिथिस्पर्शेपि कार्य्यकरणम्

उदयन्नेव सविता यां तिथिं प्रतिपद्यते, सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु । देवलः । यां तिथिं समनुप्राप्य अस्तं याति च भास्करः, सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु । विष्णुधर्मोत्तरे । सा तिथिस्तदहोरात्रं यस्यामभ्युदियाद्रविः, तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् । सा तिथिस्तदहोरात्रं यस्यामस्तमियाद्रविः, सा तिथिः सकला ज्ञेया ह्रासवृद्धी न कारणम् । अत्रोदयगामितिथेः सम्पूर्णत्वकथनं परविद्धोपादेयतिथिविषयम् । अस्तकालीनतिथेः संपूर्णत्वकथनं पूर्वविद्धोपास्यतिथिविषयमिति निर्णयाम्भोजभानौ । निर्णयामृते तु—उदिते दैवतं भानौ पित्र्यं चास्तङ्गते रवौ, द्विस्त्रिर्मुहूर्त्तमन्हो या सा तिथिर्हव्यकव्ययोरिति । उदयाद्द्विमुहूर्त्तव्यापिन्यां दैविकं कर्म्म, अस्तमयात्त्रिमुहूर्तव्यापिन्यां पित्र्यं कर्म कार्य्यमिति । एवमुदयास्तमयव्यापिनीनां तिथीनां सामस्त्येन प्राशस्त्याभिधानात्पूर्वापरवेधोप्युदयास्तमयकालीन एवेत्यवसीयत इति व्याख्यातम् । राजमार्तण्डे तु—एतच्च साकल्यम्मन्वादिव्यतिरिक्तविषयम् । तथाच संग्रहकारिका । मन्वादिग्रहपातवैधृतियुगादिष्वेव सत्सु क्रिया, नोतेषां सकलत्वमिष्टमृषिभिः सायोदयस्थत्वतः । याभाभ्यञ्जनदन्तशुद्धिजलधिस्नानेषु तात्कालिकी, व्रतपारणमृत्युजन्मसु तिथेः साकल्यमत्रापिन, इति विशेषोदृश्यते । स्कान्दे । नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा, भूतोऽष्टादशनाडीभिर्दूषयन्त्युत्तरां तिथिम् । नागः पञ्चमी, दिक्दशमी, भूतश्चतुर्द्दशी, एतद्वचनं तु दिनद्वयेपि कर्मकालव्यापितिथिसम्भवे द्रष्टव्यम् । उपवासविषयता तु तस्य नेष्टेति हेमाद्रिः । कालादर्शकृतस्तु द्विमुहूर्त्तघटिकादिवेधं न मन्यन्ते । किन्तु कैमुतिकन्यायेन त्रिमुहूर्त्तवेधप्रशंसापरमाहु स्तत्र, लक्षणयार्थवादकल्पनायां च न्यास्यत्वात्, कथं तर्ह्यत्रविरोधपरिहारः,

उच्यते। उपवासव्रतादौ तावत्त्रिमुहूर्त्ता ह्रासवृद्ध्यनादरेण ग्राह्या। तिथेस्तस्यास्त्रिक्षणाया ह्रासवृद्धी न कारणमित्युक्तवचनात्। त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनीत्यादिवाक्यस्य श्राद्धविषयत्वम्। उपवासादौ घटिकामात्रतिथेर्विधिप्रतिषेधयोर्ह्रासवृद्धी न कारणम्, यदातु तिथेर् वृद्धिः साम्यं वा स्यात्तदा घटिकामात्राप्युपवासादौ ग्राह्या यदा तिथिक्षयस्तदानेति सर्वमवदातम्। यथाहोशना व्याघ्रश्च। पर्व्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्। पर्वदर्पौ परौ पूज्यौ हिंसारुयात्पूर्वकालिकीति व्यासनिगमवचनम्। द्वितीयादिषु युग्मानां पूज्यता नियमादिषु, एकोद्दिष्टविवृद्ध्यादौ ह्रासवृद्ध्यादिनोदना, नियमादिष्विसादिना पितृकर्मव्यतिरिक्तोपवासव्रतादिसमस्तकर्मणां संग्रहः। एकोद्दिष्टादीत्यनेन विवाहाद्यङ्गभूतवृद्धिश्राद्धव्यतिरिक्तश्राद्धानां च संग्रहः, विवृद्ध्यादावित्यनेन तिथिविशेषविधेयमाङ्गलिकश्राद्धपरिग्रहः। निर्णयामृते तु—नागोद्वादशनाडीभिरिति वाक्यस्य स्वोत्तरतिथिविषयत्वमुक्तम्। सामान्यविहितत्रिमुहूर्त्तवेधस्य पूर्वतिथिविषयत्वम्। चतुर्दशी पञ्चमी च तथाच दशमी तिथिः, पूर्वान्तिथिं दूषयन्ति त्रिभिरेव मुहूर्त्तकैरिति कौर्मवचनादिति। ननु दशमी पञ्चदशनाडीभिरेकादशीं विध्यतीति यदुक्तं तद्भविष्यपुराणस्मृतिवाक्याभ्यां विरुद्ध्यते, ते वाक्ये यथा—अरुणोदयकालेतु दशमी यदि दृश्यते, पापमूलं तदाज्ञेयमेकादश्यामुपोषणम्। तथा। कलार्द्धेनापि विद्धास्यादशम्येकादशी यदि, तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेदिति चेत्सत्यम। अरुणोदयादिसर्वप्रकारवेधस्तु वैष्णवोपवासविषयः पञ्चदशनाडीवेधस्तु वैष्णवव्रतव्यतिरिक्तव्रतविषयः। तदुक्तं निगमे। सर्वप्रकारवेधोयमुपवासस्य दूषकः, सार्द्धसप्तमुहूर्त्तस्तु वेधोयं बाधते व्रतमिति। स्का-

एकादशीवेधविचारः

न्दे। प्रदोषव्यापिनी ग्राह्या सर्वनक्तव्रते तिथिः, उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः। अत्र हरिनक्तव्रतस्याप्यौदयिकतिथौ विधानं किमुतोपवासस्येति अह्लाडनाथः। निर्णयांभोजभानौ तु विशेषः कश्चिदस्ति, तथाहि ब्रह्मवैवर्त्ते—कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः, योगवेधौ ममाचक्ष्व ययोर्दुष्टमुपोषणमिति प्रश्ने, उत्तरम्, या तिथिः स्पृशते राजन् प्रातरर्क्कावलोकिनी,। स वेध इति विज्ञेयो योगः सूर्योदये नतु। यातिथिः प्रातःस्पृशतइति व्यवहितेनान्वयः। नचैतदेकादशीपरं तद्वेधस्यारुणोदये गर्हितत्वात्। तस्माद्यास्तिथयः परविद्धात्वेनोपादेयास्ता उदये घटिकामात्रा अपि ग्राह्या इतिसिद्धम्।

अथ पूर्वविद्धतिथिनिर्णयः। यदा तु युग्मदिनेऽस्तमयात्प्राङ्न दृश्यते अयुग्मदिने तूदयास्तसम्बन्धिनी तदा प्रातस्तन्येव ग्राह्या युग्मदिनसम्बन्धिन्याः क्रियानर्हाया असत्कल्पत्वात्। यदातु युग्मदिनेऽस्तमयात्प्राक् न दृश्यते अयुग्मदिनेत्वस्तात्प्रागेव समाप्यते तत्र जावालिगौतमौ—अतस्स्युस्तिथयः पुण्याः कर्मानुष्ठानतो दिवा, नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यत इति, तस्मादस्तात् प्राक् समाप्ताप्यौदयिक्येव ग्राह्येति। हेमाद्रिरप्येवम्। स्कान्दे। प्रतिपत्प्रमुखाः सर्वा उदयादोदयाद्रवेः, सम्पूर्णा इतिविज्ञेया हरिवासरवर्जिताः। या तु सम्पूर्णा भूत्वा घटिकादिवृद्ध्याऽग्रिमदिने याति सा पूर्वोपादेया, विप्रतिषिद्धसमवाये भूयसीस्यात्सधर्मत्वमितिन्यायात्। उपवासे तु सा सुतरां ग्राह्या तस्याहोरात्रनिष्पाद्यत्वात्। यत्तु—तिथिः सशल्या परिवर्जनीया धर्मार्थकामेषु बुधैर्मनुष्यैः, विहीनशल्याऽपि विवर्जनीया यद्यग्रतो वृद्धिमुपैति पक्षः इतिवचनम्। तदेकादशीविषयम्। सशल्या दशमीविद्धा, विहीनशल्या सम्पूर्णैकादशी। यदि श्वो वृद्धि-

वशात् द्वितीयेऽन्हि स्वल्पापि तदा सम्पूर्णामपि त्यक्त्वोत्तरा ग्राह्या, यथा मलिम्लुचः पूर्वो दैवो मासस्तथोत्तरः, त्याज्या तिथिस्तथा पूर्वा वृद्धौ ग्राह्या सदोत्तरेति वचनात् इतिदिक्।

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे।
सामान्यसमयनिर्णयनामाऽगात्प्रथम उद्धारः॥ १॥

---

अथैकभक्तादिव्रतानां स्वरूपं कालश्च निरूप्यते। तान्येकभक्त-नक्तायाचितोपवासभेदाच्चतुर्द्धा। तत्रैकभक्तलक्षणम् स्कान्दे। दि-नार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमितिप्रोक्तमतस्त-त्स्याद्दिवैव हि। एतच्चैकभक्तव्रतं मध्याह्नव्यापिन्यां तिथौ कार्य्यम्। स्मृतिसंग्रहे—मध्याह्नव्यापिनी सा स्यादेक-भक्ते सदा तिथिः। बौधायनः। उदये तूपवासस्य नक्त-स्यास्तमये तिथिः। मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः। मध्याह्नस्य षड्घटिकात्मकत्वेनाग्रिमघटिकात्रये एकभक्तं कार्य्यम्। दिनार्द्धसमयेऽतीते इतिवचनात्। हेमाद्रिणातु—मध्याह्नान्त्यदलै-स्त्रिभागदिवसे स्यादेकभक्तव्रतमिति त्रिधाविभागोऽह्नः प्रोक्तः, फलतो न विशेषः, अनन्तभट्टादिभिस्तु पञ्चधाविभाग एव दर्शितो न त्रिधेति, यदातु पूर्वदिनापेक्षया परदिनेऽधिकमध्याह्नव्यापिनी तिथिस्तदा परदिन एकभक्तम् बहुमुख्यकर्मकालव्यापित्वात् तिथिं-वृद्ध्या दर्पत्वाच्च। षर्वदर्पौ परौ पूज्यावितिवचनात्। कर्मणोयस्य यः कालस्तत्कालव्यापिनी तिथिः, तया कर्माणि कुर्वीत ह्रासवृ-द्धी न कारणम्, यो यस्य विहितःकालः कर्मणस्तदुपक्रमे। विद्य-मानोभवेदङ्गं नोज्झितः प्रक्रमेणतु। यदा दिनद्वये मुख्यकालव्या-पिनी तदा पूर्वैव ग्राह्या, तिथिक्षयेन हिंसात्वात्, हिंसा स्यात्पूर्वका-

एकभक्तनि-र्णयः

लिकीति वचनात् । यदा चैकस्मिन्दिवसे कर्मतिथिर्भूयसी परस्मिन्नल्पीयसी तदा भूयसी स्यात्सधर्मत्वमिति न्यायात् भूयसी ग्राह्या । यदा दिनद्वयेपि समा तदा परैव, तिथेः साम्येन पर्वत्वादिति । तदुक्तं मोक्षेश्वरे । व्याप्नोति कर्मकालं या तिथिर्भे च दिनद्वये, वेधवाक्येन निर्णीय ग्राह्या पूर्वा परापि चेति । अयञ्च स्वतन्त्रैकभक्तविषयः । अन्याङ्गभूतमेकभक्तं तत्तिथावेव कार्य्यं । तिथिर्यथोपवासे स्यादेकभक्तेपि सा तथेति तूपवासानुकल्पैकभक्तविषयम् । अन्यथा मध्याह्नव्यापिन्यामिवैकभक्तमिति प्रागुक्तेन विरोधः स्यात् । एकभक्तस्य चोपवासानुकल्पतैकादशीविषया । कौर्म्मे । एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् । तदयमर्थः सम्पन्नः । एकभक्तं त्रिविधम् । स्वतन्त्रम्—अनन्तव्रताद्यङ्गम्—उपवासानुकल्पश्चेति, तत्र स्वतन्त्रं मध्यान्हस्य षड्घटिकात्मकत्वेनोत्तरभागे घटिकात्रये कार्यम् । अन्यव्रताङ्गं मुख्यकालात्प्रच्युतमपि गौणकाले विधेयम् । मध्यान्हे पूजयेन्नृपेत्यनन्तव्रतीयवचनात् प्रधानपूजानन्तर्यप्राप्तेः मुख्यकालावरोधेङ्गिगुणविरोधे तादर्थ्यादिति । प्रतापमार्तण्डोऽप्येवम् ।

अथ नक्ततिथिनिर्णयः । नक्तं नाम दिवारात्रिव्रतम् । अहरनशनाद्रात्रौ भोक्तव्यमिति नियमात् दिवारात्रिव्यापिन्यामेव तिथौ कार्यम् । स्कान्दे—दिवारात्रिव्रतं यच्च एकमेव तिथौ स्मृतम्, तस्यामुभयव्यापिन्यां कुर्यादेव व्रतं व्रती । उभयव्यापिन्यामेवेत्यन्वयः । कौर्म्मे—प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता दिवा यदि, तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् । प्रदोषलक्षणं तत्रैवोक्तम् । उदयात्प्राक्तनी सन्ध्या घटिकात्रयमिष्यते । सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः । प्रदोषस्त्रिमुहूर्त्तः स्याद्भवावस्तङ्गते ततः । नक्तं विहितभोजनन्तु नक्षत्रदर्शन एव कर्त्त-

व्यम् । भविष्ये—मुहूर्त्तोनं दिनं नक्तम्प्रवदन्ति मनीषिणः । नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप । नक्षत्रदर्शनादिति ल्यब्लोपे पञ्चमी । ननु—चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकमित्यनेन विरोध इति चेन्न, भोजननिषेधस्य मुख्यसन्ध्याकालविषयत्वात् । खण्डमण्डलोपलब्धार्धादस्मृ तारकोदयान्तो मुख्यः सायंसन्ध्याकालः । किञ्चिदालक्ष्यतारकात् सूर्यदर्शनावधिर्मुख्यः प्रातःसन्ध्याकालः । यदाह याज्ञल्क्यः । प्रातःसन्ध्यां सनक्षत्रां सायंसन्ध्यां सभास्करामित्युपक्रम्य, जपन्नासीत गायत्रीं प्रत्यगातारकोदयात् । सन्ध्यायां प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् । त्रिघटिकात्मकसन्ध्याकालकथनं मुख्यकाले दैवादकृतसन्ध्यस्य तत्पर्यन्तकरणानुज्ञापनार्थं सन्ध्यागर्जितादिविहितानध्यायपरं च । यद्वा भोजननिषेधोयं रागप्राप्तं निषेधति, न वाचनिकं नक्तं भोजनमिति न काप्यनुपपत्तिः । यदेयं नक्ततिथिः पूर्वदिने प्रदोषं व्याप्नोति परदिने अस्तादर्वाक् त्रिमुहूर्तं किञ्चिद्वा स्पृशति तदा पूर्वेव ग्राह्या । प्रदोषव्यापित्वात् । अतः स्युस्तिथयः पुण्या इति पूर्वोक्तजाबालिवचनात् । एकादशीरूपनक्तव्रते विशेषमाह व्यासः-प्रदोषव्यापिनीग्राह्या सदा नक्तव्रते तिथिः । एकादशीं विना सर्वाः शुक्ले कृष्णेपि वा समाः । उभयत्र प्रदोषव्यापित्वे परैव ग्राह्या । जाबालिः—यदि स्यादुभयोरह्नोः प्रदोषव्यापिनी तिथिः । तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः । उभयत्र दिवारात्राविपि । यदातु नक्ततिथिर्द्वयोरह्नोः प्रदोषव्यापिनी न तदापि परैव ग्राह्या । स्कान्दे । प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते, आत्मनो द्विगुणच्छायामतिक्रा-

सन्ध्याकाल-निर्णयः

मति भास्करे। तन्नक्तं नक्तमित्याहुर्न नक्तं निशिभोजनम्। परदिने स्वल्पप्रदोषस्पृगपि नक्ततिथिः परैव शस्ता, दिवारात्रिस्पृश्येव तिथौ विहितत्वात्। सौरनक्ते विशेषमाह सुमन्तुः—त्रिमुहूर्त्तस्पृगेवाऽह्नि निशि वा तावती तिथिः। तस्यां सौरं चरेन्नक्तमहन्येव तु भोजनम्। कौर्म्मे। नरस्य द्विगुणच्छायामतिक्रामेद्यदा रविः, तदा सौरं चरेन्नक्तं न नक्तं निशिभोजनम्। भविष्ये। यस्त्वादित्यदिने भक्त्या भानुं संपूज्य यत्नतः। नक्तं करोति पुरुषः स यात्यमरलोकताम्। सौरनक्ते रात्रौ भोजननिषेधो विशेषः। यतिनक्ते देवलः। नक्षत्रदर्शनान्नक्तं गृहस्थानां स्मृतं बुधैः, यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते। संग्रहोऽपि—भिक्षोर्दिनांशेऽष्टमे, तस्माद्रात्रौ भोजननिषेधाद्दिनाष्टमभागे यतिना नक्तं कार्यम्। इति नक्ततिथिनिर्णयः। प्रसङ्गान्नक्षत्रव्रतकालो निर्णीयते। विष्णुधर्मोत्तरे। उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः, युज्यते यत्र वा तारा निशीथे शशिना सह। अस्तव्यापिनि नक्षत्रे नक्षत्रव्रतं कार्यम्। यदासन्तक्षयवशाद्दिनद्वयेऽप्यस्तकालव्याप्यृक्षं न तदार्द्धरात्रादर्वाक् चन्द्रेण युक्ते ऋक्षे कार्य्यमित्यर्थः। निशीथपदेनार्द्धरात्रादर्वाक्कालो विवक्षितः। यदार्द्धरात्रादर्वाक् तु नक्षत्रं प्राप्यते तिथौ। तन्नक्षत्रे व्रतं कुर्यादतीते पारणं तथेति। स्कान्दे—तत्रोपवासे यदृक्षं तन्निशीथादधो भवेत्। उपवासे यदृक्षं स्यात्तथा नक्तैकभक्तयोः। उपवासे विहितमृक्षं नक्तैकभक्तयोरपिग्राह्यमित्यर्थः। अयाचितव्रतमेकभक्तरूपत्वात् मध्याह्नव्यापिन्यामेव कार्य्यम्। अलाभे परतो याचित्वापि रात्रौ भोक्तव्यम्—अन्यथाऽभ्यत्रद्दहरिष्याम्यंत्रेति सङ्कल्पभङ्गप्रसङ्गात् इत्यल्लाडनाथस्तच्चिन्त्यम्। परद्वारा याचित्वापि रात्रौ भोक्तव्यमिति वचनाभावात्, परतो याच-

नक्षत्रव्रतकालनिर्णयः

ताला्भे स्वयाप्युपवासकल्पनात्। अयाचितमेव भोक्ष्ये इति सङ्कल्पे एवकारप्रवेशे तदन्यत् न भोक्ष्ये इत्यर्थपर्यवसाने अयाचितालाभे उपवासकल्पनस्यौचित्यादिति । अथैकभक्तादिव्रतानामखण्डतिथावेवोपक्रमसमाप्त्योर्विहितत्वात्खण्डाखण्डतिथिस्वरूपं निरूप्यते। सत्यव्रतः—उदयस्था तिथिर्या हि न भवेद्दिनमध्यगा। सा खण्डा न व्रतानां स्यात्तत्रारम्भः समापनम् । वृद्धवशिष्ठः—खण्डाण्डवर्तिमार्तण्डा यद्यखण्डा भवेत्तिथिः, व्रतप्रारम्भणं तस्यामनष्टगुरुशुक्रयुक् । अत्र समाप्तिपदाभावेपि खण्डतिथौ तन्निषेधादखण्डतिथौ समाप्तिः। प्राप्तभावाभावौ विहाय तृतीयप्रकाराभाव इतिभावः।

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।

सिद्धोऽभवद्द्वितीयः शुभैकभक्तादिनिर्णयोद्धारः ॥ २ ॥

---

अथोपवासव्रतादिसाधारणयुग्मतिथिनिर्णयः। निगमे—युग्माग्नियुगभूतानि षण्मुनी वसुरन्ध्रके। रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा। प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महत्फलम्। एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्। युग्मं द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षट् षष्ठी। मुनिः सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी। गौडमैथिलग्रन्थेषु ऋतुभूतानि षण्मुन्योरिति पाठः। द्वितीयायुता तृतीया तृतीयायुता द्वितीया ग्राह्या। एवद्व्यस्तमिति न प्रतिपदा युता द्वितीया न चतुर्थीयुक्ता तृतीया, महाघोरत्वात् महापापजनकत्वात्, पुराकृतकर्मविनाशकत्वाच्च, एवं चतुर्थ्यादियुग्मेषु योज्यम्। एतानि शुक्लपक्षयुग्मानि। चतुर्दशीपूर्णिमायुग्मसाहचर्यात् प्रतिपदमावास्यायुग्मसाहचर्याच्च, एतयोः कृष्णपक्षेऽसम्भवात्। दीक्षि-

शुक्ले युग्मवाक्यम्

तानन्दकरकृते दैत्यनारायणग्रन्थे हेमाद्रिग्रन्थे गौडमैथिलग्रन्थे च, युग्मवाक्यमिदं पक्षद्वयेऽपि समानम् पौर्णमास्यमावास्ययोर्विशेषाऽभिधानाच्छुक्लचतुर्दशीशुक्लप्रतिपदोर्विशेषोऽस्तु द्वितीयादिदशमीपर्यन्तयुग्मस्य पक्षद्वयसाधारणत्वे वाधकाभाव इत्युक्तम् । तन्न, वक्ष्यमाणस्य कृष्णपक्षीयपृथग्युग्मप्रतिपादकवचनस्य बाधकत्वादिति । निर्णयामृते—सम्पूर्णा दशमी कार्या परया पूर्वयाथवा । युक्ता न दूषिता यस्मादतः सा सर्वतोमुखी । तथा—संपूर्णा दशमी कार्या मिश्रिता पूर्वयाथवा । तथा—दशमी च प्रकर्तव्या सदुर्गा द्विजसत्तम । एकादशीव्रताङ्गदशम्येकादशीयुता नियमेषु कार्य्या, तदन्या केवलदशमी नवमीयुतेति तात्पर्य्यम् । सम्पूर्णा शुक्लदशमी, सदुर्ग्गा नवमीयुक्ता । सुमन्तुः—त्रयोदशी तु कर्त्तव्या द्वादशीसहिता मुने । त्रयोदशी शुक्ला । इदं वचनद्वयं दशमीत्रयोदश्योर्विहितकर्माभिप्रेत्य प्रवृत्तमिति न व्यस्तत्वम् । अथ कृष्णयुग्मानि । तत्र प्रतिपदादिका विषमा तिथिः परयुता ग्राह्या, द्वितीयादिसमतिथिः पूर्वयुतेति । यथाहापस्तम्बः ।

कृष्णयुग्मानि प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता । चतुर्थीसंयुता या च सा तृतीया फलप्रदा । पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता च नारद । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी । पूर्वविद्धा प्रकर्त्तव्या परविद्धा न कर्हिचित् । दशमी च प्रकर्त्तव्या सदुर्गा द्विजसत्तम । षष्ट्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी, एताः परयुता पूज्याः पराः पूर्वेण संयुताः । अत्र कृष्णपक्षसम्बन्धस्त्रयोदश्या एव नतुषष्ठ्यष्टम्योः, पञ्चमी च प्रकर्त्तव्येत्युक्तवाक्येन कृष्णपक्षेऽष्टमीसन्वगुक्तवाक्येन च तयोः पूर्वयुतयोरेव पूज्यत्वात् । एकादशी कृष्णपक्षेऽपि द्वादशीयुतैव ग्राह्या, रुद्रेण द्वादशी युक्तेति युग्मे बाधकवाक्याभावात् । नचैतानि शुक्लपक्षे युग्मा-

नीति पूर्वोक्तविरोधः। बहूनि युग्मानि शुक्लपक्षीयाणि नतु सर्वाणीति राजमार्त्तण्डनिर्णयामृतयोरभिप्रायात्। एवं सत्येकस्मिन् दिने द्वितीयादितिथिद्वयसम्भवे द्वितीयादिविहितं कर्म तिथिद्वयभागेपि कर्त्तव्यम्। तृतीयादिव्रतसङ्कल्पोऽपि द्वितीयादिभागे कर्त्तव्यः। सङ्कल्पश्च व्रतादौ प्रारम्भरूपः, उक्तं हि—प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया। ननु यो यस्य काले विहित इतिवचनात् कथमन्यतिथिसङ्कल्पोऽन्यस्यां तिथाविति चेत् सत्यम्।

प्रारम्भस्य रूपम्

तदानीं ज्योतिश्शास्त्रोक्ततिथ्यभावेऽपि स्मृत्युक्ततिथिसत्वात्, यां तिथिं समनुप्राप्येतिवचनात्। नच ज्योतिश्शास्त्रोक्तः प्रथमः कल्पः क्रियताम्। प्रातःकाले तदभावात् प्रातःकालस्यैव सङ्कल्पाङ्गत्वात्। यदाह दक्षः—प्रातःकाले तु संप्राप्ते कुर्यान्नक्तव्रतादिकम्। नापराह्णे न मध्यान्हे पितृकालौ हि तौ स्मृतौ। एवमेकस्मिन् दिने तिथिद्वयोपनिपाते मिथो विरुद्धमेकभक्तनक्तादिव्रतद्वयम्पृथक्कार्य्यम्, अविरुद्धस्नानादिसकलं पृथक्कार्य्यम्। यथाह मरीचिः—तिथिद्वयोदितं यत्तु व्रतन्तत्पृथगाचरेत्। तिथ्योर्द्वैधे तु स्नानादि सकृदाह्निकमाचरेत्। पृथक्कर्त्तृकभेदेन, कारयेद्धर्मपत्नीं च पुत्रं वा विनयान्वितमिति वचनात्। स्नानन्देवार्च्चनादिनियमरूपव्रतादि तन्त्रेणैव कार्य्यम्। एकेनापि कर्त्तुं शक्यत्वात्। अविरुद्धत्वमिति तदैव विरुद्धं तु कर्तृभेदेन कालभेदेन वा कार्य्यमिति। ननु वर्द्धमानस्य पक्षस्य सोदया पूज्यते तिथिः, यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी। तथा—शुक्लपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः। अत्र शुक्लकृष्णपदाभ्यां वृद्धिक्षयावेव लक्ष्येते। तदुक्तम्। शुक्लपक्षे हि चन्द्रस्य वृद्धिर्भवति भास्करात्। कृष्णपक्षे क्षयस्ताभ्यां तिथीनामपि तौ खलु। इत्यादिवचनैर्वृद्धिक्षयाभ्यां

यत्तिथिपूज्यत्वमुक्तं तद्व्यर्थम्। युग्मवाक्येनासन्देहादिति चेन्न। विषयभेदात्। यदुक्तन्निगमे—द्वितीयादिषु युग्मानां पूज्यता नियमादिषु। एकोद्दिष्टादिवृद्ध्यादौ वृद्धिह्रासादिनोदना। अत्र युग्मतया पूज्यास्तु व्रतादिकं क्षयवृद्धिभ्यां पूज्यास्त्वेकोद्दिष्टादिकं कार्य्यमितिव्यवस्था।

श्रीविश्वंभरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे।
तिथिसामान्यविनिर्णयनामोद्धारस्तृतीयोयम्॥ ३॥

अथ प्रतिपन्निर्णयः तन्नामनिरुक्तिश्च। भविष्योत्तरे—तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता। प्रतिपाद्या पदे पूर्वे प्रतिपत्तेन सोच्यते। माधवीये—यत्र वह्निपेया कला प्रथमं पीयते प्रथमेत्युच्यते, तया युक्तः कालविशेषः प्राथम्यवाचिना प्रतिपच्छब्देनोच्यते। एवं द्वितीयादीनां पञ्चदश्यन्तानां नामनिरुक्तिः। शुक्लप्रतिपदऽमावास्यायुतैव ग्राह्या। प्रतिपदात्वमावास्येति वचनात्। पञ्चमी सप्तमी चैव दशमीच त्रयोदशी, प्रतिपन्नवमी चैव कर्त्तव्या संमुखी तिथिरितिपैठीनसिवचनात्, प्रतिपत्संमुखी कार्य्या या भवेदापराह्णिकीति स्कान्दवचनाच्च। संमुखी सायान्हव्यापिनी। वृद्धवशिष्ठोपि—द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी,चतुर्थी चेत्युपवासे हन्युः पूर्वोत्तरे तिथी। उपवासे सप्तमी तु वेधाद्धन्त्युत्तरां तिथिम्। द्वितीयाद्याः पञ्चतिथयः स्ववेधादुपवासादिकार्य्ये स्वस्मात्पूर्वामुत्तरां च तिथिं हन्युः, सप्तमी तु स्ववेधादुत्तरामेव तिथिं हन्तीत्यर्थः। तेन प्रतिपत्तृतीया च द्वितीयाविद्धा निषिद्धा, एवं चतुर्थी षष्ठी च पञ्चमीविद्धा निषिद्धेत्याद्यूह्यम्। नन्वेवं प्रतिपत्सद्वितीया स्यादित्यापस्तम्बवचनविरोधः, नविरोधः तस्य तिलकाशोककरवीरव्रतविषयत्वात्। ननु

चतुर्थीषष्ठ्योः पञ्चमीवेधनिषेधे युगभूतानीत्यनेन विरुध्येत । न विरुध्येत, युग्मवचनस्य गणेशव्यतिरिक्तचतुर्थीविषयत्वात्, पञ्चमीवेधनिषेधस्य गणेशव्रतविषयत्वादित्यविरोधः । ननु चतुर्दशी स्ववेधात्त्रयोदशीं पूर्णिमाञ्च हन्तीत्युक्तम् । तदपि चतुर्दश्या च पूर्णिमेतियुग्मवाक्येन षष्ठ्यष्टमी अमावास्येत्यापस्तम्बवाक्येन च विरोधि, न विरोधि, आपस्तम्बवचनस्य कृष्णत्रयोदशीविषयत्वात् । निषेधस्य वटसावित्रीव्रतव्यतिरिक्तविषयत्वाच्चाविरोधः । एवं सप्तमी स्ववेधादष्टमीं हन्तीत्यपि न विरुद्धम् । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशीत्यनेन निषेधवाक्यस्य शुक्लाष्टमीविषयत्वादिति । एवं वृद्धवशिष्ठवाक्यस्य निगमवाक्यैर्विरोधः परिहृतः । एवमन्यान्यपि विरुद्धवाक्यानि विषयभेदेन व्याख्येयानि । प्रतापमार्त्तण्डे—कृष्णा तु सर्वा प्रतिपदपराह्णगा अन्याचोत्तरा ग्राह्या । प्रतिपत्सद्वितीया स्यादित्यापस्तम्बवचनात् । निषिद्धपूर्वतिथिवेधस्तूपवासे स्वल्पोपि त्याज्यः । घटिकामात्रवेधोपि दूषयत्युत्तरां तिथिमितिवचनात् । अत्र पूर्वेद्युः शुक्लप्रतिपद्युपवासं कृत्वा परेद्युस्तिथ्यन्ते पारणं कुर्यादिति । तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयादिति सुमन्तुवचनात् । नन्वेवम्—उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् । अन्यथा तु फलस्यार्द्धं धर्ममेवापसर्पति, इति देवलवचनविरोधः स्यात्, न स्यात् । एतस्य परविद्धोपवासविषयत्वात् । यदुक्तं निगमे । पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना । उपोष्य विधिवत्कुर्यात्तत्तदन्ते च पारणमिति । इति प्रतिपत्सामान्यनिर्णयः ।

अथ तद्विशेषनिर्णयः । भविष्यपुराणे—चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा, यस्तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तम । न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप । भवन्ति

कुरुशार्दूल तस्मात्स्नानं समाचरेत् । दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम् । एतच्च नीराजनं पूर्वविद्धायां कार्य्यम् । होलिकानन्तरकर्त्तव्यत्वात् होलिकायाश्च पूर्वविद्धाया एव शस्तत्वात् । अत्र होलिकाविभूतिवन्दनं स्नानानन्तरमाचरेत् । तथाहुः, प्रवृत्ते मधुमासे तु प्रतिपत्सु विभूतये । कृत्वा स्नानादिकार्याणि सन्तर्प्य पितृदेवताः । वन्दयेद्धोलिकाभूतिं सर्वदुःखोपशान्तये । विभूतिवन्दनमन्त्रः—वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च । अतस्त्वं पाहिनो देवि विभूते भूतिदा भव । तथाच—गोमहिष्यादिकं किञ्चित्तत्सर्वं भूषयेन्नृप । चैलवस्त्रादिभिस्सर्वैस्तोरणाधस्ततो नयेत् । अथ कामपूजा । युधिष्ठिरं प्रति कृष्णवचनम् । यत्पिबन्ति वसन्ताद्ये चूतपुष्पं सचन्दनम् । सत्यं हृत्स्थस्य कामस्य पूजनं क्रियते जनैः । वसन्ताद्ये चैत्रकृष्णप्रतिपदि । पुराणसमुच्चये—वृत्ते तुषारसमये सितपञ्चदश्यां प्रातर्वसन्तसमये समुपस्थिते च । सम्प्राश्य चूतकुसुमं सह चन्दनेन सत्यं हि पार्थ पुरुषः स समं सुखी स्यात् । समं सम्पूर्णवर्षम् । दूतमग्र्यं वसन्तस्य माकन्द कुसुमन्तव । सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये, प्राशनमन्त्रोऽयम् । ततः प्रातर्द्वितीयायां पुनर्मित्रादिसंयुतः । नृपतिर्वितते देशे वितानवरशोभिते । सर्वतश्च समास्तीर्णरत्नकम्बलराजिते । उपविश्यासने रम्ये पौरजानपदैः सह । सिन्दूरकुङ्कुमक्षोदपटवासैस्सचन्दनैः । विकीर्य्य लोकांस्ताम्बूलैः संमान्य च पृथक्पृथक् । नृत्यगीतविनोदैश्च कुर्यात्कामं महोत्सवम् । एवं कुर्वन्नवाप्नोति यावत्सम्वँत्सरं शुभम् । ब्रह्मपुराणे । चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि । तत्र ब्रह्मपूजनम्, सर्वेषां देवानां वत्सराणां च पूजनम् होमो ब्राह्मणपूजनम् । विशेषेण च भोक्तव्यं कार्य्यश्चापि महोत्सवः । नवसँव्वत्सरारम्भः सर्वसिद्धिप्रदायकः । सँव्वत्सरारम्भव्रतोऽयम् ।

अथ तिलकव्रतम्भविष्योत्तरोक्तम् । नद्यास्तीरे तडागे वा गृहे वा तदलाभतः । पिष्टातकेन विलिखेत्पुरुषं वत्सराकृतिम् । चन्दनेनार्च्य तिलकं तेन कुर्याच्चु वत्सरम् । भोगाप्तिर्दुःखनाशोऽत्र स्यादन्ते चन्द्रलोकता । अस्यामेव विष्णुधर्मोक्तमारोग्यव्रतम् । सूर्यमभ्यर्च्य विविधैर्नैवेद्यैः सघृतासिनम् । विदध्याद्वत्सरं यावच्छुक्लप्रतिपदि व्रतम् । इदं त्रयोदशे मासि समाप्यारोग्यमश्नुते । अस्यामेव विष्णुधर्मोक्तं विद्याव्रतम् । वेदैः सहार्चेद्ब्रह्माणं शुक्लपक्षादिके मधौ । आरभ्य प्रतिमासं तु शुक्लप्रतिपदि व्रतम् । गोदोऽब्दान्ते समाप्येदं विद्यावान्ब्रह्मलोकगः ।

अथ ज्येष्ठशुक्लप्रतिपदि करवीरव्रतम् । करवीरं पूजयेत्स्त्री देवोद्यानभवं नवम् । पञ्चोपचारैः सूर्यञ्च ततो भुञ्जीत वाग्यता । भुक्तेह विविधान्भोगानन्ते सूर्यसलोकिनी । अथ भाद्रशुक्लप्रतिपदि महत्तमाख्यं शिवव्रतम् । स्कन्दपुराणे नन्दिकेश्वरउवाच । देव केन विधानेन व्रतं पुण्यं महत्तमम् । कस्यां तिथौ प्रकर्त्तव्यं तद्विधानं वदस्व मे । स्कन्द उवाच । मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ । नैवेद्यञ्च पचेन्मौनात्षोडशत्रिगुणानि च । फलानि मिष्टपक्वानि दद्याद्विप्राय खेचर । देवाय षोडशैतानि दातव्यानि प्रयत्नतः । भुज्यन्ते षोडश तथा व्रतस्य नियमाश्रयात् । इदं व्रतं पूर्वविद्धायां कार्य्यं रुद्रव्रतत्वात् । रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिरिति ब्रह्मवैवर्त्तोक्तेः । एतद्व्रते शिवसौवर्णप्रतिमा कलशस्थापना कार्य्या, धेनुदानं व्रतान्ते । फलं राज्यायुःप्राप्तिरन्ते शिवसायुज्यमिति । अथास्यामेव स्कन्दपुराणोक्तं मौनव्रतम् । तच्च षोडशदिनात्मकम् । षोडशग्रन्थिडोरकबन्धनम्, षोडशदूर्वा ग्रन्थौ निवेश्याः । शिवपूजा द्वितीयप्रतिपदि समापनम् । मौनेनैव नैवेद्यादिकरणम् । जलाशये पञ्चामृतेन शिवं संपू-

ज्य भुञ्जीत। पुत्रपौत्रप्रदं ह्येतत्सर्वकामफलप्रदम्। स्त्रीपुरुषसाधारणमिदं व्रतं पूर्वविद्धायामेव कार्य्यम् रुद्रव्रतत्वात्। संपूर्णे षोडशे वर्षे कुर्यादुद्यापनं बुधः।

अथाश्विनशुक्लप्रतिपदि भविष्योत्तरोक्तमशोकव्रतम्। अशोकवृक्षपूजा पताकादिभिः ब्राह्मणाय वृक्षप्रतिमादानं ततो भोजनम्। फलं शोकनाशः सौभाग्यलाभश्च। अन्ते गौरीपदप्राप्तिः। स्त्रीकर्त्तृकमिदम्। अथ कार्त्तिकशुक्लप्रतिपत्। सा च पूर्वयुतैव ग्राह्या, तिथिवृद्धौ परा। तदुक्तं पुराणसमुच्चये.—वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका। द्वितीया वृद्धिगामित्वादुत्तरा तत्र चोच्यते। तथाचोक्तम्—त्रियामगा दर्शतिथिर्भवेच्चेत्सार्द्धत्रियामा प्रतिपद्विवृद्धौ। दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोऽन्यथा पूर्वयुते विधेये। ननु पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनम्, तथा—या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप। पूजनाश्रीणि वर्द्धन्ते प्रजा गावो महीपतिः। इति पूर्वयुताया विधानं परविद्धाया निषेधश्च। यथाहुः, नन्दाया दर्शने रक्षा वलिदानं दशासुचैव हि। भद्रायां गोकुलक्रीडा सदेशो वै विनश्यति। भद्रायां द्वितीयायाम्। देवलोऽपि—प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम्। परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः। तथा—प्रतिपदग्रिकरणं द्वितीयायां गवार्चनम्। छत्रच्छेदं करिष्येते वित्तनाशं कुलक्षयमित्यादिवाक्यैर्विरोध इति चेत्सत्यम्। यस्यां प्रतिपदि द्वितीयायुक्तायां चन्द्रदर्शनसम्भावना तद्विषयत्वान्निषेधवाक्यानां न विरोधः। प्रतिपद्यपराह्णात्मिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते। तदाहान्वाधानविषये शातातपः—द्वितीया त्रिमुहूर्ता चेत् प्रतिपद्यापराह्णिकी। अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति। अपराह्णश्च पञ्चधाविभक्त-

ह्यान्हश्चतुर्थो भागः। अतश्च यत्र प्रतिपदि षण्मुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भवाद्गोक्रीडा न कार्य्या। तदुक्तं पुराणसमुच्चये—गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः। सोमोराजा पशून्हन्ति सुरभीपूजकाँस्तथा। चन्द्रदर्शने तु तिथेर्वृद्धिगामित्वाद्द्वितीयायुक्तैव ग्राह्या। किञ्च सार्द्धत्रियामा प्रतिपद्विवृद्धावित्यत्र प्रतिपदः सार्द्धत्रियामव्यापित्वेन द्वितीयावेधोऽप्यसंभवी, वेधस्य त्रिमुहूर्त्तात्मिकत्वात्। तिथिवृद्धौ पूर्वविद्धानिषेधाच्च परविद्धाप्राप्तिः। तदुक्तं भविष्ये। यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुचः। तथैवाहोरात्रवृद्धा तिथिः प्रोक्ता मलिम्लुचा। यथा मलिम्लुचः पूर्वो मासो दैवस्तथोत्तरः। त्याज्या तिथिस्तथा पूर्वा ग्राह्या चैव तथोत्तरेति सर्वथा द्वितीयास्पर्शनिषेधाग्रहो न युक्तः, तादृशवाक्याश्रवणात्। अतश्चन्द्रदर्शनासम्भावनायां पूर्वाह्णे क्रीडनं गवामिति बोध्यम्। कर्मकालव्यापित्वात्। तिथिवृद्धौ परैव प्रतिपद्गोक्रीडादौ ग्राह्येति सर्वमनवद्यम्। स्कन्दपुराणे—प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत्। भूषणीयास्तथा गावः पूज्याश्चावाहदोहनाः। अवाहदोहनाः वाहदोहनरहिता। गोवर्धनपूजामन्त्रः। गोवर्धन धराधार गोकुलत्राणकारक। बहुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव। गोपूजामन्त्रौ, लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थे मम पापं व्यपोहतु। अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्। स्कान्दे—ततोऽपराह्ण-

समये पूर्वस्यां दिशि भारत। मार्गपालीं प्रबध्नीयाद्गोस्तम्भे

मार्गपाली बन्धनम्

बाथ पादपे। कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्मुने। कृते होमे द्विजेन्द्रैस्तु बध्नीयान्मार्गपालिकाम्। नमस्कारं ततः कुर्यान्मन्त्रेणानेन सुव्रत। मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे।

विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे । नीराजनं च तत्रैव कार्यं राष्ट्रजनप्रियम् । मार्गपालीतलेनेत्थं यान्ति गावो गजा वृषाः । राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः । मार्गपालीं समुल्लङ्घ्य नीरुजः स्युः सुखान्विताः । अथ तस्यामेव वेष्टिकाकर्षणमपि कार्य्यम् यदुक्तमादित्यपुराणे । कुशकाशमयीं कृत्वा वेष्टिकां सुदृढां नवाम् । तामेकतो राजपुत्रा हीनवर्णास्तथान्यतः । गृहीत्वाकर्षयेयुस्ते यथासारं मुहुर्मुहुः । जयेऽत्र हीनजातीनां जयो राज्ञस्तु वत्सरम् । वेष्टिका वरत्रा । अथ तस्यामेव बलिपूजोक्ता स्कान्दे—

तत्रैवबलिपूजा द्यूतादिकम्

कृत्वा तत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजां कृत्वा नृपः साक्षाद्भूमौ मण्डलके शुभे । बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः । सर्वाभरणसम्पूर्णं विन्ध्यावल्या सहासितम् । कुम्भाण्डबाणजंभोरुमयदानवसंवृतम् । सम्पूर्णहृष्टवदनं किरीटोत्कटसङ्कुलम् । द्विभुजन्दैत्यराजानं कारयित्वा नृपः स्वयम् । गृहमध्ये च शालायां विशालायां ततोऽर्चयेत् । लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः । संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् । बलिमुद्दिश्य दीयन्ते दानानि कुरुनन्दन । यानि तान्यक्षयाण्याहुर्मयैवं सम्प्रदर्शितम् । यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु । तदक्षयम्भवेत्सर्वं विष्णोः प्रीतिकरं परम् । देवीपुराणे—कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवान् । जितश्च शङ्करस्तत्र जयं लेभे च पार्वती । तदर्थं शङ्करो दुःखी गौरी नित्यं सुखोषिता । तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः । तस्मिन्द्यूते जयो यस्य तस्य सम्वत्सरं जयः । पराजयो विरुद्धोऽत्र लभनाशकरो भवेत् । ब्रह्मपुराणे—कार्त्तिके शुक्लपक्षेतु विधानं द्वितयं हितम् । नारीनीराजनं प्रातः सायं मङ्गलमालिका । अथ चेत्प्रतिपत्स्वल्पा नारी-

नीराजनं भवेत्। द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम्। भविष्यपुराणे—लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम्। तस्यां नीराजनं सायं कुर्यान्मङ्गलमालिकाम्। मङ्गलमालिकां दीपमालिकाम्। अत्र किञ्चिद्विचार्यते—अनन्दभट्टीये प्रतिपत्सद्वितीयास्यादिति वचनं तिलकाशोककरवीरव्रतविषयमिति तद्दूष्यं हेमाद्रिणा। एवं सति कर्मान्तरस्यापि पूर्वाह्ण एव विधानात्केवलतद्विषयत्वेन प्रतिपत्सद्वितीयेति सङ्कोचयितुं न शक्यते। नच पूर्वाह्णविहितसकलकर्मविषयमेतत्, यस्मिन्काले तु यत्कर्म तत्कालव्यापिनी तिथिरिति सामान्यवचनेनैव तस्य सिद्धत्वात्। किञ्चैवं प्रतिपत्संमुखी कार्येति वचनमपि अपराह्णविहितकर्मविषयं प्रसज्जेत, ततश्चास्यापि वैयर्थ्यं स्यात् सामान्यवचनेनैव सिद्धेः। अपि चैवं पूर्वविद्धपरविद्धग्रहणप्रतिपादकसर्ववाक्यवैयर्थ्यं प्रसज्जेत प्रातस्त्विकपूर्वाह्णादिविधायकवाक्येभ्यः प्रदर्शितसामान्यवचनाच्चार्थस्यास्य सिद्धत्वाद्दिनद्वयेपि कर्मकालव्यापितिथ्यभावे पूर्वविद्धापरविद्धाग्रहणप्रतिपादकवाक्यप्रवृत्तेर्वक्ष्यमाणत्वाच्चेति। तद्ध्यर्थम् पूर्वोक्तरीत्या सर्वसामञ्जस्यात्॥

अथाग्रहणशुक्लप्रतिपदि प्रारभ्य वाराहपुराणोक्तं द्वादशमासिकं धान्यव्रतम्। रात्रौ विष्णुपूजा वन्हिपूजा कुण्डे च वन्हिमन्त्रैर्होमः। मार्गादिचतुर्मासं यावकभोजनम्। चैत्रादिषु चतुर्षु पायसभोजनम्। श्रावणादिषु शक्तुभोजनम्। वत्सरान्ते काञ्चनवन्हिप्रतिमादानम्, इह जन्मनि सौभाग्यं धनं धान्यं च पुष्कलम्। पुंस्कर्तृकमिदं। इति प्रतिपद्विशेषनिर्णयः।

---

अथ द्वितीयानिर्णयः। पूर्वाह्णिकीकृष्णद्वितीया सदैव पूर्वा ग्राह्या। द्वितीया प्रतिपद्युतेत्युक्तेः, प्रतिपत्संमुखी कार्या द्वितीया

द्विजसत्तमेत्युक्तेश्च। प्रतिपत्संमुखी तद्विद्धा। अन्या कृष्णद्वितीया सर्वा च शुक्लद्वितीया परविद्धैव ग्राह्या, युग्माग्निवाक्यात्। उपवासेऽपि शुक्ला द्वितीया परैव शस्ता। कृष्णा तु द्वितीया पूर्वैव, शुक्लपक्षे तिथिर्ग्राह्या इत्युक्तवाक्यात्। एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। त्रयोदशी त्वमावास्या उपोष्याः स्युः परान्विता इति वाक्याच्च। ननु द्वितीयाप्रतिपद्युतेति वाक्येन प्रतिपद्युक्तद्वितीयाया विधानात् 'तृतीयैकादशी षष्ठी तथाचैवाष्टमी तिथिः, वेधादधस्ताद्धन्युस्ता उपवासे तिथिस्त्विमा' इति वाक्येन तृतीयायुताया निषेधाच्च विरोध इति चेन्न। पूर्वविद्धाविधानस्य परविद्धानिषेधस्य च यमद्वितीयाऽशून्यशयनव्रतविषयत्वात्, यमद्वितीयायामुपवासाभावाच्च। हेमाद्रिस्वरसोऽप्येवम्। तत्संग्रहश्च—अथ कृष्णद्वितीयादिमा पूर्वाह्ने यदि सा, सिता तु परतः सर्वेति। पारणानिर्णयः प्रतिपद्वत्। इति द्वितीयासामान्यनिर्णयः।

अथ तद्विशेषनिर्णयः। भविष्योत्तरे—चैत्रशुक्लद्वितीयायामुमा पूज्या फलादिभिः। शिवपूजाऽग्निपूजा च कर्त्तव्या मुनिसत्तम। देवीपुराणे—उमां शिवं हुताशं च द्वितीयायां प्रपूजयेत्। हविष्यमन्नं नैवेद्यं देयं गन्धार्चनान्वितं। फलमाप्नोति विप्रेन्द्र सर्वक्रतुसमुद्भवम्। अस्यामेव विष्णुधर्मोक्तं बालेन्दुव्रतम्। दिनान्ते नदीस्नानम्, चन्द्रमण्डलपूजनम्, हवनं नक्तभोजनम्। सम्वँत्सरं यावत् प्रतिद्वितीयामेवं कृतिः। फलं सौभाग्यं स्वर्गावाप्तिः। स्त्रीनृकार्यमिदम्। अस्यामेव विष्णुधर्मोक्तं नेत्रव्रतम्। उपवासः, अश्विनोः पूजनम् दक्षिणादानम्। फलं तेजस्विता महाराज्यम्। द्वादशाब्दपर्यन्तं व्रतम्।

चैत्रशुक्लद्वितीया-

अथ श्रावणद्वितीयां कृष्णामारभ्य भविष्यपुराणोक्तमशून्यशयनव्रतम्। सुमन्तुरुवाच। अशून्यशयनीं नाम द्वितीयां शृणुभारत।

यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप । पत्नीवियुक्तस्तु नरो न कदाचित्प्रजायते । उपोष्य देवतामुपास्येत्यर्थः । नतु भोजननिवृत्तिः । नक्तं भुञ्जीतेत्युत्तरवाक्यविरोधात् । श्रावणोऽत्र पूर्णिमान्तो ग्राह्यः । वामनपुराणे—एकादश्यां जगत्स्वामीशयनं परिकल्पयेत् । त्रयोदश्यां ततः कामः स्वपते शयने शुभे । त्रयोदश्यां ततो यक्षाः स्वपन्ति सुखशीतले । पौर्णमास्यामुमानाथः स्वपते धर्मसंस्तरे । ब्रह्मा तथा प्रतिपदि नीलोत्पलमयेऽपि च । विश्वकर्मा द्वितीयायां तृतीयायां गिरेः सुता । आषाढव्यवहितोत्तरद्वितीया या । तस्यां तिथ्यां स्वपिति विश्वकर्मा प्रजापतिः । द्वितीया सा शुभा पुण्या सुपुण्यशयनोचिता । तस्यां पर्य्यङ्कस्थलक्ष्मीनारायणपूजनम् । विविधफलाद्युपकल्पनम् । चन्द्रार्घदानञ्च, नक्तभोजनम् । प्रातर्ब्राह्मणदम्पतीभ्यां प्रतिमासहितदानम् । क्वचित्तु मासचतुष्टयमेतद्व्रतम् कार्य्यमित्युक्तम् । पुत्रपशुरत्नादिप्राप्तिः विष्णुलोकप्राप्तिश्च फलम् । इदं व्रतं चन्द्रोदयव्यापिन्यां द्वितीयायां कार्य्यम् । एकभक्ते दिवानक्ते निशि चन्द्रोदये व्रते । तिथिस्तात्कालिकी ग्राह्या पारणे त्वपरा तिथिरित्युक्तेः । चन्द्रोदयव्रतत्वं चास्य चन्द्राय चार्घोदातव्य इति वचनात् । चतुर्थ्यासितपक्षेषु मासेषु श्रावणादिषु । अशून्याख्यं व्रतं कुर्य्याज्जयया तु फलाधिकम् । दिनद्वयेऽपीन्दूदयव्यापित्वे तूत्तरैव ग्राह्या इत्यर्थः ।

अथ कार्त्तिकशुक्लद्वितीया यमद्वितीया तत्कृत्यं स्कान्दे । ऊर्ज्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम् । स्नानं कृत्वा भानुजायां यमलोकं न पश्यति । तथा—ऊर्ज्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः । महिषासुरमारूढो दण्डमुद्गरधारिभिः । वेष्टितः किङ्करैर्हृष्टैस्तस्मै यच्छति वाञ्छितम् । तथा—कार्त्ति-

के शुक्लपक्षस्य द्वितीयायां तु नारद । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः । अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता । अस्यां निजगृहे विप्र न भोक्तव्यं ततो बुधैः । स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् । दानानि चात्र देयानि भगिनीभ्यो विधानतः । सर्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नकाः । प्रतिपन्नकाः भगिनीत्वेन स्वीकृताः । इयञ्च कर्मकालिकी ग्राह्या दिनद्वये तदभावे पूर्व्वैवेति ।

पौषशुक्लद्वितीयायां विष्णुधर्मोक्तमारोग्यव्रतम् । गोशृङ्गोदकेन स्नानम् । वालेन्दुपूजनम् । क्षीराद्याहारं, भूमिशयनम् । वत्सरं व्रतकरणम् । आरोग्यसौभाग्याद्याप्तिः फलं । साधारणम् ।

---

अथ तृतीया । ब्रह्मवैवर्त्ते—रम्भाख्यां वर्जयित्वा तु तृतीया द्विजसत्तम । अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते । रम्भान्या सर्वाप्युत्तरैवेत्यर्थः । युग्मवाक्यन्तु रम्भापरम् । कामत्रयोदशीरम्भा नोपोष्याः स्युः परान्विता इत्युक्तेः । स्कान्दे—कृष्णाष्टमी चतुर्थीच सावित्री वटपैतृकी । शुक्लत्रयोदशी रम्भा नोपोष्याः स्युः परान्विताः । ब्रह्मवैवर्त्ते—तृतीया तु न कर्त्तव्या द्वितीयोपहिता विभो । द्वितीयोपहितां तान्तु यः करोति नराधमः । सम्वँत्सरकृतेनेह नरो धर्म्मेण मुच्यते । पुराणसमुच्चये—द्वितीयाशेषसय्युँक्तां तृतीयां कुरुते तु या । सा याति नरकं घोरं कालसूत्रभयङ्करम् । तथा—द्वितीयाशेषसंयुक्तां या करोति विमोहिता । सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः । तथा—चतुर्थीसहिता या तु सा तृतीया फलप्रदा । अवैधव्यकरी स्त्रीणां पुत्रपौत्रविवर्द्धिनी । स्कान्दे, कलाकाष्ठापि या चैव द्वितीया सम्प्रदृश्यते । सा तृतीया न कर्त्तव्या क-

संख्या गणसंयुता । गणश्चतुर्थी । इयं चैकादशीवत्स्वल्पापि द्वितीयदिने ग्राह्या । यदा क्षयस्तदा पूर्वविद्धापि कार्य्या । तथा-च वृद्धवशिष्ठः । एकादशी तृतीया च षष्ठी चैव त्रयोदशी। पूर्व-विद्धापि कर्त्तव्या यदि न स्यात्परेऽहनि । इति तृतीयासामान्य-निर्णयः ।

अथ विशेषः । चैत्रशुक्लतृतीयायां गौरीदोलोत्सवः । देवी-पुराणे । तृतीयायां यजेद्देवीं शङ्करेण समन्विताम् । कुङ्कुमागुरुक-र्पूरमणिवस्त्रसुगन्धकैः । स्रग्गन्धधूपदीपैश्च दमनेन विशेषतः । आन्दोलनन्ततो विप्र शिवाया तुष्टये सदा । रात्रौ जागरणं का-र्य्यं प्रातर्देया च दक्षिणा । हेमवस्त्रान्नपानानि ताम्बूलानि स्रज-स्तथा । सौवर्णी च उमा कार्या राजतः शङ्करस्तथा । चतुर्भुजस्तु देवेशो द्विभुजा तु भवेदुमा । इति हिन्दोलकतृतीयाव्रतम् । अ-स्यामेव सौभाग्यशयनव्रतम् । मात्स्ये—वसन्तमासमासाद्य तृती-यायां जनप्रिये । सौभाग्याय सदा स्त्रीभिः कार्य्यं पुत्रसुखेप्सु-भिः । अस्य विधिर्मत्स्यपुराणाच्च द्रष्टव्यः । विस्तरभयान्नेह श्लो-का लिख्यन्ते । चूर्णिकया किञ्चित्किञ्चिदुक्तं वक्ष्यते च ।

चैत्रसिततृतीयोमाशिवाहदिनम् । गौरीशङ्करार्चा गोश्रृङ्गो-दप्राशनम् । प्रातर्विप्रदम्पतीभ्यां प्रतिमादानम् । आब्दं व्रतम् । सर्वकामावाप्तिः शिवलोकप्राप्तिः फलम् । इयं मन्वन्तरादिरपि । मात्स्ये,—आश्विने शुक्लनवमी द्वादशी कार्त्तिके सिता । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च । श्रावणे चाष्टमी कृष्णा पौषे चैकादशी तथा । सिताषाढस्य दशमी माघमासस्य सप्तमी । फा-ल्गुणे मास्यमावास्या ज्यैष्ठे पञ्चदशी तथा । आषाढी कार्त्तिकी माघी चैत्री चापि विशेषतः । एता मन्वादयः प्रोक्ता मुनिभिः पूर्वदर्शिभिः । अथ चैत्रभाद्रमाघशुक्लतृतीयासु भविष्योत्तरोक्तं

गौरीव्रतम्। चैत्रशुक्लतृतीयायामुपवासनियमं विधाय पट्टवस्त्रादि-मण्डपिकायां पुरतः कुण्डे गौरीं यजेत। ततो रात्रौ होमः रात्रौ जागरणम्। प्रातर्दक्षिणादानं भोजनम्। भाद्रमाघचतुर्थ्यामधिकं विनायकपूजनम्। एतच्च व्रतं सर्वकामप्रदम्।

अथ वैशाखशुक्लतृतीयायां भविष्योत्तरोक्तमक्षय्यतृतीयाव्रतम्। श्रीनारायणपूजनम्। घटादिदानम्। एकभक्तम्। दत्तस्याक्षय्यता। विष्णुधर्मोत्तरे—वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः। अक्षय्यं फलमाप्नोति सर्वस्य सुकृतस्य च। सा तथा कृत्तिकोपेता रोहिण्या वा युता शुभा। दुर्लभा बुधवारेण सोमेनापि तथा युता। रोहिणीबुधयुक्तापि पूर्वविद्धा विवर्जिता। देवीपुराणे गौरीपूजोक्ता। तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य च। उदकुम्भप्रदानेन शिवलोके महीयते। इयं च शुक्ला युगादित्वाद्विष्णुपूजाहोमदानादिषु पूर्वाह्णव्यापिनी ग्राह्या, शुक्ला पूर्वाह्णिकी ग्राह्येति वचनात्। भविष्ये—वैशाखस्य तृतीयायां श्रीसमेतञ्जगद्गुरुम्। नारायणं पूजयेथाः पुष्पधूपविलेपनैः। वैशाखेशुक्लपक्षे तु तृतीयायां तथैव च। गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः। तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत्। यवान्दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद्यवान्॥

अथ ज्येष्ठशुक्ला रम्भातृतीया भविष्योत्तरोक्ता—पञ्चाग्निमध्य उपवेशनम्। गौर्याः पूजनम्। ब्राह्मणद्वारा होमः ततोऽस्तसमये दक्षिणानुगमापनम्। सौभाग्यादिप्राप्तिः रुद्रलोकाप्तिश्च फलम्। पुष्पमण्डपिका कार्या रम्भास्तम्भोपशोभितेति वचनाद्रम्भाख्येयम्। साधारणव्रतमिदम्। श्रावणकृष्णतृतीयायां तुष्टिप्राप्तिव्रतं विष्णुधर्मोक्तम्। श्रावणोऽत्र पौर्णमास्यन्तः। गोविन्दपूजा तुष्टिप्राप्तिः फलम्॥

अथ भाद्रशुक्लतृतीयायां कोटीश्वरव्रतं स्कान्दोक्तम्। उपवासः, आब्दचतुष्टयं व्रतकरणम् । अखण्डतण्डुलैर्लक्षसङ्ख्याकैर्दुग्धमिश्रैर्देवीपूजा । उत्कृष्टपतिप्राप्तिः सौभाग्याप्तिश्च फलम् । अस्यामेव हरितालिकाव्रतम् । हरितशाद्वलस्थितहरकालीपूजनम्। काञ्चनीं गौरीं कृत्वा संपूज्य गुडापूपं नैवेद्यन्दद्यात् । सर्वपापहरणं फलम् ।

अथ वैशाखभाद्रमार्गशुक्लतृतीयासु मत्स्यपुराणोक्तमनन्ततृतीयाव्रतम्। पञ्चगव्येन ललितायाः प्रतिमापूजनम् । आब्दं व्रतम्, अन्ते सुवर्णकलशोपेतशय्यादानम्। मिथुनपूजनम्। फलञ्च पुत्रादिप्राप्तिः गौरीसलोकता। साधारणमिदम्।

मार्गेऽपि भविष्योत्तरोक्तं रम्भातृतीयाव्रतम् । प्रातरुपवाससङ्कल्पः प्रतिमासमाब्दं व्रतकरणम् । रात्रौ पार्वतीपूजा कुशोदकमाशनम् । प्रातर्ब्राह्मणभोजनम्। सहिरण्यलवणदानम्। ततः पारणम् । फलमिह सौभाग्यमसापत्न्यम्, अन्ते शिवसलोकता। अस्यामेव भविष्यपुराणोक्तमुमामहेश्वरव्रतम् । उपवासो ललितापूजा रात्रौ जागरणम् । प्रभाते पूजा प्रार्थनं पञ्चगव्यं हविष्यञ्च भोजनम्। आब्दंव्रतम्, उद्यापनम्, पुत्रपौत्राद्याप्तिः शिवसलोकता । अस्यामेव कालिकापुराणोक्तमवियोगव्रतम्। पूर्वदिने चन्द्रदर्शनानन्तरं नक्तं भोजनम् भूशयनम्। तृतीयायां प्रातःस्नानादि शालिपिष्टमयनृस्त्रीप्रतिमाद्वयकरणम्, शिवोमाधिया पूजनम् । उपवासः प्रातर्दानं पारणञ्च, आब्दं व्रतम्, अब्दान्ते चोद्यापनम् अवियोगाप्तिः फलम् ।

अथ माघशुक्लतृतीयायां मात्स्योक्तं रसकल्याणीव्रतम्। इक्षुरसादिना देव्यभिषेकः, स्वर्णाब्जकुम्भादिदानम्, उपवासः। आब्दंव्रतम्, पापक्षयाद्यनेकफलम् गौरीसलोकता च। अस्यामेव भविष्यो-

त्तरोक्तं गुडलवणदानम्, तदुक्तम्—माघशुक्लतृतीयायां गुडस्य लवणस्य च । दानं श्रेयस्करं राजन् स्त्रीणाञ्च पुरुषस्य च । गुडेन तुष्यते गौरी लवणेन महेश्वरः ।

अथ फाल्गुनशुक्लतृतीयायां वाराहपुराणोक्तं सौभाग्यतृतीयाव्रतम् । उपवासः सश्रीकहरिप्रतिमा पूज्या । मध्वादिपूरितबहुपात्रदानम् । फलं सौभाग्याप्तिः । अथ पद्मपुराणान्तर्गतनागरखण्डे पञ्चपिण्डिकागौरीव्रतम् । 'पञ्चपिण्डात्मिकां गौरीं कृत्वा कर्द्दमसम्भवाम् । एभिः संपूजयेत्पञ्चभूतमन्त्रैः पृथक् पृथक् । लक्ष्मीरुवाच—नमः पृथिव्यै क्षान्त्यै ते नम आपोमये शुभे । तेजस्विनि नमस्तुभ्यं नमस्ते वायुरूपिणि । आकाशरूपसम्पन्ने पञ्चरूपे नमोस्तुते । फलं सौभाग्याप्तिः ।

अथ चतुर्थी । प्रतापमार्त्तण्डे—गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्त्तिताः । चतुर्थ्यः पञ्चमीयुक्ता देवतान्तरयोगतः । गौरीचतुर्थी कुन्दचतुर्थी । युग्मवचनमपि त्रयान्यपरम् । ब्रह्मवैवर्त्ते । चतुर्थीसंयुता या तु सा तृतीया फलप्रदा । चतुर्थी च तृतीयायां महापुण्यफलप्रदा । कर्त्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी । गणनाथपदं गौरीबहुलयोरप्युपलक्षकम् । उपवासेऽपि गणेशचतुर्थी पूर्वा ग्राह्या अन्या सर्वाप्युत्तरैव । यदाह गर्ग्गः—एकादशी च षष्ठी च अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः । पुराणसमुच्चये—गौर्य्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्भरहोलिके च । वत्सस्य पूजा शिवरात्रिरेताः परा विनिघ्नन्ति नृपं सराज्यम् । धेनुपूजा बहुलायां दीपोत्सवप्रतिपदि च विहिता ग्राह्या । वत्सस्य पूजेति वत्सद्वादशीविहिता, धेनुपूजायाः पृथगुपादानात् । इति चतुर्थीसामान्यनिर्णयः ।

अथ तद्विशेषनिर्णयः । चैत्रशुक्लचतुर्थ्यान्तु गणेशपूजा । द्वे-

वीपुराणे—गणेशः कारयेत्पूजां लड्डुकादिभिरादरात् । चैत्रशुक्लचतुर्थ्यान्तु सर्वकामसमृद्धये । गणानामीट् गणेट् तस्य गणेशः । ज्येष्ठशुक्लचतुर्थ्यां स्त्रीभिरुमा पूज्या । तदुक्तं ब्रह्मपुराणे—ज्येष्ठशुक्लचतुर्थ्यान्तु जाता पूर्वमुमा सती । तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये । उपहारैश्च विविधैर्नृत्यगीतोत्सवादिभिः । होमैः पयोभिर्वस्त्रैश्च पत्रपुष्पैः सुगन्धिभिः ।

श्रावणकृष्णचतुर्थ्यां स्कन्दपुराणोक्तं सङ्कष्टचतुर्थीव्रतम् । 'श्रावणे बहुले पक्षे चतुर्थ्यांश्च विधूदये । गणेशं पूजयित्वा च चन्द्रायार्घः प्रदीयते' । चन्द्रार्घानन्तरं पञ्च मोदका विप्राय देयाः पञ्च स्वभक्ष्याः । एतच्च प्रतिमासं यावज्जीवमेकविंशतिवर्षाणि एकवर्षं वा कार्य्यम् । उद्यापनहोमप्रतिमादानैः सर्वकामफलप्रदम् । श्रावणस्य शुक्लचतुर्थ्यां कार्त्तिकस्य वा सौरपुराणोक्तं दूर्वागणपतिव्रतम् । सुवर्णदूर्वोपरि सौवर्णगणेशपूजा । आचार्याय निवेदनम्। पञ्चवर्षानन्तरमुद्यापनम् । फलञ्च पूर्ववत् । स्कान्दे तु रविवारयुक्तायां कस्यांचिच्चतुर्थ्यामेतद्व्रतं युक्तम् ।

अथ भाद्रशुक्लचतुर्थी शिवाख्या । तस्यां गणेशपूजनम् । स्नानादिकं शतगुणं भवति । तदुक्तं भविष्योत्तरे—'शिवा शान्ता सुखा राजन् चतुर्थी त्रिविधा स्मृता । मासि भाद्रपदे शुक्ला शिवा लोके प्रपूजिता । तस्यां स्नानं तथा दानमुपवासो जपस्तथा । क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप' । अथास्यामेव सिद्धिविनायकव्रतम् । स्कन्दे—प्रातः शुक्लतिलैः स्नात्वा मध्यान्हे पूजयेन्नृप । स्वशक्त्या गणनाथस्य स्वर्णरूप्यमयाकृतिम् । अथवा मृण्मयीं कुर्याद्वित्तशाठ्यं न कारयेत् । तथैकविंशतिं गृह्य मोदकान् घृतपाचि-

तान् । स्थापयित्वा गणाध्यक्षसमीपे कुरुनन्दन । दश विप्राय दातव्याः स्वयञ्चाद्यात्तथा दश । एकं गणाधिपे दद्यात्सनैवेद्यं नृपोत्तम । विप्राय भोजनं दद्याद्भुञ्जीयात्तैलवर्जितम् । अस्यां चन्द्रदर्शनं निषिद्धम् ॥ मार्कण्डेये —सिंहादित्ये शुक्लपक्षे चतुर्थ्याश्चन्द्रदर्शनम् । मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा । पराशरः—दोषस्य शान्तये सिंहः प्रसेनमिति संपठेत् ॥ ब्रह्मपुराणे—वासुदेवोभिशप्तस्तु निशाकरमरीचिषु । स्थितश्चतुर्थ्यामाद्यायाम्मनुष्याणां पतिश्च सः । ततश्चतुर्थ्यां चन्द्रन्तु प्रयत्नाद्वीक्ष्य मानवः । पठेत्पौराणिकं मन्त्रं प्राङ्मुखो वाप्युदङ्मुखः । प्रयत्नात्पठेदित्यन्वयः,आद्यायां शुक्लचतुर्थ्याम् ॥ मन्त्रो विष्णुपुराणे—सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः । सुकुमारक मारोदीस्तव ह्येषः स्यमन्तकः । निर्णयामृते—भाद्रकृष्णनवम्यां प्रबोधिताया देव्या आश्वयुक्शुक्लचतुर्थ्यामभ्यङ्गादिसंस्कारैः केशान्विशोधयेत् ॥ तदुक्तं देवीपुराणे—भाद्रस्य कृष्णपक्षेतु पूजयित्वार्द्रभेपि वा । नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः । शुक्लपक्षचतुर्थ्यां तु देवीकेशविशोधनम् । प्रातरेव तु पञ्चम्यां स्नापयेत्सलिलैः शुभैः । सप्तम्यां पत्रिकापूजामष्टम्यामप्युपोषणम् । नवम्यां पूजयित्वा तु वलिदानं समाचरेत् । दशम्यां रथमारोप्य गीतवादित्रनिःस्वनैः । नगरं भ्रामयेद्देवीं प्रणिपत्य विसर्जनम् । अत्राश्विनसितचतुर्थ्यां केशविशोधनप्रसङ्गाद्दशदिनकृत्यमुक्तम् ।

चन्द्रदर्शन-निषेधः ।

मार्गशुक्लचतुर्थ्यां स्कन्दोक्तं वरचतुर्थीव्रतम् । तामारभ्य प्रतिमासं चतुर्थ्यां गणेशपूजा । अक्षारलवणमेकभक्तम् द्वितीयेऽब्दे नक्तम् तृतीयेत्वयाचितः चतुर्थे तूपोषणम् ।अथोद्यापनम्, फलं विद्यादीप्सितप्राप्तिः।अस्यामेव स्कन्दोक्तं कृच्छ्रचतुर्थीव्रतम् पूर्ववत् ।

माघशुक्लचतुर्थ्यां कुन्दैः शिवपूजा । तदुक्तं कौर्म्मे—माघे शुक्लचतुर्थ्यान्तु कुन्दपुष्पैः सदाशिवम् । सम्पूज्य यो हि नक्ताशी समाप्नोति श्रियन्नरः, इयं वरदाख्या । इयमेव कुन्दचतुर्थी । अथ ब्रह्मपुराणोक्तमुमाव्रतम् । कुन्दपुष्पैः कुङ्कुमालक्तकसिन्दूरैः पञ्चोपचारैः गौरीपूजा । गुडार्द्रकपयोलवणानि नैवेद्यानि, स्त्रियः पूज्याः विप्राश्च भोजयितव्याः पश्चात्स्वयं भुञ्जीत बन्धुभिः सह । फलं सौभाग्यादिवृद्धिः । साधारणम् । देवीपुराणे त्वियं कुन्दचतुर्थ्युक्ता—'माघमासे तु संप्राप्ते चतुर्थी कुन्दसंज्ञिता । उपोष्या सा सुरश्रेष्ठ ततो राज्यं भविष्यति' । इयमेव भविष्योत्तरे शान्तिचतुर्थ्युक्ता,गणेशपूजा उपवासः । शान्तिःफलम् ।

अथ फाल्गुनादिमासचतुष्टयसाध्यगणेशचतुर्थीव्रतं वराहपुराणोक्तम् । गणेशपूजा तिलहोमः नक्तम् । तिलान्नं पारणं तिलदानम् । प्रतिशुक्लचतुर्थिं चतुर्मासमेवं कृत्वा पञ्चमे हैमं गणेशमासनैः पञ्चगात्रैरुपेतं विप्राय दद्यात् । फलं सर्वविघ्ननाशः । भविष्यपुराणे—चतुर्थ्याञ्च यदा राजन्नारवारो व्रतान्वितः । दद्यात्तिलान्नं विप्राय स्वयं भुंज्यात्तिलोदनम् । आरवारः कुजः । वर्षद्वयसमाप्त्या तिलचतुर्थीयम् । गणेशतुष्टिरिष्टप्राप्तिश्च फलम् । मात्स्ये—चतुर्थ्यान्नक्तभुग्दद्यादब्दान्ते हेमवारणम् । व्रतं वैनायकं नाम शिवलोकफलप्रदम् । इदं द्वादशस्वपि मासेषु विशेषानभिधानात् । एवं गणेशगौरीबहुलाव्रतानि तृतीयायुक्तचतुर्थ्यामेव कार्य्याणीति सिद्धम् । अन्यानि नागचतुर्थ्यादीनि पञ्चमीयुक्तायामिति ध्येयम् । तदुक्तं पुराणसमुच्चये—युगं मध्यंदिने यत्र तत्र चोपोष्य पन्नगान् । क्षीरेणाप्यायय पञ्चम्यां पारयेत्प्रयतोनरः । विषाणि तस्य नश्यन्ति नतं हिंसन्ति पन्नगाः ।

युगं चतुर्थी । कौर्मेपि—तिथौ युगान्वितायाश्च समुपोष्य यथाविधि । शङ्खपालादिनागानां शेषस्य च महात्मनः । पूजा कार्य्या पुष्पगन्धक्षीराप्यायनपूर्वकम् । कार्त्तिकशुक्लचतुर्थ्यां नागव्रतमिति कालादर्शः । क्षयंगतासु सर्वास्वपि चतुर्थीषु गणेशः पूज्यः । चतुर्थ्यांङ्गणनाथस्येत्युक्तेरिति ।

---

अथ पञ्चमीनिर्णयः । साचोपवासादिषु पूर्वविद्धा ग्राह्या युगभूतानीत्युक्तेः । जावालिरपि—प्रतिपत्पञ्चमीचैव उपोष्ये पूर्वसय्युँते । पैठीनसिः—प्रतिपत्पञ्चमी चैव दशमी च त्रयोदशी । सप्तमी नवमी चैव कर्तव्या सम्मुखी तिथिः ॥ ब्रह्मवैवर्त्ते,—प्रतिपत्पञ्चमी भूता सावित्री वटपूर्विका । नवमी दशमीचैव नोपोष्याः परसंयुताः । यत्तु ब्रह्मवैवर्त्तवचनम्, पञ्चमीच प्रकर्त्तव्या षष्ठ्या युक्ता च नारद । नहि षष्ठी नागविद्धा कर्त्तव्यातु कदाचनेति, तत्स्कन्दोपवासविषयं नागपूजाविषयं वा, स्कन्दोपवासे स्वीकार्य्या पञ्चमी परसंयुता । त्रिमुहूर्त्तातु षष्ठ्याः स्यात्परा पूर्वयुतान्यथा' इति तत्रैवोक्तत्वात् । नागव्रते तु पञ्चमी परविद्धा ग्राह्या, श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी । तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता मता' इति वचनात् । ननु 'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत्' ॥ वाराहे—आषाढे शुक्लषष्ठी तु तिथिः कौमारिकी स्मृता । कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने । आभ्याव्विँरोध इति चेन्न, देशभेदव्यवस्थया निर्णयामृते विरोधस्य परिहृतत्वात् ॥ तदुक्तम्—केषुचिद्देशेषु पञ्चम्यामुपोष्य षष्ठ्यां स्कन्दं पूजयन्ति ॥ हेमाद्रिस्तु—पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्तेत्यादिवचनं शुक्लपक्षविषयम् । शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविरितिवचनात् । षट्त्रिंशन्मते—गणेशस्कन्दयोगाभ्यां

क्रमान्नागः शुभाशुभः। शिवामित्रौ तयोः पत्रे नागानामाखुबर्हिणौ।
गणेशश्चतुर्थी, स्कन्दः षष्ठी, नागः पञ्चमी, तयोर्गणेशस्कन्दयोः। पत्रे वाहने, मित्रामित्रौ तयोः पत्रे इति युक्त्यापि चतुर्थीयुता पञ्चमी ग्राह्येति सिद्धम्॥ इति पञ्चमी सामान्यनिर्णयः॥

अथ तद्विशेषनिर्णयः। ब्राह्मे—शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना। ब्रह्मलोकान्मानुषं हि संप्राप्ता केशवाज्ञया। तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति। एषा श्रीपञ्चमी कार्या विष्णुलोकगतिप्रदा। भविष्ये—पञ्चमी दयिता राजन्नागानन्दविवर्द्धिनी। तस्यामभ्यर्चयन्तीह नागान् क्षीरेण ये नराः। तेषां कुले

नागपञ्चमी। प्रयच्छन्ति अभयं ते सुपूजिताः। इदं वाक्यं चैत्रमुपक्रम्य देवीपुराणे। पञ्चम्यां पूजयेन्नागाननन्ताद्यान्महोरगान्। क्षीरं सर्पिस्तु नैवेद्यं देयं सर्पसुखावहम्। मत्स्य पुराणे,—नागास्तत्र तु कर्त्तव्याः खड्गखेटकधारिणः। अधः सर्पाकृतिस्तेषां नाभेरूर्द्ध्वन्तु पौरुषी। फणा च मूर्द्ध्नि कर्त्तव्या द्विजिह्वा बहवोऽसमाः। असमा विषमा। श्रावणसितपञ्चम्यपि नागपञ्चमी। तदुक्तं भविष्योत्तरे—श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप। द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः। पूज्याश्च विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः। गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः। ये तस्यां पूजयन्तीह नागान्भक्तिपुरःसराः। न तेषां सर्पतो वीर भयं भवति कुत्रचित्॥

अथ भाद्रशुक्लपञ्चम्यामृषिपञ्चमीव्रतम्॥ तत्र वेद्यां सप्तर्षिपूजा, अकृष्टभूमिजशाकाहारमात्रम्, सर्वपापक्षयः सर्वकामलाभः फलम्। अस्यामेव ब्रह्मपुराणोक्तं सर्पदष्टोद्धारव्रतम्। दष्टस्य दुर्गतिपरिहाराय पुत्रादिभिः कार्यमेतत्, सौवर्णं राजतं वा नागं पूजयेत्। विप्रपूजा गोदानम्, नक्तकरणम्, प्रतिमादानम्,

फलं दष्टोद्धारः । व्रतकर्त्तुर्विष्णुसलोकता ॥

अथाश्विनसितपञ्चम्यां भविष्योत्तरोक्तं शचीसहितनागपूजाव्रतम् ॥ कुशमयं शचीसहितं नागं घृतक्षीरजलैः संस्नाप्य क्षीरसिक्तं गोधूमान्नं नैवेद्यं दद्यात्, शेषादिनागप्रीतिः फलम् ॥

अथ कार्त्तिकशुक्लपञ्चम्यां भविष्योत्तरोक्तं जयाव्रतम् । जयासहितहरिपूजा । वेणुपात्रादिकं दत्त्वा रक्षाबन्धनमाचरेत् । अक्षताः सर्षपा दूर्वा रक्षामध्ये च रोचना ॥ ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वां प्रतिबध्नामि रक्षे माचल माचलेति रक्षामन्त्रः । ग्रहपीडादिशान्तिः युद्धादिविजयः फलम् । अस्यामेव वराहपुराणोक्तं शान्तिव्रतम् । आब्दमरहितं भोजनम्, रात्रौ शेषस्थहरिपूजनम्, होमः, अब्दान्ते उद्यापनम् । नागभयनिवृत्तिः फलम् ।

अथ मार्गसितपञ्चम्यां भविष्योत्तरोक्तं श्रीपञ्चमीव्रतम् । उपवासः स्वर्णलक्ष्मीपूजा सुवासिनीपूजा । ब्राह्मणाय प्रतिमादानम्,पारणम् वर्षान्ते समापनम् । फलमेकविंशसन्वयान्तं गृहे श्रीस्थिरता । पुराणसमुच्चये—माघमासे सुरश्रेष्ठ शुक्लायां पञ्चमीतिथौ । रतिकामौ तु सम्पूज्य कर्त्तव्यः सुमहोत्सवः । दानानि च प्रदेयानि तेन तुष्यति केशवः । इयमपि श्रीपञ्चमीति प्रसिद्धा, वसन्तपञ्चमीत्येके ।

---

अथ षष्ठीनिर्णयः । सा च सर्वा परविद्धा ग्राह्या युग्मवाक्यात् । स्कान्दे—नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन । सप्तमीसंयुता कार्य्या षष्ठी धर्मार्थचिन्तकैः । उपवासे स्कन्दषष्ठीभिन्ना सर्वाप्युत्तरैव । एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विता,इतिभृगुवचनात् । नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी । दशम्येकादशीविद्धा

नोपोष्या स्यात्कथंचनेति निषेधाच्च । शिवोऽष्टमी । स्कन्दषष्ठी तु पूर्वैवोपोष्या 'कृष्णाष्टमी स्कन्दषष्ठी'इति वाक्यात् ।

अथ षष्ठीव्रतानि । तत्र चैत्रशुक्लषष्ठ्यामारभ्यमाब्दं कालोत्तरोक्तं कुमारव्रतम् । उपवासः मृन्मयषण्मुखप्रतिमापूजनम् । ब्राह्मयादिरसप्राशनम् । मासि मासि कर्त्तव्यः, अब्दान्ते समाप्तिः महाकविर्मेधावी भवति । आषाढशुक्लषष्ठी स्कन्दषष्ठी । तत्र पञ्चम्यामुपोष्य षष्ठ्यां स्कन्दं पूजयेत् । आषाढे शुक्लषष्ठी तु तिथिः कौमारिकी स्मृतेत्युक्तवाराहपुराणवचनात् ।

भाद्रशुक्लषष्ठ्यां स्कन्दोक्तचम्पाषष्ठीव्रतम् । 'षष्ठी भाद्रपदे शुक्ला वैधृत्या च समन्विता । विशाखाभौमयोगेन सा चम्पेतीह विश्रुता' । पञ्चम्यामेकभक्तम्, प्रातर्व्रतसङ्कल्पः, ततो नद्यादौ मृदा शुक्लतिलैश्च स्नानम् । ततो मौनेन गृहमेत्य स्थण्डिले कलशस्थापनम् । तत्रस्थितताम्रादिपात्रोपरि सौवर्णसूर्य्यपूजनम् । अरुणस्य शुक्लगोश्च पूजनम् तिलहोमः । द्वादशविप्रानाशयेत् । दक्षिणा । गवांकोटिसहस्राणि कुरुक्षेत्रेऽर्कपर्वणि । चम्पादानस्य राजेन्द्र कलां नार्हन्ति षोडशीमितिफलम् । भविष्योत्तरे—येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ । सेयं पापहरा पुण्या शिवा शान्ता शुभा नृप । येऽस्यां पश्यन्ति गाङ्गेयं दक्षिणापथमाश्रितम् । ब्रह्महत्यादिपापैस्ते मुच्यन्ते नात्र संशयः । गाङ्गेयःकार्तिकेयः । इयमेव सूर्य्यषष्ठी । तदुक्तं तत्रैव, शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् । प्राशनं पञ्चगव्यस्य अश्वमेधफलप्रदम् ।

अथ भाद्रकृष्णषष्ठ्यां कपिलाषष्ठीव्रतम् । तदुक्तं वाराहे । नभस्यकृष्णपक्षे या रोहिणीपातभूसुतैः । युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्त्तिता । तत्र भास्करं पूजयेत् व्रती कपिलां दद्यात् अश्वमेधफलम्,पातो व्यतीपातः,भूसुतो

भौमः । पुराणसमुच्चये विशेषः,—भाद्रे मास्यसिते पक्षे भानौ चैत्र करे स्थिते । पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् । सूर्यस्य हस्तस्थितत्वं सति सम्भवे। इयञ्च पूर्वा परा वा यैव भान्वादिचतुष्टयवती सैव ग्राह्या 'संयोगे सा चतुर्णां वै निर्दिष्टा परमेष्ठिनेति वचनात् । इयमेव षष्ठी चन्द्रषष्ठी । चन्द्रोदयव्यापिनी ग्राह्या । उभयत्र तत्वे पूर्वैव, तदुक्तम्,—तद्वत् भाद्रपदे मासि षष्ठी पक्षे सितेतरे । चन्द्रषष्ठीव्रतं कुर्यात्पूर्ववेधः प्रशस्यते । चन्द्रोदये यदा षष्ठी पूर्वाह्ने वा परेऽहनि । चन्द्रषष्ठ्यसिते पक्षे सैवोपोष्या प्रयत्नतः ।

आश्विने षष्ठ्यां ज्येष्ठायुतायां केवलायां वा बिल्वनिमन्त्रणम्, मन्त्रः—रावणस्य वधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा। श्रीशैलशिखरे जात श्रीफल श्रीनिकेतन। नेतव्योसि मयागच्छ पूज्यो दुर्गास्वरूपतः । कार्त्तिकशुक्लषष्ठ्यां वह्निमहोत्सवं कुर्यात् । तदुक्तं मात्स्ये—वृश्चिकार्के शुक्लषष्ठी भौमवारे ऽप्युपस्थिते,महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः। तस्यां स्वपिति वै वन्हिः पूर्वत्रोपोष्य वै दिने । षष्ठ्यां वह्निं समभ्यर्च्य कुर्याद्वन्हिमहोत्सवम् । वृश्चिकार्के कार्त्तिक इतिकालादर्शः ।

अथ मार्गसितषष्ठी स्कन्दप्रिया, यस्यां स्कन्दस्तारकं जघान, तस्यां स्नानदानादिकमक्षय्यं भविष्योत्तरात्। अस्यामेव दक्षिणापथगं गाङ्गेयं पश्येदिति रामकृष्णः । श्रीकामः सर्वासु षष्ठीषूपवसेत् । यदुक्तं भविष्ये—षष्ठ्यां हि श्रीसमायुक्तो यस्मात्स्कन्दोऽभवत्पुरा । तस्मात्षष्ठ्यां न भुञ्जीत प्राप्नुयाद्भार्गवीं सदा । भार्गवीं लक्ष्मीं । 'यस्तु षष्ठ्यां नरो नक्तं कुर्याद्भरतसत्तम । सर्वपापविनिर्मुक्तो गाङ्गेयस्य सदो व्रजेदिति। षष्ठ्यामुपवासः । दारिद्र्यहरषष्ठीव्रतम् । स्कन्दपूजा ब्राह्मणभोजनादि । अथ विष्णुधर्मोक्तं पुत्रप्राप्तिव्रतम् ।

कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा । क्रतुरात्मा विनिर्दिष्टो

भगवान् क्रौञ्चसूदनः । तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान् । बालकानां गृहे श्रेयो नरः प्राप्नोत्यसंशयम् ।

---

अथ सप्तमीनिर्णयः । सप्तमी च सर्वा पूर्वविद्धैव ग्राह्या युग्मवाक्यात् । 'षष्ठ्या युता सप्तमी च कर्त्तव्या तात सर्वदा । षष्ठी च सप्तमी यत्र तत्र संनिहितो रविरिति स्कान्दात् । 'सप्तमी नाष्टमी युक्ता न सप्तम्या युताष्टमी । सर्वेषु व्रतकल्पेषु अष्टमी परतःशुभा' इति ब्रह्मवैवर्त्तनिषेधाच्च । 'षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी । सप्तमी परविद्धा च नोपोष्यमितिपञ्चकम्' इतिस्कन्दनिषेधाच्च । भविष्ये—षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता । पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणमितिविधेः षष्ठीयुता ग्राह्या । पतङ्गः सूर्य्यः । शिवविद्धो दिवाकर इतिनिषेधाच्च अष्टमीयुता त्याज्येत्यलं प्रपञ्चेन । गौडास्तु आश्विनशुक्लसप्तमी देवीप्रवेशादौ द्वितीयैव ग्राह्या, तथाच भविष्योत्तरे—युगाद्यां वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीक्षन्ते न तासु तिथियुग्मतेति । वर्षवृद्धिर्जन्मदिनमिति वदन्ति, एतस्य वाक्यस्य निर्णयामृतादिष्वदर्शनाद्दोलायते मनः । इति सप्तमीसामान्यनिर्णयः ।

अथ सप्तमीविशेषाः । देवीपुराणे—चैत्रशुक्लपक्षप्रक्रमे, भास्करस्य च सप्तम्यां पूजां दमनकादिभिः । कृत्वा प्राप्नोति भोगादीन् विगतारिर्महातपाः । चैत्रशुक्लसप्तम्यामेव विष्णुधर्मोक्तं सूर्यव्रतम् । सूर्यपूजा होमः आब्दं व्रतम्, व्रतान्ते गोदानम्, सर्वकामाप्तिः सूर्यसालोक्यम्० द्वादशाब्दं व्रतकरणे विष्णुसायुज्यम् ।

वैशाखशुक्लसप्तम्यां निम्बसप्तमीव्रतम् । तदुक्तं भविष्योत्तरे—तृतीयां सप्तमीं वीर तच्छृणुष्वाग्रतो मम । निम्बपत्रैः

कृता या तु पापघ्नी शोकनाशिनी । अस्यामेव पाद्मोक्तं शर्करात्रतम् । प्रातः शुक्लतिलस्नानम् कुम्भस्थापनं तत्रपूजा,रात्रौ पञ्चगव्यप्राशनम् । अष्टम्यां दक्षिणा,वार्षिकं व्रतम्, प्रातः शर्करादानम् । 'शर्करा सप्तमी चैषा वाजिमेधफलप्रदा । सर्वदुःखप्रशमनी पुत्रसन्ततिवर्द्धिनी' । ब्रह्मपुराणे—आषाढशुक्लसप्तम्यां विवस्वान्नामभास्करः । जातः पूर्वास्तु तस्मात्तं तत्रोपोष्य यजेत्सदा । रथचक्राकृतौ रम्ये मण्डले सर्वकामदम् । भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्द्धूपविलेपनैः ।

भाद्रसितसप्तम्यां भविष्योत्तरोक्तमुक्ताभरणसप्तमीव्रतम् । शिवाम्बिकयोः पूजा,वेणुपात्रादिदानम् । सौवर्णादिडोरकधारणम्,सन्ततिवृद्धिः,विशेषेण मृतवत्साया व्रतमिदम् ।

आश्विनशुक्लसप्तम्यां समूलायां केवलायां वा पूर्वनिमन्त्रितफलद्वययुक्तबिल्वपत्रिकामानीय तया सह देवीं पूजयेत् । तदुक्तं लिङ्गपुराणे,—मूलाभावेपि सप्तम्यां केवलायां प्रवेशयेत् । युग्मभिन्नां च बिल्वस्य फलाभ्यां शाखिकां तथा । तथा च प्रतिमां देव्याः स्नात्वाभ्युक्ष्य प्रवेशयेत् । पूजा च बिल्वपत्रैरेव कार्या 'सप्तम्यां पत्रिकापूजेति ब्राह्मणवचनादित्यावाह्यनाथः । वस्तुतः पत्रिकेति पूज्याभिप्रायः ।

अथ मार्गशुक्लसप्तम्यां पाद्मोक्तं फलसप्तमीव्रतम् । काञ्चनफलदानम्, भानुपूजा, आब्दं व्रतम्, अन्ते विप्रमिथुनं सम्पूज्य हेमपद्मयुतशर्कराकुम्भदानम् । फलं सर्वपापक्षयः सूर्यसालोक्यम् । अस्यामेव ब्राह्मोक्तं मित्रसप्तमीव्रतम् । मित्राख्यसूर्य्यस्य जन्मदिनमिदम् । मित्रस्य पूजा षष्ठ्यां स्नपनमुपवासः रात्रौ जागरणम् । सप्तम्यां वपनं स्नानं रविपूजा । अष्टम्याञ्च मधुप्लुतपिष्टान्नभोजनम् । फलं सूर्यतुष्टिः । अस्यामेव

भविष्योत्तरोक्तं नन्दासप्तमीव्रतम् । ‘पञ्चम्यामेकभक्तं च षष्ठ्यां नक्तं प्रकीर्त्तितम् । सप्तम्यामुपवासं च कीर्त्तयन्ति मनीषिणः’ । रविपूजा पारणत्रयं पुत्राद्याप्तिः ।

अथ माघशुक्लसप्तम्यां भविष्योत्तरोक्तं रथसप्तमीव्रतम् । षष्ठ्यां शुक्लतिलस्नानम् सूर्यालये सूर्यपूजा । गृहमागत्य नित्यकृत्यकरणानन्तरमतैलभोजनम्, रात्रौ व्रतग्रहणम्, प्रातः काञ्चनरथोपरि सूर्यपूजा, रात्रौ जागरणम्, प्रातः काञ्चनरथं रक्तवस्त्रधेनू च दद्यात् । आरोग्यं पुत्राद्याप्तिः सूर्यसालोक्यञ्च । माघशुक्लसप्तमी अचला जयन्तीचोच्यते । सा चारुणोदयव्यापिनी ग्राह्या । भविष्योत्तरे—माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचना ।

अचलासप्तमीकृत्यम्

जयन्तीनाम सा प्रोक्ता सर्वपापहरा तिथिः । स्मृतिचन्द्रिकायाम्—सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तत्र स्नानं महाफलम् । तथा—माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः । अत्राचारात् सप्तार्कस्य वदरस्य च पत्राणि शिरसि कृत्वा स्नायात् । ‘एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् । मनोवाक्कायजं यच्च ज्ञाताज्ञाते तु ये पुनः । इतिसप्तविधं पापं स्नानान्मे सप्तसप्तिके । सप्तव्याधिसमायुक्तं हर माकरि सप्तमि’ इतिमन्त्रौ सूर्यसेननिबन्धे लिखितौ । प्रतापमार्त्तण्डे तु—यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु । तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमीति । रोकञ्च शोकञ्चेति मैथिलहरिनाथादिनिबन्धे । तत्र रोकं पापच्छिद्रं रोगमित्यर्थः । गर्ग्गः—रविवारेण युक्तायां सप्तम्यामुत्तरायणे । पुन्नामधेयनक्षत्रे पूजयेच्च दिवाकरम् । उत्तरायणे माघे । पुन्नामर्क्षाणि हस्तानुराधापुष्यमृगपुनर्वसवः । निर्णयामृते—सोमवारे त्वमावास्या भानुवारे च सप्तमी । अङ्गारकदिने प्राप्ता च-

तुर्थी वा चतुर्दशी । षष्टिर्वर्षसहस्राणि तत्कर्त्ता लभते फलम् । चतुर्थी सिता,चतुर्दशीत्वसिता । तथा —षष्ठीच सप्तमी चैव वारश्चेदंशुमालिनः । योगोऽयं पद्मकोनाम सहस्रार्कग्रहैः समः । अत्रारुणोदये सप्तमीस्नानाद्गङ्गायां कोटिसूर्यग्रहणसमानफलम् । 'अरुणोदयवेलायां शुक्ला माघस्य सप्तमी । गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैस्समेति विशेषवचनात् ॥ अचलापदव्युत्पत्तिर्भविष्योत्तरे इन्दुमत्या वेश्याया उपाख्याने । 'कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् । रात्र्यन्ते चालयेथास्त्वं दत्वा शिरसि दीपकम् । माघस्य सितसप्तम्यामचलं चालितं च यत् । जलं मलानां सर्वेषां स्मृतं प्रक्षालनं ततः । अचलासप्तमीस्नानं कथितन्ते विशाम्पते । सर्वपापप्रशमनं सर्वसौभाग्यवर्द्धनम्' । व्रतविधिरस्याम् षष्ठ्यामेकभक्तम्, अचलजले स्नानम्, महारजनरञ्जितवर्त्तिदीपदानं, जले शिवोमारविपूजा । गृहमागत्य नक्तं भुञ्जीत । रूपसौभाग्याप्तिः । अस्यामेवादित्यपुराणोक्तं पुत्रसप्तमीव्रतम् । 'माघमासे तु शुक्लायां सप्तम्यां समुपोषितः । यः पूजयेत्तु मां भक्त्या तस्याहं पुत्रतां व्रजे'। अस्यामेव भविष्योत्तरोक्तं कामदासप्तमीव्रतम् । उपवासः सूर्यपूजा होमश्च । अस्यामन्यस्यां वा सितसप्तम्यां धान्यव्रतम् । सूर्य्यपूजा सप्तधान्यदानम् नक्तभोजनम् सन्तानवृद्धिः । रवियुतसितसप्तम्यां पाद्मोक्तं कल्याणसप्तमीव्रतम् । प्रातर्गोदुग्धस्नानम्, अक्षतैः पद्मं कृत्वार्कार्चा, पारणा, वर्षान्ते उद्यापनम् । सर्वाघक्षयशिवसालोक्यम् । अस्यामेव विजयासप्तमीव्रतम् । पञ्चम्यामेकभक्तम् षष्ठ्यां नक्तम् सप्तम्यामुपवासः, अष्टम्यां पारणा, कलशस्थरविपूजा सप्तम्याम् । अब्दान्ते गौर्देया, सूर्यसालोक्यं फलमिति संक्षेपः ।

अथाष्टमीनिर्णयः। तत्र शुक्लाष्टमी सर्वैव परविद्धा ग्राह्या,-शुक्लपक्षेऽष्टमीचैवेति वचनात्, युग्मवचनाच्च। दूर्वाष्टमी शुक्लापि पूर्वैवोपोष्या। दूर्वा चैव हुताशनीतिवचनात्। कृष्णा तु सामान्यतः पूर्वयुता ग्राह्या,कृष्णपक्षेष्टमी चैवेतिवचनात्। उपवासे तु पक्षद्वयेप्यष्टमी परयुतैवेति ध्येयम्। उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम्। पक्षयो रुभयोरेष उपवासविधिः स्मृत इति नारदीयपुराणवचनात्॥ यत्तु कृष्णपक्षेऽष्टमी चैवेति वाक्येप्युपवासग्रहणं तद्रुद्रोपवासविषयम्। रुद्र-व्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिरिति वचनात्। यत्तु—कृष्णा-ष्टमी तथा रम्भा तृतीया वटपैतृकीत्यादिवचनं कृष्णाष्टम्याः पूर्व-विद्धोपादेयत्वविधायकं तत्कृष्णजन्माष्टमीपरमितिप्रतापरुद्रः। शेषं वक्ष्यते। इत्यष्टमीसामान्यनिर्णयः।

अथ तद्विशेषाः। लिङ्गपुराणे—अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ। चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः। प्राशनमन्त्रः—त्वामशोक नराभीष्ट मधुमाससमुद्भव। पिबामि शोकसन्तप्तो मामशोकं सदा कुरु। अशोकाष्टमीयम्। अस्यामेव भविष्यपुराणोक्तं सन्तानाष्टमीव्रतम्। उपवासः, कृष्णपूजा, रात्रौकृष्णमन्त्रजपादिः, प्रातः पारणम्। सन्तानवृद्धिः फलम्। अस्यामाश्विनशुक्लाष्टम्यामिव देव्या महापूजा कार्य्या। मार्कण्डेयपुराणे-शरत्काले महापूजा क्रियते या च वार्षिकीत्यत्र वार्षिकीत्यनेन सांवत्सरिकी पूजा पृथगुच्यते। तेन सम्वँत्सरस्यादौ चैत्रसितप्रतिपद्यारभ्याष्टमीपर्य्यन्तं क्रियमाणा पूजा लभ्यते। अतश्च शरद्वसन्तयोस्तुल्य एव दुर्गोत्सवः कार्य्यः।

अथ वैशाखशुक्लाष्टम्यां व्रतविशेषः देवीपुराणे—सहकार-फलैः स्नानं वैशाखे ह्यष्टमीदिने। आत्मनो देवतां स्नाप्य मांसी-

१ जटामासी

वालकवारिभिः। लेपनं फलकर्पूरधूपपञ्चसुगन्धिकम्। उपवासः, केतकीचंपकादिना देवीपूजा। शर्कराक्षीरनैवेद्यम्। कन्याविप्रभोजनम्। ततः पारणा। सर्वतीर्थाभिषेकफलम्।

अथ ज्येष्ठशुक्लाष्टम्यां ब्राह्मोक्तं शुक्लादेवीव्रतम्। उपवासः शुक्लापूजा प्रातः पारणम्। शुक्लाप्रीतिः फलम्। अस्यामेव भविष्योत्तरोक्ता शिवपूजा। शिवसालोक्यं फलम्। आषाढसिताष्टम्यां देवीपुराणोक्तं महिषघ्नीव्रतम्। हरिद्रातोयेन स्नानम्। तेनैव देवीस्नानम्। पञ्चोपचारपूजा। कन्याविप्रभोजनम्। दीपमालादानम्। ततो भोजनम्।

अथ श्रीकृष्णजन्माष्टमी। प्रतापरुद्रीये। सा च द्विविधा। शुद्धा विद्धाचेति। तत्र सप्तमीयोगरहिता शुद्धा। सप्तमीयुक्ता विद्धा। तत्र शुद्धा त्रिधा। समा न्यूना अधिका चेति, विद्धाप्येवं त्रिधा। समा सूर्योदयात्सूर्योदयपर्यन्ता। ततोऽर्वाङ्निवृत्ता न्यूना। सूर्योदयमतिक्रम्य प्रवृत्ताधिका। तत्र शुद्धसमा शुद्धन्यूनाच रोहिणीयोगायोगाभ्यां प्रत्येकं द्विधा। शुद्धाधिकातु चतुर्द्धा, पूर्वदिन एव रोहिणीयुक्, परदिन एव रोहिणीयुक्, उभयत्र रोहिणीयुक्, उभयत्र तदयुक्चेति। एवं शुद्धाष्टविधा। एवं विद्धसमा विद्धन्यूना च रोहिणीयुक्तत्वायुक्तत्वाभ्यां प्रत्येकं द्विधा,विद्धाधिकातुशुद्धाधिकावच्चतुर्द्धा। एवं विद्धाप्यष्टधा। उभयोर्मेलने षोडशभेदा भवन्ति। सूर्यसेनीये तु द्वावन्याववान्तरभेदावाहुः। अर्द्धरात्रे रोहिणीयुक्ताष्टमी जयन्तीनाम एका। द्वितीया नवम्या रोहिण्या बुधसोमान्यतरेण युक्ता। इत्थमष्टादशप्रकारा जन्माष्टमी। तत्र शुद्धयोः समन्यूनयो रोहिणीसहितयोस्तद्रहितयोर्वा न विवादः,द्वितीयदिने-

---

१ सुगन्धवाला

ऽष्टम्यभावात् । एवं विद्धयोरपि समन्यूनयो रोहिणीसहितयोस्त-द्रहितयोर्वा न विवादः । रोहिणीसाहित्यं च मुहूर्त्तमात्रेणापि ग्राह्यम् । मुहूर्तमपि लभ्येतेतिवचनात् । शुद्धाधिका विद्धाधिका वा यदाऽन्यतरस्मिन्नेव दिने रोहिणीयुक्ता तदा सैव ग्राह्या । 'प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । मुहूर्तमपि लभ्येत सोपोष्या सा महाफला । मुहूर्त्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते । अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत्' इति विष्णुरहस्यवचनादिति । शुद्धाधिका यदा पूर्वस्मिन्दिने निशीथे रोहिणीयुक्ता उत्तरदिनेपि तद्युक्ता तदा पूर्वैव ग्राह्या, 'रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत् । तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् । इति भविष्योत्तरवचनात् । पारणं च द्वितीयदिने तिथिनक्षत्रवियोगे कुर्यात् । 'रोहिणीसहिता सेयं विद्वद्भिः समुपोषिता । वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिन' इति । तथा—भान्ते कुर्य्यात्तिथेर्वापि शस्तं भारत पारणम्' इति । यदा तु शुद्धाधिकाया दिनद्वयेप्यर्द्धरात्रं विहाय रोहिणीयोगस्तदापि पूर्वैव ग्राह्या, तस्याः सकलाहोरात्रव्यापित्वात्, प्रथमातिक्रमे कारणाभावाच्च । कपालाधिकरणन्यायात् प्रथमैव कार्य्या । यदा तु शुद्धाधिका दिनद्वयेऽपि रोहिणीरहिता, तदाप्यहोरात्रव्यापित्वात्पूर्वैव ग्राह्या । 'दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला । रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुतामिति वचनाच्च । विद्धाधिका तु यदा पूर्वस्मिन्नेव दिने निशीथे रोहिणीयुक्ता दिनान्तरे तु निशीथं विहाय रोहिणीयुक्ता तदा पूर्वैव ग्राह्या, 'सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि । भविता साष्टमी पुण्या यावच्चन्द्रदिवाकराविति वह्निवचनात् । यदा तु विद्धाधिकोत्तरस्मिन्नेव दिने निशीथे रोहिणीसहिता पूर्वदिनेतु निशीथं विहाय रोहिणीयुक्ता तदोत्तरैव ग्राह्या । 'मासि भाद्रपदेऽष्टम्यां कृष्णप-

क्षेऽर्द्धरात्रके। शशांके वृषराशिस्थे प्राजापत्यर्क्षसंयुते। उपोषितोऽर्चये-त्कृष्णं यशोदां देवकीं तथेतिभविष्योत्तरोक्तेः। यदा तु विद्धाधिका दिनद्वयेप्यर्द्धरात्रे रोहिणीयुक् दिनद्वयेप्यर्द्धरात्रं त्यक्त्वा वा रोहिणी-युक् तदोत्तरैव ग्राह्या। 'वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी। सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमीति ब्रह्मवैवर्त्तात्। तथा—सप्तमीसंयुता-ष्टम्यां भूत्वा ऋक्षं द्विजोत्तम। प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं-म्भवेद्यदि। तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरेति। नि-र्णयामृते—विद्धाधिका दिनद्वये रोहिणीयुगपि पूर्वैव ग्राह्या, अष्ट-यामिकमिति पारणाङ्गीभूतब्राह्मणभोजनदक्षिणादिकं रोहिण्यष्ट-म्यावतिक्रम्य क्रमेणापि विधीयमानं सम्पूर्णयामिव कृतं महाफलं भवतीत्यर्थ इत्युक्तं, तच्चिन्त्यम्। अथ शुद्धा विद्धा याष्टमी अर्द्धरात्रे रोहिणीयुक् सा जयन्तीत्युच्यते 'प्राजापत्येन

जयन्तीव्रतम्

संयुक्ता कृष्णे नभसि चाष्टमी। जयन्तीनाम सा प्रोक्ता सा ह्युपोष्या महाफलेति। तथा—अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत्। तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मज-म्। सोपवासो हरेः पूजां कृत्वा तत्र न सीदति। तथा—रोहिणी-सहिता कृष्णा मासि भाद्रपदेष्टमी। अर्द्धरात्रादधः सा हि कलामा-त्रा यदा भवेत्। तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः। तमेवोपवसेत्कालं कुर्य्यात्तत्रैव जागरम्। तथा—अर्द्धरात्रे तु यो-गोऽयं तारापत्युदये सति। जयन्तीनाम सा रात्रिस्तत्र जातो जनार्द्दनः। नियतात्मा शुचिस्स्नातः पूजान्तत्र प्रवर्त्तयेत्। नभ-सीति शुक्लादिमासमभ्युपेत्य, भाद्रपद इति कृष्णादिमासमङ्गी-कृत्य। अन्यत्रापि—रोहिणीनाम नक्षत्रं जयन्तीनाम शर्वरी। मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः। इयं च यत्रै-वार्द्धरात्रे रोहिणीयोगः सैवोपोष्या। यदा तु दिनद्वयेप्यर्द्धरात्रे योगस्तदा तूत्तरैव। 'वर्ज्जनीया प्रयत्नेन सप्तमीसहिताष्टमीत्युदा-

ह्तवचनात्। यदि तु सूर्य्योदये स्वल्पाष्टमी सा च रोहिणीयुक्ता। उपरि समस्ता नवम्या शशिबुधान्यतरेण युक्ता सा जयन्ती मुक्तिदा, सम्पूर्णाष्टमीं परित्यज्य स्वल्पापि सैवोपोष्या। पाद्मे—प्रेतयोनिगतानाञ्च प्रेतत्वं नाशितं नरैः। यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता। किम्पुनर्बुधवारेण सोमेनापि विशेषतः। किम्पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा। स्कान्दे—उदये चाष्टमी किञ्चिन्नवमी सकला यदि। सा भवेद्बुधसंयुक्ता प्राजापत्यर्क्षसंयुता। अष्टवर्षशतेनापि लभ्यते वा न लभ्यते। अत्राहुः, कृष्णाष्टमी द्विधा जन्माष्टमी जयन्ती च, तत्र जन्माष्टमीव्रतम् भविष्योत्तरे—सप्तम्यां लघुभुक्कुर्यादन्तधावनपूर्वकम्। उपवासस्य नियमं रात्रौ सुप्तोजितेन्द्रियः। केवलेनोपवासेन तस्मिन् जन्मदिने मम। सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः। जयन्तीव्रतम् अग्निपुराणे—कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी नृप! जयन्तीनाम सा प्रोक्ता उपोष्या तु प्रयत्नतः। उपवासश्च तत्रोक्तो महापातकनाशनः। तद्दिने पूर्वदेवक्या विष्णुराराधितः किल। अष्टमी रोहिणीयुक्ता निशार्द्धे दृश्यते यदि। मुख्यकाल इति ख्यातस्तत्र जातो जनार्द्दनः। जयन्त्यां चन्द्रार्घस्यावश्यकत्वात्तस्य चन्द्रोदयकालीनत्वान्निशीथे रोहिणीयोगः प्रशस्त इति भावः। ननु जन्माष्टमीजयन्तीव्रतयोः कथं भेदः, अथ नित्यकाम्ययोरिव भेदोऽस्तु। तथाहि—

जन्माष्टमीजयन्त्योर्भेदाभेदविचारः।

नित्या जन्माष्टमी अकरणे प्रत्यवायश्रवणात्। 'गृध्रमांसं खरङ्कार्क श्येनं वा मुनिसत्तम। मांसं च द्विपदां भुङ्क्ते कृष्णजन्माष्टमीदिने। श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्। न करोति नरो यस्तु भवति क्रूरराक्षसः। वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम्। न करोति महाप्लीहा व्याली भवति कानने' इत्यादि। जयन्ती काम्या फलविशेषश्रवणात्। 'बहुजन्मकृतं

पापं हन्ति सोपोषिता तिथिः । महाजयाय कुरुतां जयन्तीं मुक्तयेऽनघ । धर्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव । ददाति वाञ्छितानर्थान्नानार्थाँनतिदुर्लभान् । इत्यादिबहुविधफलबोधनादिति चेन्न । अयं हि गुणविधिर्न तु पृथग्विधिः, जन्माष्टम्येव जयन्ती भूत्वा फलाधिक्यरूपगुणाय भवति गोदोहनवत् दध्यादिवच्च । यथा प्रकृतमेवापाम्प्रणयनमाश्रित्य पशुरूपफलाय गोदोहनमात्रं विधीयते, एवन्नित्याग्निहोत्रे फलाय दधि, एवं नित्यां जन्माष्टमीमाश्रित्य फलविशेषाय रोहिणीयोगो विधीयतामिति, अत्रोच्यते । जन्माष्टमीजयन्त्योर्भेदो नामभेदात् । जन्माष्टमीव्रते केवलतिथिनिमित्तम् । जयन्तीव्रते रोहिणीयोग इति । व्रतभेदात् । जन्माष्टम्यामुपवासः केवलः जयन्त्यां दानादिविशिष्टः स इति । स्मारयति हि, 'केवलेनोपवासेन तस्मिन् जन्मदिने मम । शतजन्मकृतात्पापान्मुच्यते नात्र संशयः' इति । तस्माज्जन्माष्टमीव्रतस्योपवासमात्रं स्वरूपम् । तत्रापि जागरादिकरणे न दोषः । जयन्तीव्रतस्य तु दानादिसहित उपवासः स्वरूपं, स्मर्य्यते हि—तुष्ट्यर्थं देवकीसूनोर्जयन्तीसम्भवं व्रतम् । कर्त्तव्यं वित्तमानेन भक्त्या भक्तजनैरपि । एवं शुद्धमिश्रभेदाद्भेदः । शुद्धं नित्यमात्रं जन्माष्टमीव्रतम् । अकरणेदोषश्रवणात् । जयन्तीव्रतं नित्यं काम्यं चेति मिश्ररूपम् । 'अकुर्वन् याति नरकं यावदिन्द्राश्चतुर्दश । शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजने । तत्पापं लभते कुन्ति जयन्तीविमुखो नर' इत्यादिवाक्यान्नित्यं जयन्तीव्रतम् । फलश्रवणाच्च काम्यम् । नच नित्यानित्यसंयोगविरोधः[1] । संयोगपृथक्त्वन्यायेनोपपत्तेः[2] । निर्देशादपि व्रतभेदः । तथा च भृगुः—जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च ।

---

१ पूर्वमीमांसा अ० २ पा० २ अधि० ११ ।

२ पू० मी० अ० ४ पा० ३ अधि० ३ ।

पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम्। अनुष्ठानभेदादपि भेदः, अन्यथा यस्मिन्नब्दे नवम्यादौ रोहिणीयोगस्तत्र जन्माष्टमीलोपः स्यात्। अतोऽपि जयन्त्यभावेपि क्रियत एव जन्माष्टमी। नन्वेवं सति यदा दिनद्वयेऽप्यर्द्धरात्रेऽष्टमी रोहिणी तूत्तरदिने एव तत्र पूर्वदिने जन्माष्टम्युपवासः परदिने जयंत्युपवास इत्युपवासद्वयं प्रसज्जेतेति चेन्न, रोहिणीयोगे सति जयन्तीव्रत एव जन्माष्टमीव्रतान्तर्भावसंभवात्। सर्वत्र गुणवन्नक्षत्रसंयोगाभावे केवलतिथेरपेक्षणीयत्वात्। गुणविकृतित्वादपि भेदः, जयन्ती जन्माष्टम्या गुणविकृतिः। दर्शस्य साकंप्रस्थापीयकवत्। यथा दर्शस्य सर्वे प्रयोगाः साकंप्रस्थापीयके, भेदस्तु दर्शयागे शान्ताज्यहविषोर्दधिपयसोः पृथगेव दानम् साकंप्रस्थापीये सहैवेति। तथा जन्माष्टम्यामुपवासो जयन्त्यां दानादिरधिको गुणोऽभिधीयते अतो जयन्ती गुणविकृतिः। आश्रयाश्रयिभावादपि भेदः, जन्माष्टमीमाश्रित्य रोहिणीयोगनिमित्तकदानादिविधानात्। यथा ज्योतिष्टोमआश्रयः। तस्याङ्गान्युद्गीथादीनिं तं चोग्दीथमाश्रित्योपासनानि विहितानि ओमित्येकाक्षरमुद्गीथमुपासीतेति कृतमप्रकृतेन। वयन्तु ब्रूमः—यैव रोहिणीयुक्ता जयन्तीत्युच्यते सैव मुख्या जन्माष्टमी। 'रोहिणीनाम नक्षत्रं जयन्तीनाम शर्वरी। मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दन इत्यादिभूरिवचनेभ्यः। तस्माद्विशिष्टाभावे केवलाप्यष्टमी कर्त्तव्येति उभयोर्वैशिष्ट्यावैशिष्ट्ये भेदके। नतु व्रतयोर्भेद इतिकर्त्तव्यताभेदाभावाद्देवताभेदाभावाच्चेति। व्रतद्वयत्वे चोपवासद्वयं वज्रलिप्तं स्यादिति।

अथ पारणनिर्णयः। विष्णुधर्मे—जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते। कृत्वोपवासन्तिथ्यन्ते तथा कुर्य्याच्च पारणम्। ब्राह्मे—कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी। तत्रो

पवासङ्कुर्वीत तिथिभान्तेच पारणम् । ब्रह्मवैवर्त्ते—अष्टम्यामथ रोहिण्यान्न कुर्य्यात्पारणं क्वचिम् । हन्यात्पुराकृतं कर्म उपवासार्ज्जितं फलम् । तिथिरष्टगुणं हन्ति नक्षत्रन्तु चतुर्गुणम् । तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् । ब्रह्मवैवर्त्ते—सर्वेष्वेवोपवासेषु दिवापारणमुच्यते । अन्यथा पुण्यहानिः स्याद्विना श्रवणपारणम् । गारुडे—अन्यतिथ्यागमो रात्रौ तामसैस्तेजसेपि वा । तामसे पारणं कुर्वंस्तामसीं गतिमाप्नुयात् । नारदीये—तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणन्तु न कर्त्तव्यं यावदेकस्य संक्षयः । तिथ्यृक्षयोर्यदा च्छेदो नक्षत्रान्तमथापि वा । अर्द्धरात्रेऽथवा कुर्य्यात्पारणं त्वपरेऽहनि' इति हेमाद्रिलिखितवचनम् । अस्यार्थो निर्णयामृते । तिथिनक्षत्रान्ते अन्यतरान्ते वा दिवा पारणं कुर्य्यात् । यद्यर्द्धरात्रे तिथिभान्तस्तदा अपरेऽहनि दिवसे एव पारणं कुर्यात् । निशि पारणनिषेधादर्द्धरात्रे भोजननिषेधाच्चेति । तन्न सम्यगिति ब्रूमः, 'अर्द्धरात्रेऽथवा कुर्य्यात्पारणम्' अर्द्धरात्रेपि तिथिभान्ताभावोपरि कुर्यादित्यर्थात् । 'न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् । तत्र निश्यपि तत्कुर्य्याद्वर्जयित्वा महानिशाम्' । इति वचने महानिशानिषेधस्तदर्वाक्पारणकालसत्वेपि बोध्यः । अन्यथा निशीथपारणविधायकवचनविरोधादिति । अशक्तस्तु दिवा तिथिभान्ताभावेपि नृत्यगीतादिरूपोत्सवांते पारणं कुर्यात् । 'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्यात्तु पारणमिति कालादर्शनिबन्धवचनादिति । एतच्च स्त्रीनृसाधारणम् । 'प्रतिवर्षविधानेन मद्भक्तो धर्मनन्दन । नरो वाप्यथवा नारी यथोक्तफलमाप्नुयादिति भविष्योत्तरादिवचनादिति ।

अथ भाद्रसिताष्टम्यां भविष्योत्तरोक्तं दूर्वाष्टमीव्रतम् । 'शुक्ला-

ष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् । दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते'। उपवासः फलाहारो वा, दूर्वा पूज्या, दूर्वाभिर्विविधफलैश्च शिवपूजा, विप्रेभ्यः फलादिदानम् । ब्रह्महत्यादिपापक्षयः फलम् । स्त्रीव्रतमिदम् । प्रतिवर्षं वधूजनैरिति वचनात् । अत्र दूर्वापूजाया अकरणे दोषः । पुराणसमुच्चये—या न पूजयते दूर्वां मोहादिह यथाविधि । त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः । तथा—दूर्वामभ्यर्चयेद्भक्त्या ज्येष्ठां मूलं च वर्ज्जयेत् । स्कान्दे । शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी । सिंहार्के साच कर्त्तव्या कन्यार्के न कदाचन । अगस्त्य उदिते तात पूजयेन्नामृतोद्भवाम् । अमृतोद्भवां दूर्वाम् । 'कर्त्तव्या चैकभक्तेन ज्येष्ठामूलं यदा भवेत्'। ज्येष्ठामूलाभावे उपवासो ऽनग्निपकाशनं वा कार्यम् । दूर्वापूजा मध्यान्हादुपरि कार्य्या 'मुहूर्त्ते रौहिणेष्टम्यां पूर्वावा यदि वा परा । दूर्वाष्टमी तु सा कार्य्या ज्येष्ठां मूलं च वर्जयेत्' । अत्र परविद्धानिषेधेपि परविद्धाविधानम् पूर्वस्यां ज्येष्ठामूलयुक्तायां परस्यां कर्मकालव्यापिन्यां परापि कार्य्येति ज्ञापनार्थम् । कालादर्शे—भाद्रशुक्लाष्टमी ज्येष्ठानक्षत्रेण समन्विता । महती कीर्तिता तस्यां ज्येष्ठां देवीं प्रपूजयेत् ।

ज्येष्ठाव्रतम् । उपहारैर्बहुविधैरलक्ष्मीविनिवृत्तये । मात्स्ये—प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतं व्रतम् । प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि । तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षतः । प्रतिवर्षं क्रियमाणं ज्येष्ठाव्रतं नक्षत्राभावे तिथावेव केवलायां कार्य्यं, ज्येष्ठायुक्तायामेवतिथौ ज्येष्ठाप्राधान्येन यत् क्रियते तत्तिथिनक्षत्रयोगाभावे केवलनक्षत्रे कार्य्यमित्यर्थः ।

अथास्यामेवारभ्याग्रिमाष्टमीपर्यन्तं स्कान्दोक्तं महालक्ष्मीव्रतम् । 'महालक्ष्मीव्रतन्तत्र यस्यामुदयते शशी । यस्यामुदयते भानुः सा भवेज्जीवपुत्रिकेति मनूक्तेः । विशेषः कथायाम् । इदं व्रतं ज्येष्ठा-

युक्ताष्टम्यामारब्धव्यम् ज्येष्ठाभावे केवलायाम् । समापनञ्चन्द्रोदयव्यापिन्याम् । 'चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता' इत्युक्तेः । उभयत्र तद्व्यापित्वे पूर्वस्याम् । कृष्णपक्षेऽष्टमीचैवेत्युक्तेः । उत्तरदिने चन्द्रोदयोत्तरमुहूर्त्तत्रयव्यापिनी चेदुत्तरस्याम् । 'पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा । त्रिमुहूर्त्ता तु विज्ञेया परतश्चोर्द्धगामिनीति वचनात् । 'कन्यागतेऽर्के प्रारभ्य कर्त्तव्यं न श्रियोऽर्चनम् । हस्तप्रान्तदलस्थेऽर्के तद्व्रतं न समापयेत् । अर्द्धरात्रमतिक्रम्य वर्तते योत्तरातिथिः । तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं शुभम् । तथा—पूजनीया प्रयत्नेन अष्टमी प्रावृषि श्रियः । दोषैश्चतुर्भिः सन्त्यक्ता सर्वसंपत्करी तिथिः । दोषचतुष्टयम्—नवमीवेधः १ रवेर्हस्तोत्तरदलगतत्वम् २ त्रिस्पृग्दिनम् ३ अवमदिनं चेति ४ । 'पुत्रहा नवमीविद्धा स्वघ्नी हस्तोर्द्धगे रवौ । कर्मघ्नी त्रिदिने प्रोक्ता त्याज्या चैवावमेपि वा' । दोषचतुष्टयवर्जनमुपक्रमोद्यापनयोरेव । अतएव षोडशाब्दपर्यन्तं नैरन्तर्य्येण कुर्वन्ति । तथा चोक्तम्—श्रियोऽर्चनं भाद्रपदे सिताष्टमीं प्रारभ्य कन्यामगते च सूर्ये । समापयेत्तत्र तिथौ हि यावत्सूर्यस्तु पूर्वार्द्धगतो युवत्याः । शक्तौ सत्यां दोषः परिहार्य्यः, अपरिहार्यत्वे न मध्ये व्रतलोपः । नवमीवेधनिषेधोपि चन्द्रोदयादर्वाग्बोध्यः, चन्द्रोदयादूर्द्ध्वं त्रिमुहूर्त्तव्यापिनी नवमीविद्धैव ग्राह्येत्युक्तम् ।

अथाश्विनसिताष्टमीनिर्णयः । सा च दुर्गोपवासादिषु नवमीयुतैव ग्राह्या । वसुरन्ध्रयोरिति युग्मवाक्यात् । तथा च—नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता । नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैः । तथा—अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः । तथा—अष्टम्यां सनवम्यां च जगन्मातरमम्बिकाम् । पूजयित्वाऽऽश्विने मासि विशोको जायते नरः । इति नवमीवेधप्रशं-

सावचनानि। अथ सप्तमीवेधे निन्दावचनानि। 'पुत्रान्हन्ति पशून्हन्ति हन्ति राज्यं सराष्ट्रकम्। हन्ति जातानजाताँश्च सप्तमीसहिताष्टमी। तस्मात्सर्वप्रयत्नेन सप्तमीवेधसंयुता। वर्जनीयाऽष्टमी चाथ भुवो राज्यमभीप्सुभिः। सप्तमीशल्यसंयुक्ता वर्जनीया सदाष्टमी। स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदयो भवेत्। शरन्महाष्टमी पूज्या नवमीसंयुता सदा। सप्तमीसंयुता नित्यं शोकसन्तापकारिणी'। तथा—जम्भेन सप्तमीयुक्ता पूजिता तु महाष्टमी। इन्द्रेण निहतो जम्भस्तदा दानवपुङ्गवः। सप्तमीशल्यसंयुक्तां मोहादज्ञानतोपि वा। महाष्टमीं प्रकुर्वाणो निरये परितप्यते। तथा, नवमी च सदा देव्या मूर्त्तिर्दैत्यविनाशिनी। अत एव हि पूज्या स्यादष्टमी नवमीयुता। इति निर्णयामृतराजमार्त्तण्डहेमाद्रिकालादर्शक्षेमप्रकाशिनिबन्धेषु लिखितानि वचनानि दर्शितानि। दर्शनीयानि च भोजराजीये भीमपराक्रमे। 'न दिवा न निशापि च विष्टिहता नच सप्तमीशल्यतमोपहता। यदि चाष्टमीशेषयुता नवमी त्वमरैरपि पूज्यतमा नवमी'। अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत्। कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः'। तथा—आश्वयुक्शुक्लपक्षे तु याष्टमी मूलसंयुता। पूर्वया षाढया सार्द्धमृक्षद्वययुताथवा। सा महानवमी प्रोक्ता त्रैलोक्येपि सुदुर्लभा। कन्यां गते सवितरि शुक्लपक्षेऽष्टमीयुता। मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता। आभ्यामष्टमीनवम्योर्युग्मतासूचिता, मूलर्क्षयुक्तापि सप्तमीलेशसहिता चेद् दुष्टैव। यदुक्तं दुर्गोत्सवे—मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः। लेशमात्रेण सप्तम्या अपि स्याद्दूषिता यदि। देवीपुराणे—सन्तर्पयन्ती हुङ्कारैः खडोत्खातपरापरा। नवम्यां पूजिता देवी दद्यादानन्ददं फलम्। सा पुण्या सा पवित्रा च सा धर्म्या सुखदायिनी। तस्यां संपूजनीया तु चामुण्डा मुण्डमालिनी।

रूपनारायणीये—मूले संपूजयेद्देवीं तथा सलिलदैवते । वैश्वदेवे तु नक्षत्रे पूजिता दुःखदा भवेत् । वैश्वदेवे उत्तराषाढायाम् । उत्तराषाढनिषेधः सति सम्भवे । तदुक्तं—मूलाभावे च कर्त्तव्या अष्टमी तोयसंयुता । विश्वयुक्ता च कर्त्तव्या अष्टमी नवमीयुता । तोयं पूर्वाषाढा, विश्वमुत्तराषाढा । ग्रन्थान्तरे विशेष उक्तः, मूलेनागमनं देव्याः पूर्वाषाढासु पूजनम् । उत्तरासु बलिं दद्याच्छ्रवणे चापराजिता । सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि । बलिदानं प्रकर्त्तव्यं तत्र देशे शुभावहम् । रिक्ता नवमी, पूर्णा दशमी । 'बलिदाने कृतेऽष्टम्यां पुत्रभङ्गो भवेन्नृप' । तथा—अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् । प्रभाते बलिदानं च कियन्मात्रापि लभ्यते । नवम्यां तत्र संपूज्या दुर्गा दुर्गार्तिनाशिनी' । उदयगामिन्यामष्टम्यामुपवासपूजादिकम् । उदयगामिन्यां नवम्यां बलिदानमिति पर्यवसितं । नन्वत्र विरुद्धानि वाक्यानि श्रूयन्ते । तथाहि—अहं भद्रा च भद्राहं नावयोरन्तरं क्वचित् । सर्वसिद्धिं प्रदास्यामि भद्रायामर्चिता ह्यहम् । भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया । तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः । तथा—विष्टिं त्यक्त्वा महाष्टम्यां मम पूजां करोति यः । तस्य पूजाफलं न स्यात्तेनाहमपमानितेत्यादीनि इति चेत् सत्यम् । सप्तमीविद्धाविधायकवचनान्यग्रिमदिनेऽष्टम्यभावविषयकाणि । नच 'सप्तम्यामुदिते सूर्ये परतश्चाष्टमी भवेत् । तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेहनि । दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते' । इत्यादीनि परदिनेऽष्टमीलाभेपि सप्तमीविद्धाविधायकानीति वाच्यम् । तेषां नवमीक्षयविषयत्वात् । तदुक्तं स्मृतिसंग्रहे—'यदा सूर्योदये न स्यान्नवमी चापरेऽहनि । तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप' । दुर्गोत्सवेपि—उत्तरास्तिथयो यत्र क्षयं या-

न्ति परेऽहनि। पूर्वाष्टमीं तदा कुर्यादन्यथा त्वशुभं भवेत्। सूर्यसेनमहीपालनिबन्धे तु नवमीयुक्ताष्टमीनिषेधकवाक्यानि कृष्णपक्षे नवम्यां विहिते देवीप्रबोधे तदङ्गत्वेन क्रियमाणकृष्णाष्टम्यधिकरणकदेवीपूजाविषयाणि । 'कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी' इत्यादिवाक्यैः कृष्णाष्टम्याः पूर्वविद्धाया एव प्राशस्त्याभिधानात्। नच रूपनारायणनिबन्धे तु अष्टमीसामान्यनिर्णयवाक्यान्येव लिखितानि न महाष्टम्या विशेषनिर्णय इति वाच्यम्। आश्वयुक्शुक्लपक्षे तु याष्टमी मूलसंयुता। तथा, मूलेनापि हि संयुक्तेत्यादिवाक्यैर्विशेषनिर्णयकरणात् । आश्वयुगिति कन्यागत इत्यादिविशेषलिङ्गैर्महाष्टम्या एव प्रतिपादनादिति । यच्चानन्तभट्टीयादिषु महाष्टम्यादिविशेषनिर्णयो न कृतः। तेषां ग्रन्थकृतामियं शैली यत् सामान्यनिर्णयप्राप्तानां विशेषनिर्णयप्रयासो न क्रियते इति। तस्माद्वसुरंध्रयोरित्यादिसामान्यवाक्यनिर्णीताया महाष्टम्या निर्णयार्थं व्यर्थं विशेषवाक्यप्रपञ्चेनेत्यनन्तभट्टादीनामभिप्रायः। ननु भविष्योत्तरे—तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी। प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह'इति, अत्र अहनीति दिवापूजा विधीयते। तथा—निशायां पूजिता देवी वैष्णवी पापनाशिनी, तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूजयेत्। तथा—महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी। सप्तम्या संयुता कार्या मूलेन तु विशेषतः' इत्यादिवाक्यैर्विविधिपूजाया विधानान्निशि पूजायां सप्तमीविद्धा दिवापूजायां नवमीविद्धाद्रियतामिति चेद्। भ्रान्तोसि, सप्तमीविद्धाविधायकवचनानां तिथिक्षयपरत्वादियुक्तम्। किमत्र विनिगमकमिति चेत्सत्यम्। महाप्रामाणिककविलिखितयोः स्मृतिसंग्रहदुर्गोत्सवयोर्वचने एव 'सूर्योदये यदा न स्यान्नवमी चापरेहनि। तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप' । 'उत्तरा

स्तिथयो यत्र क्षयं यान्ति नराधिप । पूर्वाष्टमीं तदा कुर्यादन्यथा त्वशुभं भवेत्' इति । तत्तु वचनाभावाद्गौरवादुपवासद्वयकल्पनापत्तेश्च पूजाद्वयकल्पना कल्पनैव । नच तेनाहमपमानितेति निषेधवचनस्य निर्विषयत्वापत्तिः, तिथिक्षयविषयत्वात् । अयमभिप्रायः । अष्टमीक्षयवशात्सप्तमीविद्धाष्टमीप्राप्तौ विष्टिभिया दिवैव पूजा येन त्यज्यते तेनाहमपमानितेति । तस्मादेकस्यामेवाष्टम्यां दिवापूजानिशीथपूजयोरुभयोरपि करणे लाघवं तिथिद्वये करणे गौरवमिति । यत्त्वानन्दकरदीक्षितैः स्वकृते विश्वरूपनिबन्धानुसारिणिदैत्यनारायणनिबन्धे लिखितम् । अष्टमीव्रतं तु रात्रिव्रतम्, तत्र देवीपुराणे—रवाविषे तु कन्यास्थे शुक्लाष्टम्यां प्रपूजयेत् । सोपवासो निशार्द्धेतु महाविभवविस्तरैः । पूजां समारभेद्भक्त्या नक्षत्रे वारुणेपि च । पशुघातश्च कर्त्तव्यो गवलाजवधस्तथा । बलिक्षयं सुरेशानां कृत्वा सर्वां निशां नयेत् । इषे आश्विने, गवलो महिषः । अजश्छागः । तथाभविष्ये—सोपवासैर्धूपमाल्यै रात्रि जागरणेन च । उपोषणमथाष्टम्यां साष्टशक्तेश्च पूजनम् । नवम्यामुग्रचण्डायास्तद्वद्देवार्चनं दिवा । पूजाच वलिदानञ्च रात्रौ मातॄः प्रपूजयेत् । पाद्मे—कुलं पुत्रं पशून् राज्यं वीर्यमायुस्तथैव च। प्रथमा चाष्टमी पूज्या यदीच्छेच्छ्रेय आत्मनः । दुर्भिक्षं तत्र जानीयान्नव वर्षाणि पञ्च च । अयाज्या चाष्टमी यत्र नवमीसहिता नृप । भविष्ये—देवीनिवेशनं यत्र नवम्याञ्च नराधिप । राजपीडा भवेत्तत्र बलप्राणप्रणाशिनी । देवीपुराणे ब्रह्मोवाच । 'आश्विने मासि मेघान्ते महिषादिनिबर्हिणीम् । देवीञ्च पूजयित्वा तु अर्द्धरात्रेष्टमीषु च । घातयित्वा पशून्भक्त्या ते भवन्ति महाबलाः । बलिञ्च ये प्रयच्छन्ति सर्वभूतविनाशकम् । तेषां वै तुष्यते देवी यावत्कल्पन्तु शाङ्करी' इत्यादि

वाक्यस्वरसात्सप्तमीविद्धैव ग्राह्येति। तथा—महाष्टम्यां भगवती भद्रायामपि पूजिता। ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी'इत्यादिवाक्यपर्यालोचनया पूर्वविद्धैव लभ्यते रात्रिपूजैव च लभ्यते इति। तदपि तुच्छतरम्, रात्रिपूजाविधायकवाक्यानां सति सम्भवेऽतिप्राशस्त्यपरत्वात्। पूर्णाष्टम्यां दिवापि विष्टिसम्भवाद्दिवारात्रिविहिते पूजाद्वयेऽवश्यकरणीये विष्टेरदोषत्वगुणवत्वकथनादुक्तयुक्तेश्चेति। दुर्भिक्षं तत्रजानीयादित्यपि षष्टिदण्डात्मिकायामष्टम्यामग्रिमदिने च घटिकात्मिकायां नवमीविद्धायामपि पूजादिकं न कर्त्तव्यमित्येवंपरम्। पूर्वदिन एव दिवारात्रिपूजयोः काललाभात्। षष्टिदण्डाधिकघटिकादेर्ज्योतिश्शास्त्रे तिथिमलत्वाभिधानादिति। अन्यथा 'अष्टमी नवमीयुक्ता नवमी नाष्टमीयुता। अर्द्धनारीश्वरप्राया तिथिः सर्वव्रतादिषु'। इत्यादिबहुवचनविरोधः स्यात्। उपवासे शुक्लाष्टम्या नवमीविद्धायाः सर्वैरेवनिबन्धिभिरभ्युपगमात्। अतएव 'सोपवासो निशार्द्धेतु'इतिश्रुतेः यदाष्टम्युपवासविधिस्तदा पूजा प्राप्यते उपवासस्तु नवमीयुक्तायामेवेति न काप्यनुपपत्तिः। निर्णयामृते तु—महाष्टम्याश्विने मासि इतिमूलयोगवैशिष्ट्यविधिरयं 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इतिन्यायेन सप्तमीविद्धाविधेर्मूलयोगवैशिष्ट्यपरत्वं प्रतीयते न सप्तमीविद्धाविधानार्थत्वमिति। किञ्च सप्तमीविद्धाविधायकवाक्यानि विश्वरूपनिबन्धे लिखितान्यपि चिरन्तनानन्तभट्टीयभोजराजीयादिनिबन्धेष्वदर्शनात्सन्दिग्धमूलकान्यपीति ज्ञायते। एवं मैथिलेऽपि जगद्गुरुसंज्ञको निशीथपूजासप्तमीविद्धाप्रामाण्यं वदन् जगल्लघुरेव गण्यते। पुत्रवतस्तु महाष्टम्यामुपवासो निषिद्धः। कालिकापुराणे—उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्। यथा तथैव पुत्रार्थी व्रती देवीं प्रपूजयेदिति। एतच्च केवलाष्टमीपरम्।

नवरात्रोपवासस्य विहितत्वादिति ध्येयम् । इति दुर्गाष्टमीनिर्णयः ॥

अथ दुर्गानवमी व्यवधानभिया ऽत्रैव निर्णीयते । सा च दुर्गापूजादौ पूर्वविद्धा ग्राह्या 'श्रावणी दुर्गनवमी' इत्युक्तेः। भविष्योत्तरे—आश्वयुक्शुक्लपक्षे तु अष्टमी मूलसंयुता । सा महानवमी नाम त्रैलोक्येपि सुदुर्लभा । कन्यां गते सवितरि शुक्लपक्षेऽष्टमीयुता । मूलनक्षत्रसंयुक्ता सा महानवमीस्मृता । मूलग्रहणम्मूलाद्यृक्षत्रयोपलक्षणम् । तदुक्तं लैङ्गे—दुर्गापूजासु नवमी मूलाद्यृक्षत्रयान्विता । महती कीर्त्तिता तस्यां दुर्गां महिषमर्दिनीम् । चण्डिकामुपहारैस्तु पूजयेद्राज्यवृद्धये । बलिदाने तूत्तरविद्धा ग्राह्या । सूर्योदये परं रिक्तेत्युक्ते 'बलिदाने कृतेष्टम्यां पुत्रभङ्गो भवेन्नृप' इति मदनरत्ने देवीपुराणात् । यत्तु 'न कार्या दशमीविद्धा नवमी तु सदा बुधैः । नवमीं दशमीविद्धां ये कुर्वन्ति विमोहिताः । वृथा तेषां भवेत्सर्वं बलिपूजाविधानकमितिवचनम् । तच्छुद्धायां नवम्यां बलिदानं कर्त्तव्यमित्येवं परम् । अन्यथा सूर्योदये परंरिक्तेति वाक्यविरोधः स्यादिति । विश्वरूपनिबन्धे—आश्विनस्य सिते पक्षे आरब्धे नवरात्रके । शवसूते समुत्पन्ने क्रियाः कार्याः कथं बुधैरिति प्रश्ने । 'सूतकं वर्त्तमाने च तत्रोत्पन्नं यदा भवेत् । देवीपूजा प्रकर्त्तव्या पशुयज्ञविधानतः' । वर्त्तमाने प्रारब्धे नवरात्रके सूतकं यदोत्पन्नं भवेत्तदा स्वयमेव देवीपूजा कर्त्तव्या, अप्रारब्धे पशुयज्ञविधानतः अन्येनाग्निहोत्रादिवत् कारयितव्यमित्यर्थः ॥

अथ नवरात्रकृत्यम्,। भविष्योत्तरे—आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम् । प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् । त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम्।तथा—एवञ्च विन्ध्यवासिन्यां नवरात्रोपवासतः । एकभक्तेन नक्तेन तथैवायाचितेन

च। पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे। तथा देवीपुराणे—कन्यासंस्थे रवौ तत्र शुक्लामारभ्य नन्दिकाम्। अयाची वाथ-वैकाशी नक्ताशी वाथ वाग्यतः। नन्दिकां प्रतिपदम्। मार्कण्डेये—निराहारौ यताहारौ। भविष्योत्तरे—आश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने। पूर्वमुच्चैःश्रवानाम प्रथमं श्रियमावहत्। तस्मात्साश्वै-र्नरैस्तत्र पूज्योऽसौ श्रद्धया सह। पूजनीयाश्च तुरगा नवमीं याव-देवहि। अथ बलिदानविधिः। अजस्य दशवर्षाणि रुधिरेण प्रतर्पिता।

बलिदान विधिः।

माहिषेण शतं वीर तृप्ता भवति चण्डिका। सहस्रं तृप्ति-मायाति स्वदेहरुधिरेण च। शान्तिस्वस्त्ययनं कार्यं तदा तेषां दिने दिने। धान्यं भल्लातकं कुष्ठं वचाः सिद्धार्थ-कास्तथा। पञ्चवर्णेन सूत्रेण ग्रन्थिं त्वेषां तु बन्धयेत्। महानवमी मुपक्रम्य—तस्याञ्च ह्युपयुज्यन्ते प्राणिनो महिषादयः। सर्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते। यावन्न चालयेद्गात्रं पशुस्ता-वन्न हन्यते। न तथा बलिदानेन पुष्पधूपविलेपनैः। यथा सन्तु-ष्यते मेषैर्महिषैर्विन्ध्यवासिनी। भवानीप्राङ्गणे प्राणा येषां याता युधिष्ठिर। तेषां स्वर्गे ध्रुवं वासो वीरास्तेऽप्सरसां गणाः।

अथ कालिकापुराणोक्तो बलिदानविधिः।

स्थापयित्वा बलिं तत्र पुष्पचन्दनवन्दनैः।
पूजयेत्साधको देवीं बलिमन्त्रैः पृथक् पृथक्॥
उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं स्थितम्।
निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत्॥
वरस्त्वं बलिरूपेण मम भाग्यादुपस्थितः।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशने।
वैष्णवीबलिरूपाय बले तुभ्यं नमोनमः॥

यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः ॥
त्रूँह्रींश्रीमितिमन्त्रेण बलिं वामनरूपिणम् ।
चिन्तयित्वा न्यसेत्पुष्पं मूर्द्ध्नि तस्यच भारत ॥
ततोदेवीं समुद्दिश्य काममुद्दिश्य चात्मनः ।
अभिषिच्य बलिं पश्चात्करवालं प्रपूजयेत् ॥
रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः ।
ह्रींखड्गायनमइति नत्वा खड्गं प्रपूजयेत् ॥
कृष्णं पिनाकपाणिश्च कालरात्रिस्वरूपिणम् ।
उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् ॥
रक्ताम्बरधरं चैकपाशहस्तं कुटिम्बिनम् ।
पिबन्तं रुधिरं चापि भुञ्जानं क्रव्यसंहतिम् ॥
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मधारोसि ते नमः ॥
पूजयित्वा ततः खड्गं आँहूंफडितिमन्त्रकैः ।
गृहीत्वा विमलं खड्गं छेदयेद्बलिमुत्तमम् ॥
ततो बलीनां रुधिरं तोयसैन्धवसत्फलैः ।
मधुभिर्गन्धपुष्पैस्तदाधिवास्यप्रयत्नतः ॥
ॐ त्रूँ ह्रींश्रींकौशिकीतिरुधिराप्यायिता भव ।
स्थाने नियोजयेद्रक्तं शिरसश्च प्रदीपकम् ॥
एवं दत्वा बलिं पूर्णं फलमाप्नोति साधकः ।
हीनात्तस्माद्धीनफलं विफलं स्याद्विपर्ययात् ॥
बलिदानेतु दुर्गायाः अन्यत्रापि विधिस्तदा ।
अयमेव प्रयोक्तव्यः सद्भिर्वेतालभैरव ॥

तथा—वैष्णवीमन्त्रकल्पोक्तः क्रमः सर्वत्र सर्वदा ।

साधकैर्बलिदानस्य ग्राह्यः सर्वेश्वरस्य च ॥
बलिभिः साध्यते मुक्तिर्बलिभिर्द्यौश्च साध्यते।
बलिदानेन सततं जयेच्छत्रून्नृपात्मजः ॥
मत्स्यानां कच्छपानां तु रुधिरैः सततं शिवा।
मासिकं तृप्तिमाप्नोति ग्राहैर्मासत्रयन्तथा ॥
मृगाणां शोणितैर्देवी खगानामपि विस्तृतैः।
अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा सदा ॥
गोधिकानाञ्च रुधिरैर्वार्षिकीं तृप्तिमाप्नुयात्।
कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः ॥
प्राप्नोति सततं देवी तृप्तिं द्वादशवार्षिकीम्।
अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ॥
महिषाणां च खड्गानां रुधिरैः शतवार्षिकीम्।
तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा ॥
सिंहस्य शरभस्याथ स्वगात्रस्य च शोणितैः।
देवी तृप्तिमवाप्नोति सहस्रं परिवत्सरान् ॥
मांसैरपि तथा तृप्ती रुधिरैर्यस्य यावती।
कृष्णसारमृगं खड्गं तथा मत्स्यञ्च रोहितम् ॥
वार्ध्रीनसयुगं चापि फलं तेषां पृथक्पृथक्।
कृष्णसारस्य मांसेन तथा खड्गस्य चण्डिका ॥
वर्षपञ्चशतं देवी तृप्तिमाप्नोति केवलाम्।
रोहितस्य तु मत्स्यस्य मांसैर्वार्ध्रीनसस्य च ॥
तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया।
त्रिपिबन्त्विन्द्रियंक्षीणं श्वेतं वृद्धमजापतिम् ॥
बुधाः वार्ध्रीनसं प्राहुर्हव्ये कव्ये च संस्कृतम्।
नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः ॥

वार्द्धीनसः स्यात्पक्षीच स मे विष्णोरपि प्रियः।
नरेण बलिना देवी सहस्रं परिवत्सरान् ॥
विधिदत्तेन चाप्नोति तृप्तिं लक्षं त्रिभिर्नरैः।
नारेणैवाथ मांसेन त्रिसहस्राणि वत्सरान् ॥
तृप्तिमाप्नोति कामाख्या भैरवी मम रूपधृक्।
मन्त्रपूतं शोणितं तत्पीयूषं जायते सदा ॥
समस्तकं चापि तस्य मांसं चापि शिवा तथा।
तस्मात्तु पूजने देव्या बलेः शीर्षं च लोहितम् ॥
भोज्ये होमे च मांसानि नियुञ्जीत विचक्षणः।
पूजासु नाममांसानि दद्यान्न साधकः क्वचित् ॥
दत्ते च लोहितं शीर्षममृतत्वं च जायते।
कूष्माण्डमिक्षुदण्डं च मद्यमासवमेव च ॥
एते बलिसमाः प्रोक्तास्तृप्तौ छागसमास्तथा।
चन्द्रहासेन कर्त्र्या वा छेदनं मुख्यमिष्यते ॥
दात्रासिधेन्वस्त्रुकण्ठसंकुलाभिस्तु मध्यमम्।
क्षुरक्षुरप्रभल्लैर्वा चाधमं परिकीर्त्तितम् ॥
एभ्योन्यैश्शक्तिभिर्बाणैरस्त्रैश्शस्त्रैः कथञ्चन।
नाप्ति देवी बलिं तं तु दाता मृत्युमवाप्नुयात् ॥
हस्तेन घातयेद्यस्तु प्रोक्षितं साधकः पशुम्।
पक्षिणं वा ब्रह्महत्यामसावाप्नोति दुस्सहाम् ॥
नामंत्र्य खड्गन्तु बलिं नियुञ्जीत विचक्षणः।
खड्गस्या मन्त्रणे मन्त्राः पूर्वमेव प्रदर्शिताः ॥
अथ दैवतमुद्दिश्य काममुद्दिश्य चात्मनः।
छेदयेत्तेन खड्गेन बलिं पूर्वाननं ततः ॥
अथवोत्तरवक्त्रं तु बलिं पूर्वमुखः स्वयम्।

पूर्वोक्तसलिलादींस्तु रक्तेचास्य नियोजयेत् ॥
सौवर्णं राजतं ताम्रं रैत्यं पर्णपुटं तथा।
माहेयं कांस्यमथवा यज्ञकाष्ठमयन्तथा ॥
पात्रन्तु रुधिरादाने कर्त्तव्यं विभवावधि।
न लौहे वाल्कले वापि वैत्रे रङ्गेऽथ कौषिके ॥
दद्याद्रक्तं बलीनां तु भूमौ प्रतिस्रवे तथा।
दद्यान्नरपतिस्तत्र पुटकादौ कथञ्चन ॥
हयमेधमृते दद्यान्न कदाचिद्धयं बलिम्।
तथा दिक्पालमेधे तु गजं दद्यान्नराधिपः ॥
न कदाचित्तथा देव्यै प्रदद्याद्धयहस्तिनौ।
हयकर्णं चामरं तु बलिं दद्यान्नराधिपः ॥
सिंहं व्याघ्रं नरं वापि स्वगात्ररुधिरं तथा।
न दद्याद्ब्राह्मणो मद्यं तथा देव्यै कदाचन ॥
सिंहं व्याघ्रं नरं दद्याद्ब्राह्मणो नरकं व्रजेत्।
इहापि स्यान्महीनाथ सुखभोगविवर्जितः ॥
स्वगात्ररुधिरं दत्वा चात्मवध्यामवाप्नुयात्।
मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ॥
प्रदद्युः कृष्णसारन्तु न बलिं क्षत्रियादयः।
ददतः कृष्णसारन्तु ब्रह्मवध्यामवाप्नुयुः ॥
यत्र सिंहस्य व्याघ्रस्य नरस्य विहितो वधः।
क्षत्रियादौ तथावर्णे तत्रायं प्रोच्यते विधिः ॥
कृत्वा घृतमयं व्याघ्रं नरं सिंहञ्च भैरव।
अथवा सूपविहितं यवक्षोदमयं तथा ॥
घातयेत्तं महास्त्रेण स्वेन मन्त्रेण संस्कृतम्।
प्रभूतबलिदाने तु त्रींस्त्रीस्तद्भागतः कृतान् ॥

पूजयेत्प्रमुखान्कृत्वा सर्वान्मन्त्रेणसाधकः ।
सामान्यपूजा कथिता बलीनां पूर्वतोमया ॥
विशेषो यत्र यत्रास्ति तत्पुनः शृणु भैरव ।
महिषं यो ददेद्देव्यै भैरव्यै भैरवाय वा ॥
अनेनैव तु मन्त्रेण तदा तं पूजयेद्बलिम् ।
हतवान् द्वेक्षि यथा वहसि चण्डिकाम् ॥
तथा वहस्व पुष्टिं मे शुभं च वह मामकम् ।
यमस्य वाहनं त्वं तु वररूपधराव्यय ॥
आयुर्वित्तं यशो देहि कासराय नमोस्तु ते ।
दैवे पित्र्ये च सुभग खड्ग त्वं खड्गसन्निभः ॥
जहि विघ्नान्महाभाग गुहाजात नमोस्तु ते ।
कृष्णसार ब्रह्ममूर्ते ब्रह्मतेजोविवर्द्धन ॥
चतुर्वेदमयोसि त्वं प्रजां देहि यशो महत् ।
त्वमष्टपादान् विभ्रत्तु चन्द्रभागसमुद्भव ॥
अष्टमूर्ते महाबाहो भैरवाय नमोस्तु ते ।
यथा भैरवरूपेण वाराहो निहतस्त्वया ॥
यथा शरभरूपेण त्वं वा वहसि चण्डिकाम् ।
तथा शुभानि मे नित्यं वह विघ्नांश्च सूदय ॥
त्वं हरिः सिंहरूपेण जगत्प्रत्यक्षरूपधृक् ।
जघान येन रूपेण हिरण्यकशिपुं पुरा ॥
नरस्य गात्ररुधिरैः सपर्यां शृणु भैरव ।
पीठे यद्दीयते नित्यं बलिं दद्यात् श्मशानके ॥
श्मशानं हेरुकाख्यञ्च तत्पूर्वम्प्रतिपादितम् ।
मम रूपं श्मशानन्तु भैरवाख्यञ्च कथ्यते ।
तत्राङ्गत्वं ततः सिद्धौ त्रिभागन्तु भविष्यति ॥

पूर्वाङ्गं भैरवाख्यन्तु समुत्सृष्टं नरस्य च।
दक्षिणांशे शिरो दद्याद्भैरव्या मुण्डमालया॥
रुधिरं पश्चिमाङ्गे तु हेरुकाख्ये नियोजयेत्।
दत्वा संपूज्य च बलीन्विसृज्य गमनक्रमे॥
पीठं श्मशानेषु बलिं लिखेत्तु बलिदीपकम्।
तथाप्यन्यत्र चोत्सृज्य छिद्राण्यत्र शिरोमृतम्॥
निवेदयेत्साधकस्तु विपूज्याथ विलोक्य च।
कण्ठाधो नाभितश्चोर्द्ध्वं स्वाङ्गे पाणिमृते तथा॥
प्रदद्याद्रुधिरं घातं नातिकुर्याच्च साधकः।
गण्डयोश्च ललाटस्य भ्रुवोर्मध्यस्य शोणितम्॥
कर्णाग्रस्यच बाव्होश्च स्तनयो रुदिरस्य च।
कण्ठाधो नाभितश्चोर्द्ध्वं हृद्भागस्य यतस्ततः॥
पार्श्वयोश्चापिं रुधिरं दुर्गायै विनिवेदयेत्।
तदङ्गकृतघाताच्च नक्रुद्धोऽक्षुब्धमानसः॥
क्षतरक्तं प्रदद्यात्तु पद्मपुष्पस्य पत्रके।
सौवर्णे राजते ताम्रे कांश्यपात्रे तु वा नरः॥
विधाय देव्या दद्यात्तु तद्रक्तं मन्त्रपूर्वकम्।
क्षणेन क्षुरिकाखड्गसंकुलादियदस्त्रकम्॥
घातेन वृहदस्त्रस्य महत्फलमवाप्नुयात्॥
पद्मपुष्पस्य पत्रं तु यावद्धृह्णाति शोणितम्।
तत्प्रमाणचतुर्भागा अधिरक्तन्तु साधकः॥
न कदाचित्प्रदद्यात्तु नाङ्गच्छेदं समाचरेत्।
यः स्वहृदयसञ्जातमांसं माषप्रमाणतः॥
तिलमुद्गप्रमाणं वा देव्यै दद्यात्तु भक्तितः।
षण्मासाभ्यन्तरे सोत्र काममिष्टमवाप्नुयात्॥

बाह्वोर्वा कर्णयोर्वापि यो दद्याद्दीपवर्त्तिकाम् ।
हृदये वा स्नेहपात्रं विना भक्त्यातु साधकः ॥
क्षणमात्रेण तद्दीपप्रदानस्य फलं शृणु ।
भुक्त्वाथ विपुलान्भोगान्देवीगृहे यथेच्छया ॥
कल्पत्रयं तत्र स्थित्वा सार्वभौमो भवेन्नृपः ॥
महिषस्य शिरश्छिन्नं सप्रदीपं शिवापुरः ।
हस्ताभ्यां यः समाधाय अहोरात्रं तु तिष्ठति ॥
स चिरायुः पूतमूर्त्तिरिह भुक्त्वा मनोरमान् ।
भोगानन्तेमद्गृहगो गणानामधिपो भवेत् ।
नरस्य शीर्षमादाय साधको दक्षिणे करे ॥
वामे तु रुधिरं पात्रे गृहीत्वा निशि जागृतम् ।
यावद्रात्रिस्थितो मर्त्यो राजा भवति चेह वै ॥
मृतो मम पुरं प्राप्य गणानामधिपो भवेत् ।
महामाये जगन्नाथे सर्वकामप्रदायिनि ॥
ददामि देहरुधिरं प्रसीद वरदा भव ।
इत्युक्त्वा नतिपूर्वेण मूलमन्त्रेण साधकः ॥
स्वगात्ररुधिरं दत्वा मानवः सिद्धिमाप्नुयात् ।
सौभाग्येन परं यच्च प्रदीपं परमं रुचिः ॥
दीपयेन्मां सदेहस्थं दीपं ह्रौंह्रौंनमोनमः ।
इत्यनेन तु मन्त्रेण दीपं दद्याद्विचक्षणः ॥
महानवम्यां शरदि शुक्लपक्षे बलिं हरेत् ।
चैत्रे मासि शिते पक्षे चतुर्दश्यां विशेषतः ॥
बलिभिर्महिषैश्छागैर्मां च भैरवरूपिणम् ।
तोषयेन्मधुभिर्मत्स्यैस्तेन तुष्याम्यहं सुतौ ॥
पशूनां पक्षिणां वापि नराणां तु विशेषतः ।

स्त्रियं न दद्यात्तु बलिं दत्वा नरकमाप्नुयात् ॥
सञ्जातबलिदाने तु योषितं पशुपक्षिणोः ।
बलिं दद्यान्मानुषं तु भक्त्या सञ्जातपूजितम् ॥
न त्रिमासीयकान्यूनं पशुं दद्याच्छिवाबलिम् ।
नच त्रैपाक्षिकान्यूनं प्रदद्याद्वै पतत्रिणम् ॥
काणखण्डत्वव्यङ्ग्यादिदुष्टं न पशुपक्षिणम् ।
अतिवृद्धं रोगिणञ्च क्लीबं हीनाधिकाङ्गकम् ॥
छिन्नलाङ्गूलकर्णादि भग्नदन्तं तथैव च ।
भग्नशृङ्गादिकं चापि न दद्यात्तु कथञ्चन ॥
न ब्राह्मणं बलिं दद्याच्चाण्डालमपि पार्थिवम् ।
नोत्सृष्टं द्विजदेवेभ्यो भूपतेस्तनयं तथा ॥
बलेन विजितं दद्यात्तनयं विप्रभूभृतोः ।
नारं सव्यं शिरोरक्तं देव्यास्सम्यङ्निवेदयेत् ॥
छागस्य वामतो दद्यादग्रतो देहशोणितम् ।
क्रव्यादानां पशूनां च पक्षिणां च शिरोसृजम् ॥
वामे निवेदयेत्पार्श्वे जलजानां च सर्वतः ।
कृष्णसारस्य खड्गस्य कूर्मस्य मकरस्य च ॥
ग्राहाणामथ मत्स्यानामग्र एव निवेदयेत् ।
सिंहस्य दक्षिणे दद्यात्खड्गिनो वापि दक्षिणे ॥
पृष्ठदेशे न दद्यात्तु शिरो वा रुधिरं बलिम् ।
नैवेद्यं दक्षिणे वामे पुरतो नच पृष्ठतः ॥
वामतस्तु तथा धूपमग्रे वाणाम्बुदक्षिणे ।
निवेदयेत् पुरोभागे पुष्पं धूपं च दक्षिणाम् ॥
मण्डले चेन्मध्यभागे वामदक्षिणपूर्ववत् ।
मदिरां पृष्ठतो दद्यादन्यपानं तु मध्यतः ॥

छिन्नं शिरस्तथैशान्यां नारं दिश्यथ राक्षसे ।
पतितं राज्यहानिं च विनाशं च विनिर्द्दिशेत् ॥
पूर्वाग्नियाम्यवारुण्यवायव्यादिगतं क्रमात् ।
श्रियं पुष्टिं भयं नाशं पुत्रलाभं धनं तथा ॥
क्रमाद्विनिर्द्दिशेन्नारं छिन्नं शीर्षं तु भैरव ॥
उत्तरादिक्क्रमादेव महिषस्यापि मस्तकम् ।
पतितं वायुवा काष्ठं यद्यद्दद्याच्छृणुष्व तत् ॥
भोग्यं हानिं तथैश्वर्य्यं वित्तं रिपुजयं भयम् ।
राज्यलाभं श्रियं चापि क्रमात्तद्विद्धि भैरव ॥
पशूनां चैव सर्व्वेषां छागादीनां विशेषतः ।
एवं फलं क्रमाद्विद्यादृते च जलजाण्डजौ ॥
जलजानां पक्षिणां तु याम्यनैर्ऋतयोर्भयम् ।
अन्यत्र तु श्रियं दद्यात्पतितं शातितं शिरः ॥
यःस्यात्कटकटाशब्दो दन्तानां छिन्नमस्तके ।
नराणां पशुपक्ष्यादिग्रहादीनां च शोकदम् ॥
लोतकं चक्षुषोर्जातं यदि श्रवति मस्तके ।
छिन्ने नरस्य राज्यस्य तदा हानिं विनिर्द्दिशेत् ॥
माहिषे मस्तके नेत्राद्यदि श्रवति लोतकम् ।
छिन्ने निवेदिते चैव अपमृत्युं विनिर्द्दिशेत् ॥
अन्येषामपि पश्वादिबलीनां शिरसोदितात् ।
निर्गतं लोतकं धत्ते परां भीतिं गदं तथा ॥
हसति च्छिन्नशीर्षश्चेन्नारं स्याच्च रिपुक्षयः ।
श्रीवृद्धिरायुषो वृद्धिस्तदा दातुर्न संशयः ॥
यद्यद्वाक्यं निगदति तथा भवति चाचिरात् ॥
हुङ्काराद्राज्यहानिस्तु जायते छिन्नमस्तके ।

विभूतिमतुलां दद्यात्षण्मासाभ्यन्तरेऽपि वा ॥
रुधिरादानकाले तु शकृन्मूत्रे यदि स्रवेत् ।
कायार्द्धं याति चोर्द्धं चेद्दातुःस्यान्मरणं तदा ॥
आक्षेपाद्वामपादस्य महारोगः प्रजायते ।
अन्यत्राक्षेपकरणे कल्याणमुपजायते ॥
महिषः पञ्चवर्षीयः पञ्चविंशतिवार्षिकः ।
बलिर्देयो नरो देव्यै तस्य दानं तु भूतये ॥
महानवम्यां शरदि यद्येवं दीयते बलिः ।
तदा तदष्टाङ्गभवैर्मांसैर्होमं समाचरेत् ॥
दुर्गातन्त्रेण मन्त्रेण प्रणीते दहने शुचौ ।
एवं दत्वा बलिं मर्त्यो रिपुक्षयमवाप्नुयात् ॥

इति श्रीकालिकापुराणोक्तो बलिदानविधिसंक्षेपः ।

---

अथ शिष्टाचाराच्चित्रावैधृतिरहितायां प्रतिपदि कलशस्थापनम् । दुष्टायां प्रतिपदि अशौचादिदोषे वा सप्तम्यादित्रिरात्रपक्षः । त्रिरात्रं वापि कर्त्तव्यमिति वचनात् । केवलाष्टमीपक्षो वा कार्य्यस्तृतीयश्चतुर्थपक्षाभावादिति ध्येयम् । कलशप्रमाणम् देवीपुराणे ।

पञ्चाशाङ्गुलवैपुल्यमुत्सेधः षोडशाङ्गुलः ।
कलशानां प्रमाणं तु मुखमष्टाङ्गुलं भवेत् ॥
मुक्ताफलं हीरकं च वैदूर्यं पद्मरागकम् ।
पुष्परागं च गोमेदं नीलं गारुत्मतं तथा ॥
प्रवालमुक्तान्युक्तानि महारत्नानि वै नव ॥
सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम् ।
रत्नपञ्चकमाख्यातं शेषं वस्तु ब्रवीम्यहम् ॥

अभावे सर्वरत्नानां हेम सर्वत्र कल्पयेत् ।

तथा, पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ॥

स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ।

वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥

स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ।

जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् ॥

लौहाभिसारिकं कर्म कारयेद्यावदष्टमीम् ।

लोहनामाभवत्पूर्वन्दानवः सुमहाबलः ॥

स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ।

तदङ्गसंभवं सर्वं लोहं यद्दृश्यते क्षितौ ॥

शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ।

हुतशेषन्तुरङ्गाणां राजानमुपहारयेत् ॥

लौहाभिसारिकं कर्म तेनैतद्दृषिभिः स्मृतम् ।

प्रागुदक्प्रवणे देशे पताकाभिरलङ्कृतम् ॥

मण्डपं कारयेद्दिव्यं नवसप्तकरं वरम् ।

षोडशहस्तप्रमाणमित्यर्थः ॥

आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं तु शोभनम् ।

मेखलात्रयसंयुक्तं योन्यश्वत्थदलाभया ॥

राजचिन्हानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ।

आनीय मण्डपे तानि सर्वाण्यत्राधिवासयेत् ॥

ततः पुरोहितः स्नातः शुक्लाम्बरधरः शुचिः ।

ॐकारपूर्वकैर्मंत्रैस्तल्लिङ्गैर्जुहुयाद्घृतम् ॥

भविष्योत्तरं ।

दुर्गागृहं प्रकर्तव्यं चतुरस्रं सुशोभनम् ॥

रहस्यस्वस्तिकाद्यैश्च चर्च्चितं वस्त्रमण्डितम् ।

गौरसृद्रोमयाभ्यां च लिप्तं शस्त्रसमन्वितम् ॥
तन्मध्ये वेदिका कार्य्या चतुर्हस्ता सभा शुभा ।
तस्यां सिंहासनं क्षौमकम्बलाजिनसंयुतम् ॥
तत्र दुर्गाम्प्रतिष्ठाप्य सर्वलक्षणसंयुताम् ।
सर्वदेवमयीं प्रौढयौवनोन्मादशालिनीम् ॥
भुजैश्चतुर्भी रुचिरैर्दशभिर्वा विभूषिताम् ।
तप्तहाटकवर्णाङ्गीन्त्रिनेत्रां शशिशेखराम् ॥
पीतवस्त्रपरीधानां नीलकौशेयसंयुताम् ।
ग्रैवोपहारकेयूरनूपुराभरणान्विताम् ॥
नानारत्नविचित्रेण मुकुटेन विराजिताम् ।
अनेककुसुमाकीर्णकपर्द्देन सुशोभिताम् ॥
नितम्बबिम्बसंबद्धकिङ्किणीक्वणनादिताम् ।
शूलचक्रदण्डशक्तिभल्लचापासिधारिणीम् ॥
घण्टाक्षमालाकरकपानपात्रलसत्कराम् ।
तदग्रे च्छिन्नशिरसं महिषं रुधिरप्लुतम् ॥
निःसृतार्द्धतनुं कण्ठनालाच्चर्मासिधारिणम् ।
देवीकरधृतग्रीवं शूलेनोरसि ताडितम् ॥
दैत्यं करालदंष्ट्रास्यं विद्युत्कपिशमूर्द्धजम् ।
नागपाशेन विक्षिप्तं हर्य्यक्षेणापि विद्रुतम् ॥
वमद्रुधिरवक्त्रेण धुन्वतोर्द्ध्वसटं रुषा ।
ऊर्द्ध्वलाङ्गूलदण्डेन देव्यधिष्ठानशोभिना ॥
शोभितां मातृचक्रेण सेव्यमानां सुरैस्तथा ।
पूजयेत्प्रयतो देवीन्नरो नियममास्थितः ॥

नियमाः प्रागुक्ता एकभक्तादयः ।

दुर्ग्गोत्सवे,—भूमौशायी तथामन्त्र्य कुमारीर्भोजयेन्मुदा ।

वस्त्रालङ्कारदानैश्च सन्तोष्य प्रतिवासरान् ॥
बलिं च प्रत्यहं दद्यादोदनं मांसमाषवत् ।
त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः ॥
जपो देव्यादिमन्त्रस्य, स्तोत्रं सप्तशतिकादि ।

कुमारीपूजा स्कान्दे ।

एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैवच ।
द्विगुणं त्रिगुणं वापि प्रत्येकं नवकं च वा ॥
नवभिर्लभते भूमिमैश्वर्य्यन्द्विगुणेन च ।
एकवृद्ध्या भवेत्क्षेममेकैकेन श्रियं लभेत् ॥
एकवर्षा तु या कन्या पूजार्थे तां विवर्ज्जयेत् ।
गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥
कुमारिका द्विवर्षा च त्रिवर्षा च त्रिमूर्त्तिनी ।
चतुर्वर्षा च कल्याणी पञ्चवर्षा च रोहिणी ॥
षड्वर्षा च भवेत्काली सप्तवर्षा च चण्डिका ।
अष्टवर्षा शाम्भवी च दुर्गा च नवभिः स्मृता ॥
दशवर्षा सुभद्रेति नामभिः परिकीर्त्तिताः ।
अतऊर्द्ध्वं तु या कन्या सर्वकार्येषु वर्जिता ॥

फलम् ।

दुःखदारिद्र्यनाशाय शत्रूणां नाशनाय च ।
आयुष्यबलवृद्ध्यर्थं कुमारीं पूजयेन्नृप ॥
आयुःकामस्त्रिमूर्त्तिं च त्रिवर्गस्य फलाप्तये ।
अपमृत्युव्याधिपीडादुःखपापापनुत्तये ॥
सौख्यधान्यधनारोग्यपुत्रपौत्रादिवृद्धये ।
कल्याणीं पूजयेद्धीमान्नित्यं कल्याणवृद्धये ॥
आरोग्यसुखकामी च जयकामी तथैव च ।

यशःकामी नरो नित्यं रोहिणीं पूजयेत्तथा ॥
विद्यार्थी च जयार्थी च राज्यार्थी च विशेषतः।
शत्रूणां च विनाशार्थी कालिकां पूजयेन्नरः ॥
ऐश्वर्य्यसुखकामी च स्वर्गकामी च यो नरः।
संग्रामे जयकामी च चण्डिकां परिपूजयेत् ॥
दुःखदरिद्रनाशाय नृपसंमोहनाय च।
महापापप्रणाशाय शाम्भवीं परिपूजयेत् ॥
सबलोत्कटशत्रूणामग्रसाधनकर्मणि।
दुर्गां दुर्गविनाशाय पूजयेद्यत्नतो बुधः ॥
सौभाग्यधनधान्यादिवांछितार्थफलाप्तये।
सुभद्राम्पूजयेन्मर्त्यो दासीदासविवृद्धये ॥
प्रातःकाले विशेषेण कृताभ्यङ्गो विशेषतः।
आवाहयेत्ततः कन्यां मन्त्रेणानेन भार्गव ॥
मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम्।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥
ततः संपूजयेद्धीमान्मन्त्रैरेतैः पृथक् पृथक्।
जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि।
पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते ॥
त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम्।
त्रैलोक्यवन्दितां देवीं त्रिमूर्त्तिं पूजयाम्यहम् ॥
कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम्।
कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहम् ॥
अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्।
अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥
कामाचारां शुभां कान्तां कालचक्रस्वरूपिणीम्।

कामदां करुणोदारां कालीं संपूजयाम्यहम् ॥
चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जिनीम् ।
पूजयामि सदा देवीं चण्डिकाञ्चण्डविक्रमाम् ॥
सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम् ।
सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ॥
दुर्गमे दुस्तरे कार्य्ये भवदुःखविनाशिनीम् ।
पूजयामि सदा भक्त्या दुर्गां दुर्गविनाशिनीम् ॥
सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ।
सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥
एवमभ्यर्चनं कुर्य्यात् कुमारीणां प्रयत्नतः ॥
कंचुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ।
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः ॥
अथापूज्या आह ।
हीनाधिकाङ्गीं कुष्ठाञ्च विशालकुलसंभवाम् ॥
ग्रन्थिस्फुटितशीर्णाङ्गीं रक्तपूयव्रणांकिताम् ।
जात्यन्धां केकरां काणीं कुरूपान्तनुरोमशाम् ॥
संत्यजेद्रोगिणीं कन्यान्दासीगर्भसमुद्भवाम् ।
अथ पूज्या आह, ।
अरोगिणीमकुष्ठाङ्गीं सरूपां व्रणवर्जिताम् ।
एकवंशसमुद्भूतां कन्यां सम्यक् प्रजापते ॥
ब्राह्मणीं सर्वकार्य्येषु जयार्थे नृपवंशजाम् ।
लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् ॥
दारुणे चान्त्यजातीयां पूजयेद्विधिना नरः ।

नवरात्रस्य त्रिरात्रस्य वा करणासामर्थ्ये महाष्टम्यामेव कुर्यात् । 'तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी' इत्युदाहृतवचना

व। प्रत्यहं होमः कार्य्यः। तदुक्तम्।

वायव्यैर्वारुणैः शौरैः शाक्रैर्मन्त्रैश्च वैष्णवैः।
वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने॥
तुरङ्गा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः।
नच ताड्याः क्वचित्तत्र नच वाह्याः कथंचन॥

तत्र नवरात्रे।

दुर्बलानि हि रक्षांसि प्रत्यूषे ब्रह्मतेजसा।
भवन्ति कस्मात्प्रत्यूषे स्नापयेत्पाययेद्धयान्॥
पुरोहितस्तु द्विकालं तर्पयित्वा द्विजोत्तमान्।
पुण्याहं कारयेन्नित्यं स्वस्त्याशीर्मङ्गलैर्युतम्॥

अत्र प्रसङ्गात्कुण्डमण्डपादिविधिर्विस्तरभयादनुपयुक्तत्वाच्च नेह प्रपञ्चितः। प्रतापमार्त्तण्डे मदीये च नवरात्रकृत्यसंज्ञके ग्रन्थेऽनुसन्धेयः।

धृतपल्ययनानश्वान् गजांश्च समलङ्कृतान्।
भ्रामयेन्नगरे नित्यं नन्दिघोषपुरःसरम्॥
प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः।
पूजयेद्राज्यचिन्हानि फलमाल्यविलेपनैः॥
तस्याभिसारणाद्राज्ञो विजयः समुदाहृतः।
पूजामन्त्रान्प्रवक्ष्यामि पुराणोक्तानहन्तव॥

यैः पूजिताः प्रयच्छन्ति कीर्त्तिमायुर्यशो बलम्। तत्रादौ छत्रमन्त्रः। यथाम्बुदाश्छादयन्ति शिवायेमां वसुन्धराम्। तथा च्छादय राजानं विजयारोग्यवृद्धये॥ चामरमन्त्रः। शशाङ्ककरसङ्काश क्षीरडिण्डीरपाण्डुर। प्रोत्सारयाशु दुरितं चामरामरवल्लभ॥ अथाश्वपूजा। तत्र प्रथमं रेवन्तपूजा। नमो देवादिदेवाय तुरङ्गबलधारिणे। सूर्यपुत्राय देवाय तुरङ्गाणां हिताय च॥ तुरङ्गप-

रिरक्षत्वं मृगयोपरि धावसि । सत्वगं स्वाधिपं रक्ष शरणं त्वां व्रजाम्यहम् ॥ मन्त्रान्तरम् । सूर्यपुत्र महाबाहो छायाहृदयनन्दन । शान्ति कुरु तुरङ्गाणां रेवन्ताय नमोनमः ॥ अथोच्चैःश्रवःपूजा । दुग्धाम्भोनिधिसम्भूत देवेन्द्रविजयावह, । उच्चैःश्रवो नमस्तुभ्यं वाजिवृन्दं प्रयच्छ मे ॥ अथ प्रत्यक्षाश्वमन्त्रः । गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः । ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ प्रभावाच्च हुताशस्य वर्द्धय त्वं तुरङ्गमान् । तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥ रुद्रस्य ब्रह्मवीर्येण पवनस्य बलेन च । स्मर त्वं राजपुत्रोसि कौस्तुभं च मणिं स्मर ॥ यां गतिं ब्रह्महा गछेन्मातृहा भ्रातृहा तथा । भूमिहा वनदाही च क्षत्रियश्च पराङ्मुखः ॥ सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् । व्रजाश्व तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥ निष्क्रन्तो यदिवा च्छिन्नो युद्धेऽध्वनि तुरङ्गम । रिपून्विजित्य समरे सह भर्त्रा सुखी भव ॥ ध्वजमन्त्रः । शक्रकेतो महावीर्य श्यामवर्णाऽर्चयाम्यहम् । पारिजात नमस्तेस्तु तथा नारायणध्वज ॥ गरुत्मन्मारुतगतिस्त्वयि सन्निहितो यतः । सारवन्त्यायुधान्यत्र रक्ष त्वं च रिपून्दह ॥ अथ पताकामन्त्रः । हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा । कालनेमिवधे यच्च तथा त्रिपुरघातने ॥ शोभितासि तथैवाद्य शोभयास्माँश्च संस्मर । पूतनारेवतीनाम्ना कालरात्रिश्च या स्मृता ॥ दहस्वाशु रिपून्सर्वान्पताके त्वं मयार्चिता । अथ हस्तिमन्त्रः । कुमुदैरावणः पद्मः पुष्पदन्तोथ वामनः । सुप्रतीकोंजनो नील एतेऽष्टौ देवयोनयः ॥ तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः । मद्रो भद्रो गजश्चैव राजासङ्कीर्ण एव च ॥ वने वने प्रसूता ये यूथानि सुमहान्ति च । यान्तु त्वाम्वसवो रुद्रा आदित्याश्च मरुद्गणाः ॥ भर्त्तारं गच्छ नागेन्द्र स्वामी च प्रतिपाल्यताम् । अवाप्नुहि जयं युद्धे

गमने स्वस्तितो व्रज ॥ अथ खड्गमन्त्रः । असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः । श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च ॥ इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा । नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः ॥ हिरण्यं च शरीरं ते धाता देवो जनार्द्दनः । पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥ इयं येन धृता क्षोणी हतश्च महिषासुरः । तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥ अथ चापमन्त्रः । सर्वायुधमहाभाग सर्वदेवारिसूदन । चाप मां सर्वदा रक्ष सार्कं शायकसत्तमैः ॥ धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च । त्रयीमूर्त्तिगतं देवं धनुरस्त्रं नमाम्यहम् ॥ अथ च्छुरिकामन्त्रः । सर्वायुधानां प्रथमं निर्मितासि पिनाकिना । शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥ चण्डिकायाः प्रदत्तासि सर्वदुष्टनिबर्हिणी । तया विस्तारिता चासि देवानां प्रतिपादिता ॥ सर्वसत्वाङ्गभूतासि सर्वाशुभनिवारिणी । छुरिके रक्ष मां नित्यं शान्ति यच्छ नमोस्तु ते ॥ अथ कट्टारमन्त्रः । रक्षाङ्गानि गजान् रक्ष रक्ष वाजिधनानि च । मम देहं सदा रक्ष कट्टारक नमोस्तु ते ॥ अथ कुन्तमन्त्रः ॥ कुन्तायुध महावीर रिपुसैन्यविदारण । गृहाण जीवितं तेषां मम सैन्यं च रक्ष माम् ॥ पाशमन्त्रः । पाश घातय शत्रूँस्त्वमनया लोकमायया । गृहाण जीवितं तेषां मम सैन्यं च रक्ष माम् ॥ अथ चर्ममन्त्रः । शर्मप्रदस्त्वं समरे चर्मन्सत्यं यथोदिते । रक्ष मां रक्षणीयोऽहं तापनीय नमोस्तु ते ॥ कनकदण्डमन्त्रः । प्रोत्सारणाय शत्रूणां साधूनां रक्षणाय च । ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ॥ यशो देहि सुखं देहि जयदो भव भूपतेः । ताडयस्व रिपून्सर्वान्हेमदण्ड नमोस्तु ते ॥ अथ दुन्दुभिमन्त्रः । दुन्दुभे त्वं सपत्नानां घोरो हृदयदारणः । भव भूमिपसैन्यानां तथा विजयवर्द्धनः ॥ यथा जीमूतघोषेण हृष्यन्ति च वराङ्गनाः । तथास्तु तव

शब्देन हर्षोऽस्माकं मुदावहः ॥ शङ्खमन्त्रः। पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् । विष्णुना विधृतो नित्यमतः शान्तिप्रदो भव ॥ सिंहासनमन्त्रः। विजयो जयदो जेता रिपुघाती शुभङ्करः। दुःखहा धर्मदः शान्तः सर्वारिष्टनिबर्हणः ॥ एते वै संनिधौ यस्य तव सिंहा महाबलाः । तेन सिंहासनेति त्वं मन्त्रैर्वेदैश्च गीयसे ॥ नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः। त्रैलोक्यजयसर्वस्व सिंहासन-नमोस्तु ते ॥ तथैव कर्मचिन्हानि स्वानि पूज्यानि शिल्पिभिः। लौहाभिसारिकं कर्म कृत्वैवं मन्त्रपूर्वकम् ॥ अष्टम्यां नियमं कृत्वा पूर्वाह्णे स्नानमाचरेत् । कुङ्कुमचन्दनचन्द्रैश्चतुःसमैः शैलपिष्टैश्च ॥ चर्चितगात्रीं देवीं कुसुमैरभ्यर्चयेद्बहुभिः । कुमुदैस्सपद्मपुष्पैः स-धूपदीपैः सनैवेद्यैः॥ मांसैर्बल्युपहारैर्मङ्गलशब्दैः समूर्च्छितैश्चिन्हैः। विहितच्छत्रैर्यानैः स्यन्दनशितशस्त्रधारिभिर्लोकैः॥ तुष्टैः पश्वादिभि-स्तु निवेद्यते सर्वमेव भगवत्यै । पूजामन्त्रस्तु—जयन्तीमङ्गलाकाली तिप्रसिद्धः। अथ बिल्वपत्रमन्त्रः॥ अमृतोद्भव श्रीवृक्ष महादेवप्रियः सदा। बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि॥ दुर्गा सा पूजनीयाथ तद्दिने द्रोणपुष्पकैः। सा चाभीष्टा सुरेशान्यां तयारूढायतेग्रतः॥ ततः खड्गं नमस्कृत्य शत्रूणां वधसिद्धये। इच्छेदृद्धिं च राज्यञ्च सुभिक्षं चात्मनो नृपः ॥ पुनः पुनः प्रणम्यार्घ्यां सँस्मरन् हृदये शिवाम्। सर्वं कृत्वेति कौरव्याष्टम्यां जागरणं निशि॥ नटनर्त्तनगीतैश्च का-रयेत्सुमहोत्सवम्। एवं हृष्टैर्निशां नीत्वा प्रभाते अरुणोदये ॥ घा-तयेन्महिषान्मेषानग्रतोनतकन्धरान् । शतमर्द्धशतं वापि तदर्द्धं वा यथेच्छया ॥ सुरासवभृतैः कुम्भैस्तर्पयेत्परमेश्वरीम् । कापालिके-भ्यस्तद्देयं ज्वलद्भिर्दीपवृक्षकैः॥ कश्चिच्चोपोषितो धीरो विधृतोन्येन खड्गवान् । भूतेभ्यस्तु बलिं दद्यान्मन्त्रेणानेन सामिषम् ॥ सरक्तं सजलं चान्नं गन्धपुष्पाक्षतैर्युतम्। त्रींस्त्रीन्वारान्समुहेन दिग्विदि-

क्षु किरेद्‌बलिम् ॥ 'बलिं गृह्णन्तु मे देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचोरगराक्षसाः । डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ दिक्पाला लोकपालाश्च येच विघ्नविनायकाः । जगतां शान्तिकर्त्तारो ब्रह्माद्याश्च महर्षयः ॥ मा विघ्नम्मा च मे पापं मा संतु परिपन्थिनः' । फलम्—महानवम्यां ये तुष्टाः कृत्वा दुर्गामहोत्सवम् ॥ पठतां शृण्वतां चापि सर्वाशुभनिवारणम् ॥

---

अथ क्रमं समुल्लङ्घ्य प्रसङ्गादत्रैव विजयदशमी निर्णीयते । सा चाश्विनदशमी अपराजितापूजादौ नवमीयुता ग्राह्या । तदुक्तं पुराणसमुच्चये—दशम्यां च नरैः सम्यक् पूजनीयापराजिता । ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ॥ या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता । क्षेमार्थं विजयार्थं च प्रसिद्धविधिना नृपैः ॥ आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नृपः । रुद्रयुक्तदशम्यां तु पूजयेन्नापराजिताम् ॥ श्रवणयुक्ता चेत्पूर्वा परा वा ग्राह्या, कश्यपः—उदये दशमी किञ्चित्सम्पूर्णैकादशी यदि । श्रवणर्क्षं तदा काले सा तिथिर्विजयाभिधा ॥ श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः । उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ॥ स्कान्दे—दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः । तस्य सम्वत्सरं राज्ये न क्वापि विजयो भवेत् ॥ अनेन विजयदशम्यां प्रस्थाननियमो दर्शितः । श्रवणाभावे केवलदशम्यामेव प्रस्थानं कार्यम् । तदाह लल्लः—तिथिः शरीरं तिथिरेव साधनं तिथिः प्रमाणं तिथिरेव कारणम् । अन्यच्च—दशम्यां पूजयित्वा तु मृन्मयीं चापराजिताम् । कलशीं तोयसम्पूर्णां जयन्तीपल्लवानताम् ॥ चतुर्वर्णैस्तथा यात्रा कर्त्तव्या साधनेन च ।

दशम्यां सबलं राजा पूजयित्वापराजिताम् ॥ दशदिक्षु मनोयोगाद्यात्रां कृत्वा तु वै नृपः । नीराजनं स्वस्य कृत्वा ततो नीराजयेद्बलिम् ॥ नीराजनमन्त्रश्च। 'चतुरङ्गबलं मह्यं निररिष्टं व्रजत्विह । विजयो मम सर्वत्र अस्तु चाग्निप्रसादतः' ॥ दशदिक्ष्विति वचनादिग्विरोधाद्यदोषः सूचितः । अथर्वगोपथब्राह्मणोक्तोऽपराजितापूजाविधिर्नगरीसीमान्ते कार्यः, तत्रादौ वास्तुपूजा दिक्पालपूजा शमीपूजा, 'अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च । दुःस्वप्नशमनीं धन्यां प्रपद्येऽहं शमीं शुभाम्' । शरेण शत्रुप्रतिकृतिवेधः चतुर्दिक्षुहोमश्च । एवं कृते विजयप्राप्तिः ॥

---

अथ प्रकृतं क्रममनुसरामः। कार्त्तिकशुक्लाष्टम्यां कूर्मपुराणोक्ता गोपूजा, गोग्रासगोप्रदक्षिणगवानुगमनैः सर्वकामावाप्तिः । इयंगोपाष्टमीत्युच्यते ।

मार्गकृष्णाष्टम्यां स्कान्दोक्तं रुक्मिण्यष्टमीव्रतम् सप्तवर्षसाध्यम्, प्रथमवर्षे एकमुखे गृहे रुक्मिणीकृष्णप्रद्युम्नादिपूजा, उपवासः, चन्द्रार्घदानानन्तरं भोजनं वा, द्वितीयवर्षे द्विमुखं गृहं एवं प्रत्यब्दं मुखवृद्ध्या सप्तमे वर्षे सप्तमुखे गृहे उद्यापनम् । पुत्राद्याप्तिः फलम् ।

पौषशुक्लाष्टमी भविष्योत्तरे । बुधवारयुक्ता महाभद्रा तस्यां स्नानादि शिवपूजादि शिवप्रीतये भवति, इयमेव भरणीयोगाज्जयन्तीत्युच्यते । तस्यां स्नानदानादि कोटिगुणमुक्तम् ।

अथ माघसितपक्षे भीष्माष्टमी सूर्यसेनीये । 'माघे मासि सिताष्टम्यां सलिलं भीष्मवर्मणे । श्राद्धं चैव सदा कुर्युस्ते स्युस्सन्ततिगामिनः' । श्राद्धं काम्यम्।तर्पणं नित्यम् । 'ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नोजलम् । सव्वँत्सरकृतन्तेषां पुण्यं नश्यति स-

त्तम' इति वचनात्। तर्पणमन्त्रस्तु—वैयाघ्रपदगोत्राय साङ्कृतिमवराय च। अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे॥ अथ बुधवारसंयोगात्सिताष्टम्यां भविष्योत्तरोक्तं बुधाष्टमीव्रतम्। बुधपूजा लक्ष्मीपूजा हेमलक्ष्मीसहितजलपूर्णकरकदानम्। यावत्कथासमाप्तिस्तावद्भोजनम्। अन्ते बुधप्रतिमादानम्। अष्टाष्टम्यः कार्या सप्तजन्मनि जातिस्मरतादिः फलम्॥

अथ फाल्गुनसिताष्टम्यां लक्ष्मीसीतयोः पूजा,प्रदोषे सहस्रशो दीपा देयाः। ब्राह्मणेभ्यो यदेवान्नं तत्तच्छेषं तत्तज्जातीयमेववाश्यं,लक्ष्मीप्रीतिः फलम्। 'भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा तु पर्वणि। एकादश्यां दिवारात्रौ भुक्त्वा चान्द्रायणं चरेत्' इतिकालादर्शीयवचनम्। अत्र पर्वपदं चतुर्दश्यष्टमीभिन्नपरम्। यद्वा 'शुक्लाष्टमी कृष्णचतुर्दशी च पूर्णाथ राका रविसंक्रमश्चेति वाक्यैर्विशिष्यैव शुक्लाष्टमीकृष्णचतुर्दश्योः पर्वत्वमुक्तम्। कृष्णाष्टमीशुक्लचतुर्दश्योरपि दिवा भोजननिषेधार्थं पर्वणीत्युक्त्वापि भूताष्टम्योरिति पुनर्वचनं ध्येयम्॥

---

अथ नवमीनिर्णयः। सा च पूर्वविद्धैव ग्राह्या। युग्मवाक्यात्,'अष्टम्या नवमी विद्धा कर्त्तव्या फलकाङ्क्षिभिः। न कुर्यान्नवमीं तात दशम्या तु कथञ्चन' इति ब्रह्मवैवर्ताच्च। पाद्मे—नवम्येकादशी चैव दशाविद्धा यदा भवेत्। तदा वर्ज्या विशेषेण गङ्गाम्भः श्वदृतौ यथा। श्वदृतौ कुक्कुरचर्मणि।

अथ नवमीव्रतानि। तत्र चैत्रसितनवम्यामगस्त्यसंहितोक्तं रामनवमीव्रतम्। तच्च नित्यम्, 'यस्तु रामनवम्यां वै भुङ्क्ते स च नराधमः। कुम्भीपाकेषु घोरेषु पच्यते नात्र संशय' इतिवचनात्। 'अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम्। व्रतान्य-

रामनवमी-निर्णयः

न्यानि कुरुते नतेषां फलमश्नुते’ । इयं च तिथिद्वैधे मध्यान्हव्यापिनी ग्राह्या । लग्ने कर्कटकाह्वये इत्यगस्त्येन कर्कटस्य जन्मकालाभिधानाच्चैत्रे तस्य च मध्यान्हवर्त्तित्वात् । तथा—चैत्रशुक्लाथ नवमी पुनर्वसुयुता यदि । सैव मध्यान्हयोगेन महापुण्यतमा भवेद्’ । उभयत्र मध्याह्न-व्यापित्वे तदव्यापित्वे वा या पुनर्वसुयुता सैव ग्राह्या, ‘पुनर्वस्वृक्षसं-योगः स्वल्पोपि यदि दृश्यते । चैत्रशुक्लनवम्यान्तु सा पुण्या स-र्वकामदा’ इत्यगस्त्यवचनात् । यदा दिनद्वयेपि पुनर्वसुयोगः एकत्र मध्याह्ने अपरत्र तं विहाय तदा मध्याह्ने ग्राह्या श्रीराम-जन्मकालत्वात्तस्येति । यदा तु दिनद्वयेपि मध्यान्हे ऋक्षयोगो म-ध्यान्हं विना वा तदोत्तरैव ग्राह्या । ‘नवमी चाष्टमीविद्धा त्याज्या धर्मपरायणैः । उपोषणं नवम्यां वै दशम्यामेव पारणम्’ इत्यगस्त्य-वचनात् । दशम्यामेवेत्येवकारेणान्ययोगव्यवच्छेदपरेण नवम्यां पारणं व्यवच्छिद्यते । यद्यपि रामनवमीव्रतं हेमाद्रिकालादर्शमू-र्यसेनीयादिनिबन्धे न लिखितम् तथाप्यस्माभिरगस्त्यसंहितायां दृष्ट्वा व्यलेखीति । अथात्रैव भैरवसहितचतुःषष्टियोगिनीपूजा दु-र्गापूजा बलिदानं च शरद्वत् ।

अथ भविष्योत्तरोक्ता वैशाखोभयनवम्योश्चण्डिकापूजा, फ-लम्—विमानेन देवलोकाप्तिः । ज्येष्ठसितनवम्यां श्वेतब्राह्मणीसंज्ञो-मापूजा । आषाढनवमीद्वये ऐन्द्रीपूजा नक्तं भोजनम् । श्रावण-नवमीद्वये करवीरैः कौमारीपूजा कुमारीभोजनम् नक्तकरणम् । सर्वत्र देवीप्रीतिसालोक्ये फले ।

अथ भाद्रशुक्लनवम्यां नन्दानवमीव्रतम् । उपवासो देवी-पूजा, फलं विष्णुसालोक्यम् । अस्यामेव दुर्ग्गापूजा ।

अथाश्विनशुक्लनवम्यां देवीप्रबोधनम् । देवीपुराणे—कन्यायाः कृष्णपक्षे तु पूजयित्वार्द्रभेपि वा । नवम्यां बोधयेद्देवीं गीतवादित्र

निस्स्वनैः'। आश्विनसितनवम्यां विष्णुधर्मोक्तं भद्रकालीव्रतम्। उपवासो जागरणम् तत्प्रतिमादानम्। यात्रादिसिद्धिः फलम्। अस्यामेव भविष्योत्तरोक्तं रथनवमीव्रतम्। उपवासो दुर्गारथपूजा पारणम् फलं विष्णुसालोक्यम्। अस्यामेव पाद्मोक्तं शौर्यव्रतम्। दुर्गापूजा शौर्याप्तिः फलम्।

अथ मार्गशुक्लनवम्यां भविष्योत्तरोक्तं नन्दिनीव्रतम्। त्रिरात्रोपवासो नन्दिनीपूजा। पुत्राद्याप्तिः फलम्।

---

अथ दशमीसामान्यनिर्णयः। दशमी सर्वापि पूर्वयुतैव ग्राह्या, 'दशमीचैव कर्त्तव्या सदुर्गा द्विजसत्तम' इति स्कान्दात्। अङ्गिराः—'सम्पूर्णा दशमी ग्राह्या पूर्वया परयाथवा। युक्ता तद्‌दूषिता यस्माद्यतः सा सर्वतोमुखी'। एतत्तु पूर्वविद्धाया अलाभे उदयव्यापिनी ग्राह्येत्येवपरम्। यद्वा एकादशीव्रताङ्गत्वेन क्रियमाणमेकभक्तादिकं परविद्धायामेव ग्राह्यमित्येवं परम्। उपवासेपि दशमी सर्वापि पूर्वविद्धैव ग्राह्या। 'दशम्येकादशीविद्धा नोपोष्या स्यात्कदाचन' इति वचनादिति॥

अथ चैत्रसितदशमीमुपक्रम्य देवीपुराणे। 'धर्मराजन्दशम्यां तु पूजयित्वा सुगन्धकैः। विगतारिर्निरालम्ब इहचान्ते परम्पदम्'। धर्मराजं यमम्।

ज्येष्ठदशहरा-निर्णयः।

स्कान्दे—ज्येष्ठस्य शुक्लदशमी सम्वँत्सरमुखी स्मृता। तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः॥ यां काञ्चित्सरितं प्राप्य दद्याद्दर्भैन्तिलोदकम्। मुच्यते दशभिः पापैः स महापातकोपमैः'॥ वाराहे—दशमी शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि। अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे तु सरिद्वरा। हरते दशपापानि तस्माद्दशहरा स्मृता॥ अत्र गङ्गाया असंनिधाने नद्य-

न्तरेपि गङ्गास्मरणपूर्वकस्नानेन दश पापानि हरति। यां काश्चित्सरितमिति वचनात्। यदा याङ्काश्चिदनिर्वचनीयां सरितं गङ्गामेवेत्यर्थः अन्यथात्वविशेष इति वयम्। अत्र ब्राह्मे हस्तेन दशहरा, भविष्योत्तरे तु भौमहस्ताभ्याम्, वाराहे ताभ्यामेव गङ्गा भुवमवतीर्णा, दशहरा स्कान्दे बुधहस्ताभ्यां योगादिति विरोधः। कल्पभेदव्यवस्थया भेदः पारणीयः। दशपापानि हरति सा तथा। तानि मनुराह—अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा तु कायिकं त्रिविधं स्मृतम्॥ पारुष्यमनृतं चैव पैशून्यं चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्॥ नद्यां नद्यन्तरनिषेधस्तु गङ्गान्यविषयः। स्कान्दे—स्नानकालेन्यतीर्थेषु जप्तव्या जान्हवी नरैः। विना विष्णुपदीं कान्यत्समर्थमघशोधने। अघमर्षविधौ श्रुतिरप्याह, इमं मे गङ्गे यमुने सरस्वतीत्यादि। अतश्च गङ्गायमुनासरस्वतीशतद्रूणां स्मरणं नद्यन्तरेष्वपि न दुष्यतीति॥

---

अथैकादशीनिर्णयः। तत्रैकादशीव्रतं नित्यं काम्यं चेत्युभयरूपम्। तत्र नित्यत्वबोधकानि। कण्वः—एकादश्यामुपवसेन्न कदाचिदतिक्रमेत्। सनत्कुमारः—न करोति हि यो मूढ एकादश्यामुपोषणम्। स नरो नरकं याति रौरवं तमसावृतम्। नारदीये—यानि कानि च पापानि ब्रह्महत्यासमानि च। अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे। स्कान्दे—मातृहा पितृहा चैव भ्रातृहा गुरुतल्पगः। एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि। तथा, परमापदमापन्नो हर्षे वा समुपस्थिते। सूतके मृतके वापि न त्याज्यं द्वादशीव्रतम्। विष्णुरहस्ये—द्वादशी न प्रयोक्तव्या यावदायुः सुवृत्ति-

भिः। इत्यादीनि बहूनि। अथ काम्यत्वबोधकानि। विष्णुरहस्ये–यदीच्छेद्विष्णुसायुज्यं शुभां संपदमात्मनः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। कात्यायनः–संसारसागरोत्तारमिच्छेद्विष्णुपरायणः। ऐश्वर्यं सन्ततिं स्वर्गं मुक्तिं वा यद्यदिच्छति। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। नारदीये—अश्वमेधसहस्राणि वाजपेयशतानि च। एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्। इत्यादीनि भूयांसि। अत्र कश्चिदाह—एकस्यैव नित्यत्वं काम्यत्वं च विरुद्धम्। नित्यत्वं नाम फलानपेक्षत्वं काम्यत्वं फलापेक्षत्वम्। न चैकस्य विरुद्धरूपद्वयसम्भव इति। तन्न, संयोगपृथक्त्वन्यायेनोपपत्तेः, सापेक्षनिरपेक्षकर्तृभेदेन कर्त्तुं शक्यत्वाच्च। 'पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां सदा' इति दिनद्वयविधानात्। 'जह्याद्भक्तद्वयं नित्ये काम्ये भक्तचतुष्टयम्' इति व्रताङ्गनियमभेदात्। नह्येकं प्रत्येकस्मिन्नेव प्रयोगे नित्यत्वं काम्यत्वं चेति ब्रूमः। तथा सत्येकस्य कर्मणो द्वैरूप्याङ्गीकारे नित्यत्वकाम्यत्वाभ्यां विरोधः स्यात्। यद्वा प्रमाणद्वयसद्भावादेकस्यापि कर्मणो द्वैरूप्याङ्गीकारः खादिरवत्। यथा–खादिरो यूपो भवतीति नित्यः खादिरः, खादिरं वीर्यकामस्य यूपं कुर्वन्तीति तस्मिन्नेव क्रतौ काम्यः। तद्वदत्रापि स्यात्। तथाच सूत्रम्। एकस्य तूभयत्वे संयोगपृथक्त्वमिति। अग्निहोत्रवद्वा द्वैरूप्यम्। यावज्जीवमग्निहोत्रं जुहोतीति नित्यत्वम्। अग्निहोत्रं जुहुयात्स्वर्गकाम इतिकाम्यत्वम्, तद्वदत्रापि स्यात्। अर्जुनविनोदे तु—अग्निहोत्रवदेकस्याप्युपवासस्य निमित्तभेदेन द्वैरूप्यम्। यथाग्निहोत्रे यावज्जीवमित्यनेन यावज्जीवशब्देन पुरुषायुषपरिमितकालो निमित्तम्। काम्ये चाग्निहोत्रे स्वर्गकामनैव निमित्तम्। तथात्राप्युभयं निमित्तम्। कालविशेष इति कर्मधर्मो नित्यविधिः,

एकादशीनित्या काम्या वा इति विचारः

काम्यविधिर्गुणविधिर्नतु प्रयोगभेदः । ननु कर्त्रैक्याच्च नित्यकाम्यरूपौ द्वौ प्रयोगौ कथं घटेते । इत्थं—विविदिषाधिकरणन्यायात्सकृदेवानुतिष्ठतः प्रयोगद्वयसिद्धिः । अयमर्थः । 'तमेव वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुत्या यज्ञादीनां ब्रह्मविद्यार्थत्वं विहितम् । यावज्जीवमित्यादिना आश्रमधर्मत्वं च । तत्र प्रयोजनभेदेन प्रयोगभेद इतिपूर्वपक्षे सिद्धान्तो न योगभेदः, निमन्त्रितब्राह्मणभोजनप्रयोगवत् । यथा निमन्त्रितब्राह्मणेन द्विर्न भुज्यते किन्त्वेकेनैव भोजनेनान्यकर्तृकश्राद्धनिष्पत्तिः स्वतृप्तिश्च साध्यते । तद्वद्ब्रह्मविद्यार्थत्वमाश्रमधर्मत्वं चाग्निहोत्रादीनाम् । नच नित्यानित्यसंयोगविरोधः, उभयबोधकवाक्येन तदभावात् । तस्मात्सकृदेव प्रयोगइति । तद्वत्सकृदुपवासेनैकादश्यां नित्यकाम्यप्रयोगोस्तु यत्र न कालभेदोङ्गभेदोवेति सर्वं स्वस्थम् । विविदिषाधिकरणसंग्राहकौ । 'विद्यार्थमाश्रमार्थं च द्विःप्रयोगोऽथवा सकृत् । प्रयोजनविभेदेन प्रयोगोपि विभिद्यताम् । श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाश्रमस्तथा । अनित्यनित्यसंयोगयुक्तिभ्यां खादिरो मत' इति । ननु सकृदनुष्ठानेनानेकार्थसिद्धिर्द्वेधा तन्त्रेण प्रसङ्गेन वा, तन्त्रं यथा—दर्शपौर्णमासयोः षण्णां प्रधानयागानां त्रयाणां मध्ये सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गयागेनोपकारः साध्यत इति । प्रसङ्गोयथा—पश्वर्थमनुष्ठितेन प्रयाजादिना पशुसत्रमध्यपातिना पशुपुरोडाशस्याप्युपकारः सिध्यतीति, प्रकृते तन्त्रप्रसङ्गयोः कतरस्योपादानमिति चेत्प्रसङ्गस्येति ब्रूमः । काम्यप्रयोगेणैव नित्यप्रयोगस्यापि सिद्धत्वात् । तथा च स्मृतिः । काम्येपि नित्यसिद्धिः स्यात्प्रसङ्गेनोभयात्मके ॥

अथाधिकारिणः । कात्यायनः—अष्टवर्षाधिको मर्त्यो ह्यपूर्णा-

१ उत्तरमी० अ० ३ पा० ४ अधि० ८ ।

शीतिवत्सरः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि' इति

एकादश्यधिकारिनिर्णयः

सामान्ये विशेषव्यवस्थामाह कालादर्शः । 'विधवाया वनस्थस्य यतेश्चैकादशीद्वये । उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः । भुजेर्निषेधः कृष्णायां सिद्धिस्तस्य ततो व्रत' इति । गारुडे—पुनः प्रभातसमये घटिकैकादशी भवेत् । तत्रोपवासो विहितो वनस्थस्य यतेस्तथा । विधवायास्तु तत्रैव परतो द्वादशी न चेत् । कौर्म्मे—एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही । तथा—सङ्क्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा । एकादश्यां न कुर्वीत उपवासं च पारणम् । कात्यायनः—एकादशीषु कृष्णासु रविसंक्रमणे व्रतम् । चन्द्रसूर्योपरागे च न कुर्यात्पुत्रवान्गृही । व्रतमुपवासम् । गौतमः—आदित्येऽहनि संक्रान्त्यामसितैकादशीषु च । व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही । संक्रान्त्यादिविहितोपवासविषयोऽयं

पुत्रवद्गृहिणां विशेषः

निषेधो नतु तद्युक्तैकादश्युपवासविषयः । 'तन्निमित्तोपवासस्य निषेधोयमुदाहृतः । नानुषङ्गकृतो ग्राह्यो यतोनित्यमुपोषणम्' इति जैमिनेः । अनुषङ्गकृतः संक्रान्त्यादियोगकृतः एकादश्युपवासे निषेधो न ग्राह्य इत्यर्थः । कौर्मे—न शङ्खेन पिबेत्तोयं न खादेत्कूर्मशूकरौ । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन । अनन्तभट्टीये—उपवासनिषेधे तु भक्ष्यं किञ्चित् प्रकल्पयेत् । अत्र प्राञ्चः । गृहस्थैः शुक्लायामुपवासः कृष्णायां फलाहारादिकं कार्यं,नत्वन्नादिभक्षणं स्वच्छन्देन । 'भुजेर्निषेधः कृष्णायां सिद्धिस्तस्य ततो व्रत' इत्यादिवाक्यात् । कृष्णायामुपवासनिषेधेपि न व्रतनिषेधः, न शङ्खेन पिबेत्तोयमित्यादिनिषेधकवाक्यस्योभयैकादशीसाधारण्यात् । हेमाद्रिसंग्रहेपि—भुजेरन्न हः

रेर्द्दिनेऽखिलजनाः पक्षद्वयेपि व्रते, ह्येकादश्युभयी गृहीतरनृभिः कार्य्या तु शुक्लैव सा। शस्ता स्याद्गृहिणोऽसिता तु शयनी-बोधान्तरस्थाप्यथो, न स्यात्सात्मजितोऽथ पुत्रिगृहिणां काम्यव्रते स्याद्द्वयी' इति। तस्मादुपवासनिषेधे कृष्णायां किञ्चिद्भक्ष्यमोदनादिव्यतिरिक्तं कल्प्यम्, विद्धायां शुक्लायाञ्च। 'अविद्धानामलाभे तु पयोदधिघृतानि च। सकृदेवाल्पमश्नीयादुपवासस्त्वसौ भवेदि-त्यनन्तभट्टीयवचनादिति वदन्ति। तन्न सम्यगिव, यतिब्रह्मचारिवानप्रस्थविधवादीनामुभयैकादश्युपवासाधिकारस्य दर्शितत्वाद्। गृहस्थस्य शुक्लायामेवोपवासो नित्योऽन्यत्र तु काम्य इत्युक्तम्। तत्कथं न शङ्खेन पिबेत्तोयमित्यादि निषेधस्य सर्वसाधारण्यम्। तेन यस्य यस्यामेकादश्यामुपवासाधिकारस्तस्य तदकरणे निन्दावचनमन्वेति। नतु गृहस्थस्य कृष्णैकादश्यकरणे, अनधिकाराद्। तस्माद् गृहस्थस्य कृष्णैकादश्यां फलाहाराद्युपवासानुकल्पे नाधिकारः, उपवास एवानाधिकाराद्। मुख्यपक्षाभावेऽनुकल्पाभावाद्। नह्यकृतगोदानस्य तदनुकल्पे रजतनिष्कदानादावधिकारः सम्भवति। नच शयनीबोधिनीमध्यवर्तिकृष्णैकादश्युपवासोपि गृहस्थस्य नित्यः,सैवोपोष्या गृहस्थेनेति विशेष्यसङ्गतैवकारस्यान्ययोगव्यवच्छेदपरत्वादिति वाच्यम्। उपोष्यैवेति क्रियासङ्गतत्वेनात्यन्तायोगव्यवच्छेदपरत्वादेवकारस्य। नच विशेष्यसङ्गतिपरिहारे बीजाभावः। अत्यन्तायोगव्यवच्छेदस्याग्रे कथनीयस्यैव बीजत्वाद्। अन्यथा सैवेत्यनेनैवान्यकृष्णाव्यवच्छेदे प्राप्ते नान्या कृष्णेत्यस्य पौनरुक्त्यापत्तिरिति। किञ्च 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यनेन भुक्तिनिषेधो न क्रियते किन्तूपवासो विधीयते। भुक्तिनिषेधे फलाहारादीनामपि निवृत्तिप्रसङ्गाद्। तस्माद् एकादश्यां न भुञ्जीतेत्यस्य ए-

कादश्यामुपवसेदित्यर्थः। स चोभयोः पक्षयोर्गृहस्थस्य न सम्भवति इति यत्यादिपरमेवेदं वचनमित्यस्मदादीनां प्रतिभासते॥

उपवासानुकल्पानाह वायुपुराणे । 'नक्तं हविष्यान्नमनोदनं वा फलन्तिलाः क्षीरमथाम्बु चाज्यम्। यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च' । वायुः प्राणायामादिना वायुपानं न तूपवासो वायुशब्देनोच्यते, तदनुकल्पानां प्रक्रान्तत्वादिति । नक्तं हविष्यान्नकल्पः नतु दिवा, हरिवासरेऽर्थादेकादशीदिने ऽन्नस्य निषिद्धत्वात् । नच हरिवासरपदमेकादश्यहोरात्रपरम् । रात्रौ हविष्यान्नस्यानुकल्पत्वविरोधात् । अनोदनं वेति सामान्येनानोदनस्यानुकल्पत्वाच्च । नच तर्हि सर्वस्यामेकादश्यां रात्रावन्नभक्षणं प्रसज्जेत। उपवासविरोधादिति । अन्नशब्दस्यौदनवाचकत्वादोदनभक्षणे सकलब्रह्महत्यादिपातकसम्भवात् । न चैकादश्यां पिष्टादिभुक्तिरिष्टा स्यात्, उपवासविधिविरोधादित्युक्तमेव । तस्मात्पिष्टादिभक्षणे नित्योपवासाकरणजप्रत्यवायसामान्यापातः। अन्नभक्षणे तु ब्रह्महत्यादिसकलपापापत्तिरिति ध्येयम्। अत्रैवाधिकरणन्यायः—अन्नेन जुहुयादिति श्रुतौ अन्नमदनीयम्, तत्केनादनीयेन होतव्यमिति सन्देहे। अन्नं प्रत्यक्षमोदनमित्युत्तरश्रुत्या निर्णयकरणादन्नेनैव होमः पर्यवसितः। अत्राप्यन्नपदस्यादनीयमात्रपरत्वे पयोऽभ्यवहारादीनामपि निवृत्तिप्रसङ्ग इति न काप्यनुपपत्तिः। यद्वा हविष्ययोगेन हविष्यमदनीयमोदनभिन्नमेव। अस्मिन्पक्षे नक्तमित्येकोनुकल्पः हविष्यान्नमित्यपरः । अनोदनमिति तृतीयः, हविष्यान्नमित्यस्यैव वा विशेषणमनोदनमिति । ओदनस्यात्यन्तनिषिद्धत्वादेवानोदनपदेनौदनं वारयति। तुल्यत्वे त्वपिष्टकमित्याद्यपि स्यादिति दिक् ॥

अन्नपदनिरुक्तिः

अथोपवासस्वरूपं निरूप्यते । विष्णुधर्मोत्तरे—उपावृत्तस्य

पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । पापानि असम्भाष्यसम्भाषणास्पृश्यस्पर्शनादीनि, उपावृत्तस्य निवृत्तस्य, गुणाः विष्णुजपध्यानकथाश्रवणादयः । वृद्धवशिष्ठः—उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् । खादनं दन्तघर्षणम्, दन्तधावनानुकल्पो द्वादशगण्डूषाः । विष्णुधर्मोत्तरे—'श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्रीशतसम्पूतमम्बु प्राश्य विशुध्यति' । स्वदारव्यतिरिक्तस्त्रीणां प्रेक्षणादीन्यप्युपवासे वर्ज्यानि । 'स्त्रीणां संप्रेक्षणाच्चैव ताभिः संकथनादपि । भिद्यते ब्रह्मचर्यन्तु स्वदारैर्ऋतुसङ्गमात्' इति निर्णयामृतोदाहृतवचनात् । प्रकर्षेण ईक्षणं भावपूर्वकमवलोकनम्, उदासीनावलोकनादावदोषात् । ऋतुरत्र पञ्चदशनिशान्त्यनिशाव्यतिरिक्तो बोध्यः, तत्र मैथुनस्यावश्यकत्वात् । अकरणे भ्रूणहत्याद्यापातात् । तदभिप्रायेणाह कात्यायनः—रेतःसेकात्मकं भोगमृतेऽन्यत्र क्षयःस्मृतः । क्षय उपवासस्य । देवलः—गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः । औदुम्बरं ताम्रमयम् । गृह्णीयादित्यन्तं काम्योपवासाभिप्रायेण । सङ्कल्पयेदिति नित्योपवासाभिप्रायेण, सङ्कल्पयेन्मनसैवाभिध्यायेत् । मन्त्रस्तु—एकादश्यां निराहारो भूत्वा तदपरेऽहनि । भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत । कात्यायनः—नित्योपवासी यो मर्त्यः सायं प्रातर्भुजिक्रियाम् । सन्त्यजेन्मतिमान्विप्रः संप्राप्ते हरिवासरे । विप्र इत्युपलक्षणम् । नित्योपवासे भोजनद्वयनिवृत्तिरेव न तु दशमीद्वादश्योरेकभुक्तादि । काम्येत्वाह देवलः । सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे । उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् । उपवासफलप्रेप्सुरित्यनेनास्य काम्यविषयता सूचिता । काम्येऽपरं विशेषमाह कात्यायनः—अष्टाक्षरेण

उपवासनियमाः ।

काम्योपवासे विशेषः

मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम्। उपवासफलमेप्सुः पिबेत्पात्रगतं जलम्। काम्योपवासे दशम्यादिनियममाह। मात्स्ये—कांस्यं मांसं सुराक्षौद्रं तैलं वितथभाषणम्। आयासं च प्रवासञ्च दिवास्वापं च मैथुनम्। शिलापिष्टं मसूरं च दशम्यादिषु वर्जयेत्। सुरा येषां प्राप्ता तेषां निषिध्यते। स्कान्दे—कांस्यं मांसं मसूरं च चणकं कोरदूषकम्। शाकं मधु परान्नं च हन्युरष्टाविमे फलम्॥

एकादश्याः वेधविचारः।

एकादशी च परविद्धैव ग्राह्या युग्मवाक्यात्। 'एकादशी न कर्त्तव्या दशमीसंयुता विभो' इतिस्कान्दात्। एकादशी संक्षेपात् शुद्धाविद्धेतिद्वेधा। सूर्योदये दशमीयोगरहिता शुद्धा तत्र तत्सहिता विद्धा। 'सूर्योदयस्पृशा ह्येषा दशम्या गर्हिता सदा' इति वचनात्। सूर्योदयस्पर्शिन्या दशम्या युक्ता निन्दितेत्यर्थः। यत्तु 'आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता। एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता' इतिवचनं तद्विष्णुमन्त्रोपवासविषयम्। 'दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। वैष्णवैर्न तु वर्त्तव्यं तद्दिनैकादशीव्रतम्' इति वचनात्। 'परमापदमापन्नो हर्षे वा समुपस्थिते। नैकादशीं त्यजेज्जातु यस्य दीक्षास्ति वैष्णवी। समात्मा सर्वभूतेषु निजाचारादविप्लुतः। विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते। अतिवेधादयः सर्वे ये वेधास्तिथिषु स्मृताः। सर्वेऽप्यवेधा विज्ञेया वेधाः सूर्योदये मताः'। अतिवेधादयश्चारुणोदयवेधविशेषाः। 'अरुणोदयवेधः स्यात्सार्द्धं तु घटिकात्रयम्। अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः। महावेधोपि तत्रैव दृश्यते ऽर्को न दृश्यते। तुरीयस्तत्र विहितो वेधः सूर्योदये बुधैः'। सूर्योदयात्प्राक् मुहूर्त्तद्वयात्मको ऽरुणोदयः। सूर्योदयसन्देहकाले दशमीयोगोमहावेधः। कालनिर्णये—प्रातर्वेधः कृतयुगे

त्रेतायामरुणोदये। द्वापरे चाप्युषःकाले कलौ सूर्योदये स्मृत' इति। तत्र शुद्धैकादशी समन्यूनाधिक्यभेदेन त्रिधा। त्रिविधापि द्वादशीसाम्यन्यूनाधिक्यभेदेन योगात्प्रत्येकं त्रिविधा भवति, एवं विद्धापीति मिलित्वाष्टादशभेदाः। पाद्मे—शुद्धा विद्धा पुनस्त्रेधा भेदैर्न्यूनसमाधिकैः। तत्रैकैका पुनस्त्रेधा द्वादश्यूनसमाधिकैः'। अत्र समत्वं षष्ठिदण्डात्मकम्। ततो न्यूनत्वे न्यूनत्वमाधिक्ये चाधिक्यमिति। तत्र द्वादशीसाम्यादियुक्तशुद्धसमहीनाषड्भेदेषु पूर्वैवोपोष्या। तदुक्तं स्कान्दे—शुद्धा यदा समा हीना समा हीनाधिकोत्तरा। तदा पूर्वामुपवसेन्नोत्तरां वैष्णवीमपि। पूर्वामेकादशीं, वैष्णवीं द्वादशीम्। नारदीये—न चेदेकादशीविद्धा द्वादशी परतः स्थिता। उपोष्यैकादशी तत्र यदीच्छेत्परमम्पदम्। यत्तु 'एकादशी भवेत्पूर्णा परतोद्वादशी यदि। तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्' इति। अविद्धापि तथा विद्धेत्यादि वचनं। तत् द्वितीयदिने एकादश्याः सद्भावे द्रष्टव्यम्। यदपि 'सम्पूर्णैकादशी त्याज्या परतोद्वादशी यदि। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्' इत्यादि द्वादशीवृद्धौ वचनं तद्भागवतपरम्। 'द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम्। वञ्जुलीवैष्णवैः कार्या हत्यायुतविनाशिनी' इति ब्रह्मवैवर्त्तात्। अन्यथा शुद्धा यदा समाहीनेति स्कान्दविरोधः। शुद्धाधिका द्वादशीसमा शुद्धाधिका द्वादशीन्यूना च पूर्वा गृहस्थैरुत्तरा यतिभिरुपोष्या। मार्कण्डेये—सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां तथा। विधवापि च तत्रैव परतो द्वादशी न चेत्। स्कान्दे—सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। त्रयोदशी उषःकाले उपोष्या तत्र का भवेत्। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति। अत्रापि वै-

अष्टादशविधैकादशीनिर्णयः।

ष्णवैरेव द्वे तिथी उपोष्ये। शुद्धाधिका द्वादश्यधिका तु सर्वैरुत्तरैवोपोष्या। नारदः—सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। सर्वैरेवोत्तरा कार्य्या परतो द्वादशी यदि। अत्रैव 'अविद्धापि तथा विद्धा परतो द्वादशी यदि'। अथ विद्धा भविष्योत्तरे।'अरुणोदयकाले तु दशमी यदि दृश्यते। सा विद्धैकादशी तत्र पाप-

विद्धायाः नव भेदाः

मूलमुपोषणम्'।इत्यपिवैष्णवपरम्, युगान्तरपरंवा। सौरधर्मेष्वरुणोदयवेधप्रतिपादिकानि सर्वाण्यपि वचनानि भागवतपरतया योज्यानि। विद्धसमा द्वादशीसमा विद्धसमा द्वादशीन्यूना च पूर्वा गृहस्थैः परा यतिभिरुपोष्या। पुराणसमुच्चये—दशमीमिश्रिता पूर्वा द्वादश्यां च विलुप्यते। एकादश्यां तदा ब्रह्मन्नुपवासः कथं भवेत्। शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। सकामैर्गृहिभिः पूर्वा विद्धापीति विनिश्चयः। ऋष्यशृङ्गः—पारणाहे न लभ्येत द्वादशी कलयापि चेत्। तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः। अत्रैव 'विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत्'। व्यासः—दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते। एकादश्यां महाप्राज्ञ उपवासः कथं भवेत्। शुद्धैव द्वादशी राजन्नुपोष्या फलकाङ्क्षिभिः। पारणं तु त्रयोदश्यां पूजयित्वा जनार्दनम्'। विद्धसमायां द्वादश्याधिक्यवत्यां तु द्वादश्यामेकादशीसद्भावात्सर्वेषां परत्रैवोपवासः। 'कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदा। तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेदितिवचनात्। विद्धन्यूना द्वादशीसमा विद्धन्यूना द्वादश्यधिका च सर्वैः पूर्वैवोपोष्या। 'अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु। मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशीतिथिः'। मुहूर्तपञ्चकवेधस्त्वरुणोदयमारभ्य ग्राह्यः, सूर्योदयमारभ्य ग्रहणेनोत्तरदिने एकादश्यभावकथनं नोपपद्येत। यदाह स एव 'सर्वत्रैकादशी का-

र्या दशमीविश्रिता बुधैः । मातर्भवतु वा माभूद्यस्मान्नित्यमुपोषणम्' । मातस्त्रयोदश्यां द्वादशी भवतु मा वा भूदित्यर्थः । मुमुक्षुभिस्तु विद्धां परित्यज्य शुद्धद्वादश्यामेवोपवस्तव्यम् । व्यासः । 'एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्' । लुप्ता दशमीविद्धा सती परदिने अवर्तमाना । एवमन्यान्यपि शुद्धद्वादश्युपवासविधायकानि मुमुक्षुपराणि ज्ञातव्यानि । पाद्मे–एकादशी दशाविद्धा परतो न विवर्द्धते । यतिभिर्गृहिभिश्चैव नैवोपोष्या क्षये तिथिः' । अत्र यतिशब्दो नियमब्रह्मचार्यादिपरः नतु चतुर्थाश्रमपरः । तस्य मुमुक्षुत्वेन द्वादश्युपवासविधानात् । तथाच सुमन्तुः 'दिनक्षयेऽपि शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः । उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा' पुत्रवद्गृहिणां तु विद्धन्यूनायां निषिद्ध उपवासः । व्यासः–एकादशीषु नष्टासु रवौ संक्रमणे तथा । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही' । अयमपि तन्निमित्तोपवासस्यैव निषेधो नत्वेकादश्युपवासस्य । यदाह सनत्कुमारः–भानुवारेण संयुक्ता तथा संक्रान्तिसंयुता । एकादशी सदोपोष्या सर्वसंपत्करी तिथिः' । पारणा तु रविवारादौ सर्वदा निषिद्धा, निषिद्धकाले पारणापाते नित्योपवासेप्यनुकल्प एव शरणम् । यदातु विद्धाधिका द्वादशीहानिसाम्याधिक्यवती तदा विद्धां विहाय मिश्रायां द्वादश्यामुपवसेत् । यदाह कौर्मे । 'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र क्रतुशतं पुण्यं त्रयोदश्यां च पारणम्' । तथा 'द्वादश्येकादशी यत्र द्वादशी परतोऽपि हि । द्वादश्यां पारणं कृत्वा क्रतुकोटिफलं भवेत्' । नारदः–नोपोष्या दशमीविद्धा सदैवैकादशी तिथिः । तामुपोष्य नरो जह्यात्पुण्यं वर्षशतोद्भवम् । तथा–दशमीशेषसंयुक्ता गान्धार्या समुपोषिता । तस्याः पुत्रशतं नष्टं त-

स्मार्ता परिवर्जयेत् ॥ अयं विद्धानिषेधो द्वादशीवेधसद्भावे बोध्यः। अन्यथा पारणाहे न लभ्येतेत्यादि विरोधः। निर्णयामृते तु विद्धाधिका द्वादशीन्यूना गृहिभिः पूर्वा यतिभिरुत्तरोपोष्येति निरणायि। वचनान्यप्युदाहारिषत। तानि यथा—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः॥ द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः। पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम्॥ कलाप्येकादशी यत्र द्वादश्यनुगता भवेत्। दिनक्षयेपि सा पुण्या यतीनामुत्तरातिथिः'॥ पुत्रपौत्रसमन्वितो विद्धाधिकां न्यूनद्वादशिकां नोपवसेदित्यर्थः। शातातपः—एकादशी यदा विद्धा द्वादशी च क्षयं गता। क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते। तत्रोपवासानुकल्पत्वाभावेपि वचनबलान्नक्तव्रतम् पुत्रवद्गृहिणाम्॥ तदुक्तं स्कान्दे। 'एकादशीकला यत्र द्वादशी च क्षयं गता। तत्र नक्तं प्रकुर्वीत नोपवासोगृहाश्रमे'। यानितु—दशमीशेषसंयुक्तां यः करोति विमूढधीः। एकादशीफलं तस्य नस्याद्द्वादशवार्षिकम्। तथा—दशम्यनुगता यत्र तिथिरेकादशी भवेत्। तत्रापत्यविनाशश्च परेत्य नरकं व्रजेत्' इत्यादीनि दशमीविद्धोपवासनिषेधकानि तानि विद्धाधिकाविषयाणीत्युक्तम्। यान्यपि 'एकादश्यामुपोष्यैवं द्वादश्यां पारणं स्मृतम्। त्रयोदश्यां न तत्कुर्यात् द्वादशद्वादशीक्षयात्' तथा—दशम्यनुगता हन्ति द्वादशद्वादशीफलम्। धर्मापत्यधनायूंषि त्रयोदश्यां तु पारणम्' इत्यादि, तान्यपि द्वादशीहानियुक्तविद्धाधिकापराणीति। वायवीये—एकादशी यदा विद्धा द्वादशी च क्षयं गता। दशमीमिश्रिता तत्र उपोष्या मुनिसत्तम। विद्धानिषेधकवाक्यानि द्वादश्यधिकविद्धसमाविद्धाधिकाविषयाणि। विद्धाधिका द्वादशीहीना तु गृहिभिः पूर्वैवोपोष्या यतिभिरुत्तरेति सिद्धम्। 'त्रितिथिस्पृगहोरात्रं नोपोष्यं तु सुतार्थिभिः' इतिवच-

नात् । 'द्वादशीसङ्गता यत्र भवत्येकादशीकला । दिनक्षयेपि सा पुण्या न दशम्या युता क्वचित्' इत्यादि यतिपरम् । विज्ञानेश्वरस्वरसोप्येवम् । एवं सति गृहिणो द्वादशीक्षये दशाविद्धोपोषणे सिद्धे यन्न क्वाद्युक्तम् । तदशक्तविषयमिति स्मर्त्तव्यम् । 'पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम्' इत्यपि यतिपरम् । यतेर्द्वादशीक्षयेप्युत्तरैकादश्युपवासविधानात् । गृहिणस्तु त्रयोदशीपारणे द्वादशद्वादशीक्षयादिदोषस्योक्तत्वात्पूर्वैवोपोष्येति नानुपपत्तिरिति । गृहिणामपि निष्कामाणां त्रयोदशीपारणमुचितम् । 'पारणं तु त्रयोदश्यां निष्कामानां विमुक्तिदमितिस्कान्दवचनात् । यत्रतु द्वादशीसमायां विद्धाधिकायां गृहियत्योरुत्तरत्रैवोपवासस्तत्र त्रयोदशीपारणमायातमितिचेत् । आयातु, द्वादशीसद्भावे त्रयोदशीपारणस्य निषिद्धत्वात् 'यदि किञ्चित्त्रयोदश्यां द्वादशीचोपलभ्यते । द्वादश्यां पारणं तत्र वर्ज्जयित्वा त्रयोदशीम् ॥ तदा हानिकरी ह्येषा द्वादशी लंघिता नरैः । करोति धर्महरणमस्नातेव सरस्वती' इत्यादिवचनात् । गारुडे—यदा स्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत् । विधेर्मध्यान्हिकस्यापि तत्र स्यादपर्कषणम् ॥ स्कान्देपि—यदा भवेदतीवाल्पा द्वादशी पारणादिने । उषःकाले द्वयं कुर्यात्प्रातर्मध्यान्हिकं सदा । अत्यल्पायां द्वादश्यां प्रकारमाह कात्यायनः 'विध्यादिकं भवेन्नित्यं पारणं तु निमित्तजम् । अद्भिस्तुपारणं कुर्यात्पुनर्भुक्तं न दोषकृत्' । विष्णुधर्मोत्तरे विशेषः—द्वादश्याः प्रथमः पादोहरिवासरसंज्ञितः । तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः । विष्णुतत्पर इति वचनाद्वैष्णवस्य विशेषेण द्वादशीप्रथमपादवारणं प्राप्तमिति ।

पारणानिर्णयः

अथोपवासानुकल्पाः । निर्णयाम्भोजभानौ । 'उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत् । तावद्धनानि वा दद्याद्विप्रेभ्यो द्विगुणानि

च। सहस्रसंमितां देवीं जपेद्वा प्राणसंयमात् । कुर्यात् द्वादशसङ्ख्याका यथा शक्त्याद्दतान्नरः । कात्यायनः—उपवासे त्वशक्तानामशीतेरूर्द्धजीविनाम् । एकभक्तादिकं कार्य्यमाह बौधायनो मुनिः। कौर्म्मे—एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेत् । वायवीये—अथवा विप्रमुख्येभ्यो दानं दद्यात्स्वशक्तितः । उपवासफलं तस्य समग्रं सम्भविष्यति। तत्र भोजनदोषोपि तत्क्षणादेव नश्यति'। स्कान्दे 'असामर्थ्ये शरीरस्य व्रते च समुपस्थिते। कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् । भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः । कात्यायनः—पितृमातृपतिभ्रातृगुर्वर्थे च विशेषतः । उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् । तथा राजक्षत्रियार्थे चैकादश्यामुपोषितः। पुरोधाः क्षत्रिणा सार्द्धं फलंप्राप्नोति निश्चितम् । क्षत्रिणा क्षत्रियेण । 'पितामहादीनुद्दिश्य एकादश्यामुपोषणे । कृतेतु तत्फलं विप्राः समग्रं समवाप्नुयुः । वाराहे—सूतकेतु नरः स्नात्वा प्रणम्य मनसा हरिम् । एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते'। तदङ्गपूजा मनसैव कार्येत्यर्थः । व्रतान्तरमपि पूर्वसङ्कल्पितमशौचे न त्याज्यम् 'पूर्वसङ्कल्पितं यत्तु व्रतं सुनियतव्रतैः । तत्कर्त्तव्यं नरैः शुद्धं दानार्चनविवर्जितम्' । सूतकान्ते दक्षिणा देया । काम्ये तु विशेषः । काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्ये प्रतिक्रमादूर्द्ध्वं केचित्प्रतिकृतिं विदुरिति ॥

स्त्रीणां विशेषमाह कात्यायनः । 'भार्या भर्त्तृमतेनैव व्रतादीनाचरेत्' इति । मनुः 'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । विष्णुः । पत्यौ जीवति या नारी उपवासव्रतं चरेत् । आयुः साहरते भर्त्तुर्नरकं चैव गच्छति। मार्कण्डेये विशेषः—नारी या त्वननुज्ञाता भर्त्रा पित्रा सुतेन वा। निष्फलं तु भवेत्तस्या यत्करोति

व्रतादिकम् । स्त्रीणामुपवासे दन्तधावनमदुष्टम् । आह मनुः 'पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्' । स्त्रीधर्मप्रकरणीयं वाक्यमिदम् । सरजस्का पत्यादिनापि कारयेत् । 'भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् । असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते । एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि । अन्तरातु रजोयोगे पूजामन्येन कारयेदिति वचनात् । अपरं विशेषमाह कात्यायनः 'उपवासो यदा नि-

एकादश्याम-
श्योविशेषः

त्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवितम् । भविष्योत्तरे चतुर्विधमुपवासमाह 'सताम्बूलमताम्बूलं सभोजनमभोजनम् । साहारञ्च निराहारं चतुर्विधमुपोषणम् । अत्र सताम्बूलं सभोजनं साहारं चेति त्रयोभेदाः । चतुर्थस्त्वताम्बूलादिपदैः सर्वत्रानुगतः केवलोपवासः । दशमीद्वादश्योस्ताम्बूलमश्नाति यत्र स सताम्बूलः । यत्र दशमीद्वादश्योर्भोजनद्वयं कुरुते स सभोजनः । यत्रावश्यकश्राद्धं कृत्वा पितृशेषान्नमाघ्रायोपवसति स साहारः । चतुर्थस्ताम्बूलभोजनाहारहीनः सर्वसाधारणः । त्रयो दश विशेषविषया अधिकारिविशेषविषयाश्च ज्ञातव्याः । एवमेव विश्वरूपनिबन्धेप्यष्टादशभेदा दर्शिताः । इत्येकादशीसामान्यनिर्णयः ॥

अथ विशेषाः ब्राह्मये—चैत्रमासस्य शुक्लायामेकादश्यां च वैष्णवैः । आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवैः । दमनेनार्चयित्वा तु रात्रौ जागरणं चरेत् ॥

अथ ज्येष्ठशुक्लैकादशी निर्जला नाम । पाद्मे 'वृषस्थे मिथुनस्थे वाशुक्लाह्येकादशी भवेत् । ज्येष्ठे मासि प्रयत्नेन सोपोष्या जलवर्जिता । स्नाने चाचमने चैव वर्जयित्वोदकं बुधः । अभयत्वादवाप्नोति द्वादशद्वादशीफलम्' । अस्यामेव सशर्करजलकुम्भदानम् । तापत्रयनिवृ-

त्तिर्विष्णुसालोक्यं च फलम् ॥

अथ शयनीकृत्यम्। विष्णुप्रतिमापूजनम्। रात्रौ जागरणम्, द्वादश्यां पूजनम्, त्रयोदश्यां नृत्यगीतादि। अस्यामपि चातुर्मास्यव्रतसंकल्पः। सनत्कुमारः 'एकादश्यां तु गृह्णीयात्संक्रान्तौ कर्क्कटस्य वा। आषाढ्यां वा नरोभक्त्या चातुर्मास्योदितं व्रतम्'। वृद्धगार्ग्यः 'न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वा तिथेः। खण्डत्वं चिन्तयेच्चातुर्मास्यव्रतविधौ नरः'। शुक्रादिबाल्यास्तादिदोषो नास्तीत्यर्थः॥

अथ भाद्रसितैकादशी पार्श्वपरिवर्त्तिनी। भविष्योत्तरे 'मासे भाद्रपदे मासि एकादश्यां सितेऽहनि। कटदानम्भवेद्विष्णोर्महापूजां प्रवर्त्तयेत्। कटदानं पार्श्वपरिवर्त्तनं। अस्यामेव श्रवणर्क्षयुतायां विजयैकादशीव्रतम्। हेमप्रतिमादानादि। 'दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः। श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा। पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात्। वृद्धौ कुर्यात्त्रयोदश्यां तत्र दोषो न विद्यते'। दशमीविद्धापि चैव श्रवणयुतैव कार्या। श्रवणान्ते पारणमित्यर्थः।

अथाश्विनशुक्लैकादश्यां भविष्योत्तरोक्तं पुत्रप्राप्तिव्रतम्। उपवासो हरिपूजादिकम्। आब्दिकं व्रतमिदम्। वशिष्ठेन पुत्रार्थिना कृतम्॥

अथ बोधिनी। ब्राह्मे 'कार्त्तिके मासि शुक्लायामेकादश्यां जनार्द्दनम्। सुप्तम्प्रबोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः'। भविष्योत्तरे 'कार्त्तिके शुक्लपक्षे तु एकादश्यां कृतार्चनः। मन्त्रेणानेन राजेन्द्र देवमुत्थापयेत् द्विजः'। मन्त्रश्च इदं विष्णुरितिवैदिकः। पौराणिकस्तु 'ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्य्यसोमादिभिर्वन्दित वन्दनीय। बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव'॥ 'इयं च द्वादशी देवबोधनार्थं

बोधिनीकृत्यम्

विनिर्मिता । त्वयैव सर्वलोकानां हितार्थं शेषशायिना ॥ उत्तिष्ठो-त्तिष्ठ गोविन्द त्यज निद्रां जगत्पते । त्वयिसुप्ते जगत्सुप्तमुत्थि-ते चोत्थितं जगत्' ॥ एवमुत्थाप्यानेन पुष्पाञ्जलिं दद्यात् । 'गता मेघा वियच्चैव निर्मलं निर्मला दिशः । शारदानि च पुष्पाणि गृहाण मम केशव' इति । समुत्थिते ततो विष्णौ क्रियाः सर्वाः प्रवर्त्तयेत् । महातूर्यरवै रात्रौ भ्रामयेत्स्यन्दने स्थितम् । उत्थितन्देवदेवेशं नगरे पार्थिवः स्वयम् । रात्रौ प्रजागरं कुर्या-देकादश्यां सुरालये । नृत्यगीतैस्तथा वाद्यैर्ऋग्यजुःसाममङ्गलैः । वीणापणवसंघैश्च पुराणश्रवणेन च । वासुदेवकथाभिश्च स्तोत्रैर-न्यैश्च वैष्णवैः । पुष्पैर्द्धूपैश्च नैवेद्यैर्दीपवृक्षैः सुशोभनैः । होमैर्भक्ष्यै-रपूपैश्च फलैः शार्करपायसैः । हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वशः । कुंकुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः । तस्यां राव्यां व्यतीतायां पञ्चामृतादिना गोविन्दं संपूज्य संस्नाप्य संभूष्य विविधनैवेद्यैः स्तोत्रगीतादिभिर्विसर्जयेत् । तथा—प्रभाते विमले स्नात्वा भोजयित्वा द्विजोत्तमान् । आचान्तेभ्यस्ततो दद्यात्त्यक्तं य-त्किञ्चिदेव हि । तदुक्तम् 'चातुर्मास्ये तु यत्त्यक्तं भक्ष्यभोज्यादिकं तथा । चतुरो वार्षिकान्मासान्नियमं यस्य यत्कृतम् । कथयित्वा द्विजेभ्यश्च दद्याद्भक्त्या सदक्षिणम् । दत्वा विसर्जयेद्विप्राँस्ततो भुञ्जीत तत्स्वयमिति ॥

अथ मार्गशुक्लैकादशीषु द्वादशसु संक्षेपेण धरणी-

धरणीव्रत-विधिः

व्रतान्युच्यन्ते । वाराहे—दुर्वासाः सत्यतपसमुवाच 'अथ मार्गशिरोमासि दशम्यांनियतात्मवान् । एव-मुच्चारयेद्वाचं तस्मिन् काले महामुने । एकादश्यां निराहारो भूत्वा तदपरेहनि' इत्याद्युक्तं मन्त्रम् । 'ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् । इतरां वा तडागं वा गृहे वा नियतात्मवान् । स्नात्वा-

चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् । तत्राराध्य महायोगं देवं नारायणं हरिम्। केशवाय नमः पादौ कटिं दामोदराय च। उदरं च नृसिंहाय उरः श्रीवत्सधारिणे । कण्ठं कौस्तुभभूषाय वक्षः श्रीपतये तथा। त्रैलोक्यविजयायेति बाहू सर्वात्मने शिरः। रथाङ्गधारिणे चक्रं शंखिने चेतिवारिजम् । गम्भीरायेति च गदां सरोजं शान्तमूर्त्तये । एवमभ्यर्च्य देवेशं देवं नारायणं विभुम् । पुनस्तस्याग्रतः कुम्भाँश्चतुरः स्थापयेद्बुधः। जलपूर्णान्समाल्याँश्च सितचन्दनलेपनान्। चूतपल्लवसुग्रीवान् सितवस्त्रावगुण्ठितान्। छादिताँस्ताम्रपात्रैश्च तिलपूर्णैः सकाञ्चनैः। चत्वारस्ते समुद्रास्तु कलशाः परिकीर्त्तिताः । तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रचर्च्चितम्। तस्मिन्सौवर्णरौप्यं वा ताम्रं वा दारवन्तथा । अलाभे सर्वपात्राणां पालाशं पत्रमिष्यते । तोयपूर्णं च तत्कृत्वा तस्मिन्पात्रे ततोन्यसेत् । सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्द्दनम् । तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम्। गन्धधूपैश्च वस्त्रैश्च अर्चयित्वा यथाविधि। रसातलगता वेदा यथा देव त्वयोद्धृताः । मत्स्यरूपेण तद्वन्मां भवादुद्धर केशव । एवमुच्चार्य्य तस्याग्रे जागरं तत्र कारयेत्। यथावित्तानुसारेण प्रभाते विमले ततः। स्नात्वा देवं समभ्यरुर्च्य चतुरो दापयेद्धटान् । पूर्वं च वह्वृचे दद्याच्छन्दोगे दक्षिणं तथा । यजुःशाखान्विते दद्यात्पश्चिमं चोत्तरं ततः । अथर्ववेदिने दद्यादेष एव विधिः स्मृतः । ऋग्वेदः प्रीयतां पूर्वे सामवेदस्तु दक्षिणे । यजुर्वेदः पश्चिमतो ह्यथर्वा चोत्तरेण तु । मत्स्यरूपं तु सौवर्णमाचार्य्याय निवेदयेत् । एवं दत्वा विधानेन द्वादश्यां विष्णुमर्च्य च । विप्राणां भोजनन्दद्याद्यथाशक्ति सदक्षिणम्। भूरिणा परमान्नेन ततः पश्चात्स्वयं नरः । भुञ्जीतसहितोविप्रैर्वाग्यतः संयतेन्द्रियः । अनेन विधिना यस्तु धरणी-

व्रतकृन्नरः। तस्य पुण्यफलं चाग्र्यं शृणु सत्यवतां वर। यदि वक्रसहस्राणां सहस्राणि भवन्ति हि। आयुश्च ब्रह्मणस्तुल्यं भवेद्यदि महाव्रत। तदानीमस्य धर्म्मस्य फलं कथयितुं क्षमेत्। पुत्रकामो विशेषेण व्रतमेतत्समाचरेत्। य इदं श्रावयेद्भक्त्या द्वादशीकृत्यमुत्तमम्। शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते॥ अत्र धरणीव्रते द्वादशीशब्दः सर्वत्रैकादशीपरः। एवं पौषादिशुक्लैकादशीषु कलशस्थापनपात्रादिविधिस्तुल्यः। क्रमेण कूर्म्मवाराहनृसिंहवामनजामदग्न्यश्रीरामवासुदेवबुद्धकल्किपद्मनाभयोगेश्वरप्रतिमाः सौवर्ण्यः पौषादिसितैकादशीष्वेकादशसु कार्य्याः। विधिर्म्मत्स्यवत्। सर्वत्र न्यासे विशेषः। कूर्म्माय पादौ, नारायणाय कटिं, संकर्षणाय उदरं, उरोभवाय कण्ठं, सुबाहवे भुजौ, विशालाय नम इति शिरः पूजयेत्। चक्रादि चतुष्कं स्वनाममन्त्रेणेति। एवं माघसितैकादश्यां मत्स्यवत्सर्वं कृत्वा। वाराहाय अगाधवीर्याय क्षेत्रज्ञाय विश्वरूपाय सर्वज्ञाय प्रजापतये प्रद्युम्नायेति नमोन्तैः सप्तभिर्मन्त्रैः पादकटिजठरवक्षःकण्ठशिरोबाहून्सप्ताङ्गानि सम्पूज्य, दिव्यास्त्राय नम इति सुदर्शनम्। अमृतोद्भवाय नम इति शङ्खं, वराहस्य भगवतः पूजयेदिति। दानार्चनविधिः पूर्वोक्त एव। एवं फाल्गुनसितैकादश्यां मत्स्यवत् कलशस्थापनादि कृत्वा नृसिंहप्रतिमायाः पादोरुकटिवक्षःकण्ठशिरसि क्रमेण नरसिंहगोविन्दविश्वभुगनिरुद्धशितिकण्ठपिङ्गकेशैश्चतुर्थ्यन्तैर्नमोन्तैश्च सम्पूजयेत्। ततः असुरध्वंसनायेति चक्रम्। तोयात्मने नमः शङ्खम् पूजयेत्। भविष्योत्तरे। 'फाल्गुने मासि शुक्लायामेकादश्यां जनार्द्दनः। वसत्यामलकीवृक्षे लक्ष्म्या सह जगत्पतिः। तत्र सम्पूज्य देवेशं शक्त्या कुर्य्यात् प्रदक्षिणम्। उपोष्य विधिवत्कल्पं विष्णुलोके

महीयते। एवं चैत्रसितैकादश्यां वामनपूजा। सर्वोविधिः पूर्ववत्। विशेषस्तु वामनविष्णुवासुदेवसङ्कर्षणविश्वहृद्व्योमविश्वजिद्भिः ङेन्तैर्नमोन्तैश्च सौवर्णवामनप्रतिमायाः पादकटिजठरवक्षः कण्ठशिरोबाहून्संपूज्य स्वनाम्ना शङ्खचक्रे चार्च्य पूर्ववत्कृत्वा पात्रदानादि। एवं वैशाखसितैकादश्यां जामदग्न्यपूजा। विशेषस्तु 'जामदग्न्यायेति पादौ उदरं सर्वधारिणे। मधुसूदनायेति कटिमूरू श्रीवत्सधारिणे। क्षत्रान्तकायेति भुजौ शितिकण्ठाय कूर्चकम्। शिरः सहस्रशीर्षाय शङ्खचक्रे स्वनामत' इति। ज्येष्ठसितैकादश्यां रामलक्ष्मणपूजा। पूर्ववत्सौवर्णौ रामलक्ष्मणौ। विशेषस्तु—रामाभिरामाय त्रिविक्रमाय धृतविश्वाय संवत्सराय संवर्त्तकाय सर्वास्त्रधारिणे एभिर्नमोन्तैः पादादिषडङ्गानि श्रीरामस्य सम्पूज्य स्वनाम्ना शङ्खचक्रे चार्च्य पश्चात्सहस्रशिरसं नम इति शिरः पूजयेदिति। इति रामद्वादशी। एवमाषाढसितैकादश्यां वासुदेवपूजा। वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धभूपतिचक्रपाणिपुरुषैश्चतुर्थ्यन्तैर्नमोन्तैश्च क्रमेण पादादिशिरोन्तं सम्पूज्य स्वनाम्ना शङ्खचक्रे पूजयेदिति। एवं श्रावणसितैकादश्यां दामोदरपूजा। मन्त्रेषु विशेषः—'दामोदरायेति पादौ हृषीकेशाय वै कटिं। सनातनाय जठरमुरः श्रीवत्सधारिणे। सुचक्रपाणये बाहू कण्ठञ्च हरये तथा। मुञ्जकेशाय तु शिरो भद्रायेति ललाटकम्। स्वनाम्ना शङ्खचक्रे तु पूजयेदिति।' इति दामोदरद्वादशी। एवं भाद्रसितैकादश्यां कल्किपूजा। विशेषः—नमोस्तु कल्किने पादौ हृषीकेशाय वै कटिं। म्लेच्छप्रध्वंसनायोरू जगन्मूर्त्ते तथोदरम्। शितिकण्ठाय कण्ठन्तु खड्गपाणे तु वै भुजौ। चतुर्भुजायेति हस्तौ विश्वमूर्त्ते तथा शिरः' । अत्र सम्बोधनान्तं चतुर्थ्यन्तमेव बोध्यम्। दानादिपूर्ववदिति। एषा कल्किद्वादशी। एवमाश्विनसितैकादश्यां पद्मनाभपूजा, विशेषमन्त्राः

'पद्मनाभाय पादौ तु कटिं वै पद्मयोनये । उदरं सर्वदेवाय पुष्कराक्षाय वै उरः । अव्ययाय तथा पाणिं प्राग्वच्चक्रादि पूजयेत्। प्रभवाय नम इति शिरः पूजयेदिति । एवं कार्त्तिकसितैकादश्यां योगीश्वरपूजा। विशेषस्तु—नमः सहस्रशिरसे शिरः सम्पूजयेद्धरेः। पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे। ज्ञानास्त्रायेति चास्त्राणि श्रीवत्सायेति वै उरः । जगद्ग्रासिष्णवे पूज्यमुदरं दिव्यमूर्त्तये । कटिं सहस्रपादाय पादौ देवस्य पूजयेदिति। प्रातिलोम्येन संपूज्य पुनरानुलोम्येन पादादितः पूजयेत्। ततः। ॐनमो दामोदरायेति सर्वाङ्गं सम्पूज्य पात्रे कृत्वा पूर्ववद्दद्यादिति। 'धरण्या चापि पाताले मग्नया तु कृतं पुरा । व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते । एकैका पाति चापत्सु राज्यमेकैव यच्छति। किंपुनर्द्वादशैतास्तु यत्नेनेदं न दुष्करम्' ॥

अस्यामेवारभ्य विष्णुधर्म्मोक्तमखण्डद्वादशीव्रतम्। धरणीव्रतवद्वर्षसाध्यम्। उद्यापने गरुडलक्ष्मीनारायणप्रतिमापूजा । सप्तजन्मखण्डव्रतपूर्णताफलम् । मार्गकृष्णैकादशीमारभ्य भविष्योत्तरोक्तं वैतरण्येकादशीव्रतम् । रात्रौ श्यामगोपूजा, अब्दान्ते उद्यापनं, यमादर्शनं फलम्। माघसितैकादश्यां पाद्मोक्तं भीष्मद्वादशीव्रतम्। दशम्यां नियमः। एकादश्यां नद्यादिस्नानम् । मण्डपादिकरणम् । मण्डपान्तर्वेदिकोपरि सच्छिद्रजलपूर्णं कलशं लम्बयेत्। तस्य च धारां शिरसा धारयेत्सकलाम् । निशां हरेः पूजा, विष्णोरुपरि क्षीरधारापातनं, पञ्चकुण्डेषु होमः, रात्रौ जागरणं, प्रातः स्वर्णशृङ्ग्यादिदानम्। अक्षारलवणभोजनं फलमभिमतम् ॥

---

अथ द्वादशीनिर्णयः। सा च पक्षद्वयेप्येकादशीयुतैव ग्राह्या। युग्मवाक्यात्। 'द्वादशी च प्रकर्त्तव्या एकादश्या युता प्रभो। सदा कार्य्या तु विद्वद्भिर्विष्णुभक्तैश्च मानवैः' इति स्कान्दात्। उपवासेप्येकादशीयुतैव ग्राह्या। 'एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः पर संयुक्ताः पराः पूर्वेण संयुता' इति गार्ग्यात्। कौर्म्मे—नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः। कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासरा' इति निषेधाच्चेति। द्वादश्याअष्टौ भेदाः। तदुक्तं दीपिकायाम्। 'या स्याद्रुद्रजयान्विता हरितिथिर्नाम्ना भवेन्त्रिस्पृशा, संपूर्णाधिकमस्ति पूर्वपरतश्चेत्पक्षवर्द्धिन्यपि। उन्मीलिन्यपि शुद्धविद्धभवयुक् भद्रा तु शुद्धाधिका, सा वञ्जुल्यपि तिष्यविष्णुभपुनर्वस्वात्मभूभान्विता। द्वादश्येव भवेज्जया च विजया तद्वज्जयन्त्यंहसां घातिन्येवमभीष्टका उपवसेदष्टौ महाद्वादशीः'। आत्मभूभं रोहिणी॥

अथ द्वादशीव्रतानि। भाद्रसितद्वादश्यां विष्णुधर्म्मोत्तरोक्तं श्रवणद्वादशीव्रतम्। उपवासो विष्णुपूजा, दध्योदनसहितजलपूर्णघटदानम्। श्रवणद्वादशी बुधयोगेऽत्यन्तमहती। 'तस्मिन्नेव तथा स्नानं यत्रकचन सङ्गमे। सागरस्नानजं राम फलं प्राप्नोत्यसंशयम्'। श्रवणद्वादश्युपवासे द्वादशद्वादशीफलं भविष्यपुराणोक्तम्। त्रयोदश्यां पारणम्।

श्रवणद्वादशी-निर्णयः

अथ श्रवणद्वादशीव्रतकालनिर्णयः। मात्स्ये। 'द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः'। स्वल्पश्रवणस्पृष्टा समस्ता पुण्या न तु तावत्येवेत्यर्थः। नारदीयेपि 'तिथिनक्षत्रयोर्योगे द्विकलोप्यष्टयामिक' इति। मात्स्ये—द्वादशी श्रवणर्क्षं च स्पृशेदेकादशी यदि। स एव वैष्णवोयोगो विष्णुशृङ्खलसंज्ञकः। तस्मिन्नुपोष्य विधिवन्नरः प्रक्षीणकल्मषः। प्राप्नोत्यनुत्तमां सिद्धिं

पुनरावृत्तिदुर्ल्लभाम्' । अत्र श्रवणयुक्ता द्वादशी यद्येकादश्यामेव भवति तदैकादश्युपवासेनैकेनैव व्रतद्वयं सम्पद्यत इत्यर्थः। पारणादिने यदि द्वादश्यां श्रवणर्क्षं वर्द्धते द्वादशी च शुद्धन्यूना भवति तदा तिथ्यन्तो नापेक्षितः । 'तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । तावदेव न भोक्तव्यं यावदेकस्य संक्षयः। विशेषेण महीपाल श्रवणं वर्द्धते यदि। तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत्' इतिवचनात्। यदा एकादशी संपूर्णा द्वादशी च श्रवणयुक् । तदोपवासद्वयम्। नच 'असमाप्ते व्रते पूर्वे नैव कुर्य्याद्व्रतान्तरं' इति वचनादेकादशीपारणमकृत्वा द्वादश्युपवासोऽनुचितः, उभयोरेकदैवत्वाददोषात् । तदुक्तम्—एकादशीमुपोष्यैवं द्वादशीं समुपोषयेत्। न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिरिति । उपवासद्वयासमर्थेन तु श्रवणद्वादश्यामेवोपवस्तव्यम्। तदुक्तम्। 'उपोष्य द्वादशीं पुण्यां श्रवणर्क्षेण संयुताम् । एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् । एवमेकादशीभुक्त्या द्वादशीसमुपोषणात् । पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयम्'। यदा तु द्वितीयदिने श्रवणं वर्द्धते तदा ऋक्षान्तो नापेक्ष्यते 'ऋक्षान्तेपारणं कुर्य्याद्विनाश्रवणरोहिणीमिति वचनात्। यदैकादश्यामेव श्रवणं तदैकादश्यामेव श्रवणद्वादशीव्रतम्। तदुक्तम्। 'याः काश्चित्तिथयः पुण्याः प्रोक्ता नक्षत्रयोगतः। तयैव तद्व्रतं कुर्य्याच्छ्रवणद्वादशीं विना'। श्रवणद्वादशीव्रतं तु श्रवणान्वितायामेकादश्यामपि कर्त्तव्यम्, न तु द्वादश्यामेवेति नियम इत्यर्थः। भविष्योत्तरे। 'एकादशी यदा तु स्याच्छ्रवणेन समन्विता । विजया नाम सा प्रोक्ता भक्तानां विजयप्रदा'। इयान् विशेषः। श्रवणैकादश्यां वामनपूजा श्रवणद्वादश्यां जनार्द्दनपूजेति । मात्स्ये। ऋक्षान्ते पारणं कुर्य्याद्विना श्रवणरोहिणीम् । अत्र तु तिथिमात्रान्ते पारणमित्युक्तम् । तीर्थस्नानदानविप्रभोजनश्राद्धादिकमन-

ष्टफलं, जपः सहस्रगुण इति। अथास्यामेव मात्स्योक्तं शक्रध्वजोत्थापनम्। शक्रोत्थापनं च विश्वाघृक्षत्रययुतायामिति।

कार्त्तिककृष्णद्वादशी वत्सद्वादशी। मध्यान्हे एकवर्णा सवत्सागौः पूज्या पुष्पमालाचन्दनादिभिः द्विजोमातारुद्राणामिति मन्त्रेण। स्त्रीशूद्रास्तु 'क्षीरोदार्णवसम्भूते सुरासुरनमस्कृते। सर्वदेवमये मातर्गृहाणार्घ्यं नमोस्तुते'। इति मन्त्रेण। ततो माषान्नवटकादिकं गोग्रासं दद्यात्। तत आशीःप्रार्थनं। प्रणम्य प्रदक्षिणीकृत्य विसर्ज्जयेत्। तद्दिने गोक्षीरघृतादिदानम्। नक्तं माषान्नभक्षणम्। ब्रह्मचर्य्यं भूशय्या। वत्सद्वादश्यां वत्सपूजा प्रथमापि कार्य्या। 'वत्सपूजा वटश्चैव कर्त्तव्या प्रथमेहनि' इतिवचनात्॥

अथ कार्त्तिकसितद्वादश्यां भविष्योत्तरोक्तं नीराजनद्वादशीव्रतम्। सायं दीपिकाभिः श्रीकृष्णनीराजनं, ततोलक्ष्म्यादिदेवानां गवां तुरगगजादीनां नीराजनं। ततः कुलाङ्गना वेश्या वा सिंहासनस्थं नृपं नीराजयेत्। ततः सेनापत्त्यादिनीराजनम्। त्रिवारमुपरि भ्रामणं नीराजनम्। इयं महाशान्तिः, फलमारोग्यदीर्घायुष्ट्वादि॥

अथ माघसितद्वादश्यां ब्राह्मोक्तं तिलद्वादशीव्रतम्। उपोषणं तिलस्नानं तिलैर्हरिपूजा। तिलतैलदीपदानम्। तिलहोमस्तिलभक्षणं चेति॥

---

अथ त्रयोदशीनिर्णयः॥ उपवासादौ शुक्लत्रयोदशी पूर्वविद्धैव ग्राह्या। 'त्रयोदशी प्रकर्त्तव्या द्वादश्या सहिता प्रभो। भूतविद्धा न कर्त्तव्येति ब्रह्मवैवर्त्तात्॥ कृष्णत्रयोदशी परविद्धा ग्राह्या। 'षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी। एताः परयुताः कार्य्याः पराः पूर्वेण संयुता' इति वचनात्। पूर्ववाक्ये शुक्ल

पदाश्रवणेपि पारिशेष्याच्छुक्लपरत्वमिति संक्षेपः॥

अथ त्रयोदशीविशेषाः। चैत्रसितत्रयोदश्यनङ्गत्रयोदशी सा च पूर्वैवोपोष्या। यदाह संवर्त्तः। 'कृष्णाष्टमी वृहत्तल्पा सावित्री वटपैत्रिकी, कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुता' इति। भविष्योत्तरे। अस्यां स्नात्वा त्रयोदश्यामकोकाख्यं नगं लिखेत्। सीद्वहूजननीरात्तैरतिप्रीतिसमन्वितम्। कामदेवं वसन्तं च वाजिवक्त्रं वृषध्वजम्। मध्यान्हे पूजयेद्भक्त्या भक्ष्यैर्गन्धैःस्रगम्बरैः। मन्त्रेणानेन कौन्तेय नवनार्य्या समन्वितः। ॐनमोमाराय कामाय कामदेवस्य मूर्त्तये। ब्रह्मविष्णुशिवेन्द्राणां नमः क्षेमकराय च। ततस्तस्याग्रतोदेया मोदका घृतपाचिताः। नानाप्रकारभक्ष्याश्च कामो मे प्रीयतामिति। स्वपतिं पूजयेन्नारी वस्त्रमाल्यानुलेपनैः। कामोयमिति सञ्चिन्त्य प्रहृष्टेनान्तरात्मना। रात्रौ जागरणं कुर्यात्सुखरात्रिर्यथा भवेत्। पूजयेद्विप्रदाम्पत्यं वस्त्रालङ्कारचन्दनैः। एवं यः कुरुते पार्थ वर्षे वर्षे महोत्सवम्। वसन्तसमये प्राप्ते हृष्टपुष्टः सदा भवेत्। कौर्म्मे—मधुशुक्लत्रयोदश्यां मदनं चन्दनात्मकम्। कृत्वा संपूज्य यत्नेन वीजयेद्व्यजनेन च। ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः॥

वैशाखसितत्रयोदश्यां विष्णुधर्म्मोत्तरोक्तं कामदेवव्रतम्। अब्दं प्रतित्रयोदशि कामपूजा। उपवासः। अन्ते वस्त्रादिदानम्। फलं सुखाद्याप्तिः॥

कार्त्तिकीयत्रयोदश्यां स्कान्दोक्तं यमदीपदानम्। 'कार्त्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे। यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति'। मन्त्रश्च—'मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह। त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम'॥ इति।

आग्रहायणे सितत्रयोदश्यामनङ्गत्रयोदशीव्रतम् भविष्यो-

त्तरोक्तम्। शिवलिङ्गपूजा उपवासः। अब्दान्ते उद्यापनं, शिवोमाप्रतिमादानम्। रूपलावण्याद्याप्तिः। पुरा दग्धेन कामेनेयं कृता। अस्यामेवारभ्य तदुक्तं यमादर्शनव्रतम्। पंचाष्टौ वा विप्रान् भोजयेत्। ताम्रपात्रच्छत्रादिकं तेभ्यो दद्यात्। उपवासो नक्तादि वा कार्य्यमब्दान्ते समाप्तिः। यमतत्किङ्करप्रीत्यर्थमिदम्। स्कान्दे। 'यदा त्रयोदशी शुक्ला मन्दवारेण संयुता। प्रारब्धव्यं व्रतं तत्र सन्तानफलसिद्धये। प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शङ्कर' इति सङ्कल्प्य प्रदोषे शिवं पूजयेत्। अब्दान्ते समापनम्। 'मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी। तस्यामुपोष्य विधिना संपूज्य गिरिजापतिं। ब्रह्महत्यादिभिः पापैर्म्मुक्तो भवति मानवः। पृथिव्यां यानि तीर्थानि सागरान्तानि यानि च। अण्डमाश्रित्य तिष्ठन्ति प्रदोषे गोवृषस्य तु। स्पृष्ट्वा तु वृषणौ तस्य शृङ्गमध्यं विलोक्य च। पुच्छं च ककुदश्चैव सर्वपापैः प्रमुच्यते'। इदमपि शिवार्च्चानन्तरम्। अथवा मन्दवारेण संयुक्तामेव त्रयोदशीं चतुर्विंशतिं कुर्वीत सोऽभीष्टं फलमाप्नुयादिति। वृषाण्डस्पर्शादि शनियुतत्रयोदश्यां प्रदोषे कार्य्यम्॥

---

अथ चतुर्द्दशीनिर्णयः। तत्र शुक्ला चतुर्द्दश्युपवासादिषु पूर्णिमायुता ग्राह्या। चतुर्द्दश्या च पूर्णिमेति युग्मवाक्यात्। बृहस्पतिः। 'एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्द्दशी। अमावास्या तृतीया च उपोष्याः स्युः परान्विताः'। तथा—शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्द्दशी। पूर्व्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता'॥ कृष्णा चतुर्द्दशी रुद्रोपवासादौ पूर्व्वविद्धा ग्राह्या। 'कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी। पूर्व्वविद्धा प्रकर्त्तव्या परविद्धा न कुत्रचित्'। तथा। 'पूर्व्वविद्धैव कर्त्तव्या

शिवरात्रिनिर्णयः शिवरात्रिर्बलेर्दिनम्। रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखीतिथिः' इतिवचनात्। यानितु। 'अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी। अमावास्या तृतीया च कर्त्तव्या परसंयुता' इत्यादिवचनानि तानि रुद्रोपवासव्यतिरिक्तविषयाणि। शैवव्रतेतु शुक्लचतुर्दश्यपि यदि पूर्वस्मिन्दिने आपराह्निकी तदा पूर्वविद्धैव ग्राह्या। स्कान्दे 'चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता विभो। मम भक्तैर्म्महाबाहो भवेद्या वापराह्निकी। दर्शविद्धा न कर्त्तव्या राकाविद्धा कदाचन' इति वचनात्। वृद्धवसिष्ठः—'एकादश्यष्टमी षष्ठी पक्षद्वयचतुर्दशी। अमावास्या तृतीया च तदुपोष्या परान्विता' इति वचनं रुद्रोपवासान्योपवासविषयम्, अन्यथा 'कामविद्धोहरः पूज्य' इति बहुवचनविरोधः स्यादिति। वस्तुतस्तु परविद्धोपवासवचनानि परविद्धैव या प्रदोषव्यापिनी चतुर्दशी तत्पराणि ग्राह्याणि। 'प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः। रात्रौ जागरणं यस्मात्तस्मात्तस्यामुपोषणम्'। प्रदोषोऽत्र चतुर्घटिकः। शिवरात्रिशब्दो विशेषः स्कान्दे। 'माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी। शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमा'। चतुर्दश्यां तु कृष्णायां फाल्गुने शिवपूजनम्' इति कृष्णादिमासाभिप्रायेण। अस्यामुपवासशिवपूजाजागरणाख्यानि त्रीण्यपि कर्म्माणि प्रधानानि। त्रयाणामपि पृथक् पृथक् श्रवणात्। नागरखण्डे। 'उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रौ तथा तस्य लिङ्गस्यापि प्रपूजनात्। अक्षयाल्लँभते लोकाञ्शिवसायुज्यमेव च'। तथा। 'माघकृष्णत्रयोदश्यां कर्त्तव्यं व्रतमुत्तममित्युपक्रम्य। 'उपोषितं वरारोहे चतुर्दश्यां वरानने। जागरश्च प्रकर्त्तव्यो गीतवादित्रनिस्स्वनैः। कर्त्तव्या यामपूजा च स्नानं पञ्चामृतेन च। कश्चित्पुण्यविशेषेण व्रतहीनोपि यः पुमान्। जागरं कुरुते तत्र स रुद्रसमतां

व्रजेदित्यादीन्यनेकमात्रविधायकानीत्युच्यते । तान्युपलक्षणपराणीति । नतु तन्मात्रविधायकानि, पृथग्विधिकल्पनागौरवादिति । अथ प्रतापमार्त्तण्डादौ इयं च तिथिर्द्वैधे पूर्वविद्धैव ग्राह्या । 'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्द्दशी । एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् । माघफाल्गुनयोर्म्मध्ये या स्याच्छिवचतुर्द्दशी । अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः ॥ तथा । 'जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते । त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः । जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्द्दशी'। यदा तूत्तरदिने प्रदोषव्यापिनी न निशीथव्यापिनी, पूर्वदिनेतु निशीथव्यापिनी न प्रदोषव्यापिनी तदा पूर्वैव ग्राह्या । 'अर्द्धरात्रात्पुरस्ताच्च जयायोगो यदा भवेत् । पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः' इति वचनात् । तथा—अर्द्धरात्रे युता यत्र माघकृष्णचतुर्द्दशी । शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् । अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्द्दशी । तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती' । दिनद्वयेपि निशीथव्यापित्वे पूर्वा ग्राह्या, बहुवाक्यैर्जयायुक्ताया विधानात् । 'महतामपि पापानां दृष्टा वै निष्कृतिः परा । न दृष्टा कुर्वतां पुंसां कुहूयुक्तां चतुर्द्दशीमिति निषेधाच्च । यदा तु प्रथमेह्नि निशीथादूर्द्ध्वं चतुर्द्दशी प्रवृत्ता तदोत्तरैव ॥ 'माघेऽसिते भूतदिनं हि राजन्नुपैति योगं यदि पञ्चदश्या । जयाप्रयुक्तां न तु जातु कुर्य्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य' इति वचनस्य तत्परत्वात् । प्रतापरुद्रादिस्वरसोऽप्येवम् । केचित्तु—प्रदोषव्यापिनी ग्राह्येत्येतदेव प्रधानीकृत्य शिवरात्रिः प्रदोषव्यापिनी ग्राह्येत्याहुः ॥ तन्न ॥ बहूनामर्द्धरात्रवाक्यानां निरवकाशानामप्रामाण्यप्रसङ्गात् । यद्वा त्रयोदशी दिनमात्रव्यापिनी तत्परतया प्रदोषवाक्यानामुदाहृतत्वादिति । एतेन शिवरात्रिर्द्विधा, शुद्धा विद्धा च । सूर्य्योदयात्सूर्य्यो-

दयपर्य्यन्ता शुद्धा सा त्वेकविधैव । विद्धा तु षड्विधा । पूर्वदिन एव प्रदोषव्यापिनी प्रथमा । द्वितीयदिन एव प्रदोषव्यापिनी द्वितीया । या प्रथमदिनेऽधिकप्रदोषव्यापिनी सा तृतीया । या च द्वितीयदिनेऽधिकप्रदोषव्यापिनी सा चतुर्थी । या चोभयत्र संपूर्णप्रदोषव्यापिनी सा पञ्चमी । या नोभयत्र प्रदोषव्यापिनी सा षष्ठी । एवं षोढा शुद्धया सह सप्तधा शिवरात्रिः । तत्र शुद्धायामविवादः । विद्धा तु प्रथमा द्वितीयाच प्रदोषगोपोष्या । 'प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैरि'त्युक्तशिवपुराणवचनात् । एतद्विषयमेव वचनम् । 'अनङ्गेन समायुक्ता कर्त्तव्या सा सदातिथिः' इति । अपरञ्च । 'त्रयोदश्यस्तगे सूर्य्ये चतसृष्वेव नाडिषु । कामविद्धे तत्र भूते शिवरात्रिव्रतं चरेत्' । पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनमित्यपि । नच—भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा । शिवरात्रिव्रतं तत्र कुर्य्याज्जागरणं तथा' इत्यनेन विरोध इति वाच्यम् । महानिशावेधो ग्राह्यः किमुत चतुर्नाडीवेध इति कैमुतिकन्यायपरत्वात्तस्येति । ननु पूर्वदिनेधिकप्रदोषव्यापिनी तृतीया यदो परै वेष्यते । तदाग्रिमदिने दिवातिथ्यन्ताभावात्पारणा न स्यादिति चेन्न । तत्र रात्रौ पारणेनैव दोषभागिति । तथा 'यामत्रयोर्द्ध्वगामिन्यां प्रातरेवहि पारणम्' । द्वितीयदिनेऽधिकप्रदोषव्यापिनी चतुर्थी परैवोपोष्या । अग्रेधिकप्रदोषञ्च या व्याप्नोति परैव सेतिवचनात् । स्मृतिसंग्रहेपि । 'शिवः परोनिशादिश्चेन्नासावन्हिभुजित्क्रियेति । उभयत्र प्रदोषव्यापिनी पञ्चमी परैवोपोष्या । एतद्विषयमेव वचनम् । माघासिते भूतदिनं हीत्यादि । तथा 'शिवरात्रिव्रते भूतं कामविद्धं विवर्ज्जयेदिति । पूर्वस्मिन्दिने चतुर्दश्याः सकलरात्रिव्यापित्वेपि तत्र नोपवासः । दिवा तिथ्यन्ताभावात् । ननु 'सात्वस्तमयपर्य्यन्तमितिन्यायोस्त्विति चेन्न । परदिनेपि प्रदोषव्यापित्वे-

नोपवासयोग्यायां पारणानौचित्यादिति । नोभयत्र प्रदोषव्यापिनी षष्ठी तु पूर्वैवोपोष्या । 'सूर्य्यास्ते नवनाडीषु भूतविद्धा त्रयोदशी । शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा' इतिब्रह्मवैवर्त्तात् । तथा च । 'त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः' इत्यस्यायमर्थः । यस्यां त्रयोदश्यामुषितायां दिवापारणयोग्यतिथ्यन्तो लभ्यते सैवोपोष्येति । एतद्विषयमेव वचनम् । 'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणम्भवेत्' इति । अत्र दिवा तिथ्यन्तसम्भवे तिथ्यन्ते पारणं तदसम्भवे दिवापि कार्य्यमित्युक्तम् । एवं यान्यन्यान्यपि पूर्वविद्धावचनानि तानि परदिनेऽस्तमयोद्ध्र्वभाविचतुर्नाड्यव्याप्तिविषयाणि दिवापारणपर्य्याप्ततिथ्यन्तसद्भावपराणि च । यानि तु परविद्धाबोधकानि तानि परदिनेऽस्तमयोर्द्ध्वभाविचतुर्नाडीव्याप्तिपराणि । दिवातिथ्यन्ताभावविषयाणि वेदितव्यानीति महाराजाधिराजबाहुवाणवंशचूडामणिडिल्लीश्वरश्रीसूर्य्यसेनमहीमहेन्द्रमतं प्रासं पूर्वलिखितम् । महाराजाधिराजजगत्पति श्रीप्रतापरुद्रमतस्य सकलशिष्टादृतत्वादिति । अनयोर्म्मतयोर्व्विवेकः सुधीभिरेव कार्य्यः । इति विरम्यते ॥

अथ चतुर्द्दशीव्रतानि । देवीपुराणे । 'मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्द्दशी । प्रोक्ता दमनपूजेति सिद्धिदा तु महोत्सवा । अत्र शिवस्य मातॄणां च महापूजाश्वमेधशताधिकेति । अत्रलैङ्गे विशेषः । 'दमनस्य त्रयोदश्यां तालवृन्तानिलेन च । हंसयानसमारूढः काममन्त्रप्रवर्द्धितः । नारीभिर्व्विजितश्चैव त्रैलोक्योन्मादमाचरेत् । तन्निर्वापणकामेन चतुर्द्दश्यां महामुने । ततोऽत्यर्थं मया प्रोक्ता नार्य्यश्चैव नरास्तथा । कुर्व्वन्ति कर्द्दमेनैव आत्मनस्त्वनुलेपनम् । निर्वापितानङ्गे पीडा भवत्वेव ममाज्ञया । एतदर्थं तदाकार्य्यं क-

र्द्दमेन च क्रीडनम् । प्रातः प्रहरमात्रं तु कर्त्तव्यं क्रीडनं नरैः । प्रक्षाल्याङ्गं तत्र कृत्वा गन्धमाल्यानुलेपनम् । ततः शिवाग्रतो नृत्यगीतवाद्यैस्सर्वसमृद्धिः फलम् । स्वयम्भुलिङ्गमेकं च दृष्ट्वा तस्मिन् दिने नरः । ज्ञानंलब्ध्वा शिवः सम्यग्रवेदे च न संशयः । मात्स्ये । 'ज्येष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम् । यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम्' । दिवापञ्चाग्निव्रतीयं च यथा प्राथम्याच्छुक्लपक्षः ॥

श्रावणसितचतुर्दश्यां देवीपुराणोक्तं पवित्रारोपणव्रतम् । त्रयोदश्यामधिवासनं पवित्राणि रात्रौ जागरणम् । प्रातश्चतुर्दश्यां स्नानबलिदानहोमदक्षिणादिं कुर्य्यात् । तस्मिन्दिने स्वर्गपरपरित्यागेन देवीपरैर्भाव्यम् । सर्वव्रतयज्ञदानादिजं फलम् । इमौ च पवित्रारोपणदमनकमहोत्सवौ रात्रियोगिन्यां चतुर्दश्यां कार्य्यौ । यदाह बौधायनः । 'मधोः श्रावणमासस्य शुक्ला या च चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णव्यापिनी' । परा चैत्रश्रावणव्यतिरिक्तचतुर्दशी ॥

अथ भाद्रसितचतुर्दश्यामनन्तव्रतं भविष्यपुराणोक्तं सोद्यापनम् । तत्र 'मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे । चतुर्दश्यामर्चयन्तं भक्त्या देवं जनार्दनम् । उपगम्य शनैः शीला पप्रच्छ स्त्रीकदम्बकम्' इतिलिङ्गान्मध्यान्हव्यापिनी ग्राह्या । माधवीयसूर्य्यसेनीयकृतस्तु । इति मासमात्रसमेतत् मन्त्रं, न विधिर्लिङ्लोट्तव्यमत्ययानामभावात् । अतो मध्यान्हे प्रारभ्यमनन्तव्रतमित्ययुक्तम् । एतस्य नक्तव्रततया प्रातरारभ्यत्वात् । 'प्रातरारभ्य मतिमान् कुर्य्यान्नक्तव्रतादिकम् । नापराह्णे न मध्याह्ने पितृकालौ हि तौ स्मृतौ' इति वचनात् । यत्तु–अनन्तव्रतस्यैकभक्तरूपत्वान्मध्याह्नव्यापिन्यां कार्य्यम्, तत्तुच्छं । एकभक्तं कुर्य्यादिति विधेरदर्शनात् ।

किञ्चानन्तपूजाङ्गत्वेन भोजनमत्र विहितं ततश्चानन्तपूजनस्यैव प्राधान्यं, तस्य च पूर्वाह्णे एव विधानमुचितम्। पूर्वाह्णो वै देवानामिति श्रुतेः। अतः स्वल्पायामप्युदयव्यापिन्यां चतुर्दश्यां पूजादिकं कार्य्यम्। कण्वः—'उपवासव्रतादीनां घटिकैकापि या भवेत्। उदये सा तिथिर्ज्ञेया विपरीता तु पैत्रिकी' इत्याद्युक्तमेवाधस्तात्। अतः पूर्णिमायुक्तायामुदयकालव्यापिन्यां द्विमुहूर्त्तायामप्यस्यां पूजादि कार्य्यम्। 'द्वित्रिर्मुहूर्त्तमह्नो या सा तिथिर्हव्यकव्ययोः' इत्युक्तेरिति जल्पन्ति, तच्चिन्त्यम्। अर्थवादेन विध्युन्नयनसम्भवात्। अन्यथा स्वतन्त्रार्थवादस्याप्रामाण्यमेव स्यात्। नच पूर्वाह्णपूजायां क्रियमाणायां मध्याह्नपर्य्यन्तं भूतमित्यादिरर्थः। कल्पनागौरवात्। यथाश्रुतपरित्यागे बीजाभावादिति। 'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति माधवीयादिग्रंथोपक्रमे लिखनाच्चेति न काप्यनुपपत्तिरिति। शेषः कथायामनुसन्धेयः॥

अथ कार्त्तिककृष्णचतुर्दशी प्रेतचतुर्दशी। तस्यामुषस्यभ्यङ्गं कृत्वा यमतर्प्पणादिकम् माषपत्रभोजनं शैवतापसपूजनं दीपदानादिकं च कुर्य्यात्। भविष्योत्तरे 'कार्त्तिके कृष्णपक्षे तु चतुर्दश्यान्दिनोदये। अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः'। तथा—पूर्वविद्धचतुर्दश्यां कार्त्तिकस्य सितेतरे। पक्षे प्रत्यूषसमये स्नानं कुर्य्यात्प्रयत्नतः'। ब्राह्मे—तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशीम्। प्रातः स्नानं तु यः कुर्य्याद्यमलोकं न पश्यति। अपामार्गमथो तुम्बीं पुन्नाडमथ चापरम्। भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय तु। पुन्नाडश्चक्रमर्द्दकः। 'अपामार्गस्य पत्राणि सकण्टकदलानि च। सीतालोष्टसंयुतानि भ्रामयेन्मस्तकोपरि'। मन्त्रस्तु। 'सीतालोष्टसमायुक्त सकण्टकदलान्वित। हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः'। यमस्य चतुर्दशनामभिस्तर्प्पणं तु सव्ये-

नापसव्येन वा कार्य्यम्। स्कान्दे। 'दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः। देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो यतः'॥ तथा- 'यज्ञोपवीतिना कार्य्यं प्राचीनावीतिनाथवा। देवत्वं च पितृत्त्वं च यमस्य स्याद्विरूपतेति॥ 'ततः प्रदोषसमये दीपान्दत्वा मनोरमान्। ब्रह्मविष्णुशिवादीनां मठेषु भवनेषु च॥ प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च॥ मन्दरासु विविक्तासु हस्तिशालासु चैव हि। लैङ्गे—ततः प्रेतचतुर्द्दश्यां भोजयित्वा तपोधनान्। शैवान्विप्राँस्त्वथ परान् शिवलोके महीयते॥ दानन्दत्वा तु तेभ्यश्च यमलोकं न पश्यति। माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः॥ प्रेत चतुर्द्दशीकाले सर्वपापैः प्रमुच्यते। नक्तं शिवचतुर्द्दश्यां कुर्य्याच्छिवचतुष्टयं। ततः क्रतुशतेनापि प्राप्यते पुण्यमीदृशम्॥ कुमारीवटुकान्पूज्य तथा शैवाँस्तपोधनान्। राजसूयफलन्तेन प्राप्यते नात्र संशयः॥ इयं भौमयुक्ता चित्राख्या। पुष्करपुराणे 'कार्तिके भौमवारेण चित्रा कृष्णचतुर्द्दशी। तस्यां भूतं समभ्यर्च्य गच्छेच्छिवपुरन्नरः'॥

कार्त्तिके सितचतुर्द्दशी पाषाणचतुर्द्दशी। तदुक्तं देवीपुराणे। 'कार्तिके शुक्लपक्षे तु या पाषाणचतुर्द्दशी। तस्यामाराधयन् गौरीं नक्तं पाषाणभक्षणम्। ऐश्वर्य्यसौख्यसौभाग्यरूपाणि प्राप्नुयान्नरः॥ अस्यामेव भविष्यपुराणोक्तं ब्रह्मकूर्चव्रतम्। 'कार्तिकस्यासिते पक्षे चतुर्द्दश्यां नराधिकम्। सोपवासं पञ्चगव्यं पिबेद्रात्रौ जितेन्द्रियः॥ कपिलायास्तु गोमूत्रं कृष्णाया गोमयं तथा। श्वेतधेनोस्तथाक्षीरं कपिलायास्तथा दधि॥ गृहीत्वा कर्बुरायाश्च घृतमेकत्र धारयेत्। वेदोक्तमन्त्रै राजेन्द्र कुशोदकसमन्वितम्। ततः प्रभातसमये स्नात्वा सन्तर्प्य देवताः। ब्राह्मणं तर्प्पयित्वा तु भुञ्जीयाद्वाग्यतः शुचिः। ब्रह्मकूर्चव्रतं ह्येतत्सर्वपापप्रणाशनम्॥

अथ मार्ग्गसितचतुर्द्दश्यां मात्स्योक्तं शिवव्रतम् । उपवासः आब्दिकं व्रतम् । स्वर्णवृषभदानमिति । ब्राह्मे—'माघशुक्लचतुर्द्दश्यां विष्णोर्देहान्मरीचयः। निश्चेरुस्तिलकाकाराः शतशोऽथ सहस्रशः। अनर्क्काभ्युदिते काले सत्सु तारांशुकेष्वपि। राजा च तत्र संपूज्यो यमः मलयभास्करः। सर्वाङ्गसान्धिसम्भूता नद्यो विष्णोश्च तत्र वै। अरुणोदयवेलायामारटन्तीह नित्यशः । नियुक्ता विष्णुना सर्वाः कस्य पापं पुनीमहे। तत्रोपोष्य त्रयोदश्यां संप्राप्ते तु निशाक्षये। स्नात्वा पूज्यो जगद्धर्त्ता विरिश्चिश्चन्द्रशेखरः। हरिः पूज्यश्च भगवान्घृताक्तैस्तिलतण्डुलैः ॥ नमःप्रणवसंयुक्तान्सतिलाँश्च जलाञ्जलीन् । यमाय वितरेत्सप्त धर्म्मराजाय सप्त च। मृत्यवे सप्त देयाश्च तथा सप्तान्तकाय च ॥ वैवस्वताय सप्तैव सप्त कालाय चैव हि। सप्त देयाश्च विधिवत्सर्वप्राणहराय च। कृशरं भोजनीयाश्च ब्राह्मणास्तदनन्तरम् ॥ श्राद्धं दत्वा पितृभ्यश्च विमुक्तः सर्वपातकैः। ततो विभज्य बन्धुभ्यः कृशरं भक्षयेत्स्वयम्। इत्यारटन्ती चतुर्द्दशी ॥

अथ शिवरात्रिः । सा च निर्णीतैव यद्यपि तथापि कश्चिद्विशेषः प्रदर्श्यते । 'माघकृष्णचतुर्द्दश्यां रविवारो यदा भवेत् । भौमो वापि भवेद्देवि तद्धि सर्वव्रतोत्तमम् । त्रयोदशी कलाप्येका मध्येचैव चतुर्द्दशी। अन्ते चैव सिनीवाली त्रिस्पृशां शिवमर्च्चयेत् ॥ स्कान्दे । 'उपोषणं चतुर्द्दश्यां चतुर्द्दश्यां च पारणम्। कृतैः सुकृतलक्षैश्च लभ्यते वा न लभ्यते। ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथा ह्यहम् ॥ सिक्थे सिक्थे फलं तस्य वक्तुं शक्तो न पार्वति। ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै। संस्थितानि भवन्तीह भूतायां पारणे कृते' ॥ हेमाद्रिस्तु तिथ्यन्त एवार्द्धरात्रेपि पारणं कार्य्यमित्याह ॥ इदं च व्रतं नित्यम्। स्कान्दे। 'वर्षे वर्षे महादेवि नरो नारी पतिव्रता। शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत्। प-

रात्परतरं नास्ति शिवरात्रिव्रतात्परम् ॥ न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् । जन्तुर्जन्मसहस्राणि संभ्रमेन्नात्र संशयः ॥ अर्णवो यदि वा शुष्येत् क्षीयते हिमवानपि । मेरुमन्दरलङ्काश्च श्रीशैलो विंध्य एव च । चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतम् ॥ तथा। 'माघकृष्णचतुर्दश्यां यः शिवं शंसितव्रतः । मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम्' । निश्चलं सदाकर्त्तव्यमपीत्यर्थः । काम्यमपीदम् । 'शङ्करं पूजयित्वा तु यो जागर्त्ति चतुर्दशीम् । मातुः पयोधररसं न पिबेत्स कदाचन ॥ मम भक्तस्तु यो देवि शिवरात्रिमुपोषितः । गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् । सर्वान्भुक्त्वा महाभोगांस्ततो मोक्षमवाप्नुयात्' इति फलश्रवणात् । किञ्च । 'शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् । आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम्' । प्रतिमासं कृष्णचतुर्दश्यां विहितं शिवरात्रिव्रतम् । तदुक्तम् । आदौ मार्ग्गशिरोमासि दीपोत्सवदिनेऽपि वा । गृह्णीयान्माघमासादौ द्वादशैवमुपोषयेत् । द्वादशस्वपि मासेषु प्रकुर्य्यादिहजागरम् । हेमाद्रिस्तु प्रतिमासशिवरात्रिव्रतेषु बहुरात्रियुक्ता ग्राह्या, समानरात्रियोगे पूर्वेत्युक्तत्वात् । तथा च संग्रहः । 'माघेतरा सितचतुर्दश्यास्तु रात्रिद्वयेप्यस्तित्वे बहुरात्रियुक्शुभतरा साम्येतु पूर्वास्मृतेति ॥

अथ स्कान्दोक्तं शिवरात्रिव्रतम् । 'अतस्तस्यां त्रयोदश्यां कृष्णायामेकभुङ्नरः । मन्त्रेणानेन गृह्णीयान्नियमं भक्तिमानिह । शिवरात्रिव्रतं ह्येतत्करिष्येहं महाफलम् । निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते । रात्रिं प्रपद्ये जननीमृग्भ्याञ्चैव समाहितः' । ऋग्वेदे प्रसिद्धावेतौ मन्त्रौ । ततः प्रातर्न्नित्यं विधाय चतुर्थप्रहरे गायत्र्या कृष्णतिलस्नानम् जलाशये गृहे वा । प्रदोषे शिवालयं गत्वा पूजामारभेत् । तत्र स्नपनम् । शिवनामभिः पञ्चोपचारपूजा

नृत्यगीतवादित्रादि । एवं द्वितीयादिप्रहरपूजाः कार्य्याः । 'एवं भ-क्तियुक्तस्तु जागरं कारयेन्निशि । सकलं फलमाप्नोति सत्यमे-तद्वरानने । उषःस्नानं जपोहोमो भोजयेच्छिववत्सलान् । श्वेता-न्कुम्भान्प्रदद्याच्च यथाशक्ति च दक्षिणाम्' । प्रतिमासिकशिवरा-त्रिव्रते तु । 'एवं द्वादशवर्षाणि द्वादशैव तपोधनान्' । वरयेदिति शेषः । स्थावरं जङ्गमं वा लिङ्गं संपूज्य पञ्चामृतस्नपनम् । सहस्रक-लश स्नपनम् । लड्डुकशय्याद्युपकल्पनम् । होमब्राह्मणभोजनदक्षि-णादानादि ॥

---

अथ पञ्चदशी निर्णेतव्या सा च द्विविधा शुक्ला कृष्णा च । शुक्ला पौर्णमासी कृष्णा त्वमावास्या । तत्र शुक्लपक्षप्राथम्यात्प्रथ-मोपस्थिततया प्रथमं पौर्णमासी निर्णीयते । नच वाच्यं सकललो-कप्रसिद्धतया कृष्णपक्षस्य प्राथम्यमिति । सकलश्रुतिस्मृतिप्रसि-द्धतया शुक्लपक्षस्य प्राथम्यादिति । तथा चामरसिंहोपि 'पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ' । इति । स्मृतिवचनानि बहूनि तत्प्रा-थम्यबोधकानीति ॥

अथ पूर्णिमानिर्णयः । सा च सावित्रीव्रतातिरिक्तव्रतादिषु परा-न्वितैवोपोष्या । यदुक्तम् । 'एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः' । ब्रह्मवैवर्त्तके । 'भूतविद्धे न कर्त्तव्ये दर्शपूर्णे कदाचन । वर्जयित्वा मुनि-श्रेष्ठ सावित्रीव्रतमुत्तमम्' । सावित्रीव्रतं च भाद्रपूर्णिमायां वक्ष्यते । एतेन सावित्रीव्रते पूर्णिमा पूर्वविद्धैव ग्राह्येति गम्यते । युग्मवच-नमपि तत्परमेव । तदुक्तं ब्रह्मवैवर्त्ते । 'प्रतिपत्पञ्चमी भूतसावित्री वटपूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः' । एतत्परमेव ब्राह्मवचनम् । 'षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी । पू-

र्णिमा परविद्धा च नोपोष्यं तिथिपञ्चकमिति ॥

अथ पूर्णिमाव्रतानि ॥ तत्र चैत्रपूर्णिमायामिन्द्रपूजा । यदाह देवीपुराणे चैत्रविधिप्रकरणे । 'पौर्णमास्यां तथा कुर्य्यात् सर्वकामसमृद्धये । इन्द्राय सर्वसाध्याय कामिकं लभते फलम् । विष्णुः । 'चैत्री चित्रायुता चेत्स्यात्तस्यां चित्रवस्त्रदानेन सौभाग्यमाप्नोति' । ब्राह्मे । 'मन्दे वार्के गुरौ वारे पैत्र्येष्वेतेषु चैत्रिकी । तत्राश्वमेधिकं पुण्यं स्नानेन लभते नरः । दानमक्षय्यतां याति पितॄणां तर्प्पणं तथा' । लैङ्गे । 'चैत्रे मासि सिते पक्षे पञ्चदश्यां यथाविधि । दमनेनार्च्चयेद्देवानष्टमीभूतयोस्तथा' । वायवीये । 'सम्वँत्सरकृतार्च्चाया साफल्यायाखिलान्सुरान् । दमनेनार्च्चयेच्चैत्र्यां विशेषेण सदाशिवम्' ॥

अथ वैशाखी । यमगाथासु । 'यस्तु कृष्णाजिनं दद्यात्सखुरं शृङ्गसंयुतम् । तिलैः प्रच्छाद्य वासोभिः सर्ववस्त्रैरलंकृतम् । वैशाख्यां पौर्णमास्यां तु विशाखासु विशेषतः । ससमुद्रगुहा तेन सशैलवनकानना । सप्तद्वीपान्विता दत्ता पृथिवी नात्रसंशयः' । विष्णुः । 'कृष्णाजिनं तिलान् कृष्णान् हिरण्यं मधुसर्प्पिषी । ददाति यस्तु विप्राय सर्वन्तरति दुष्कृतम्' । आदित्यपुराणोक्तो वैशाखीविधिः । तिलैः स्नानहोमौ । तिलमोदकादिदानम् । सप्तजन्माघक्षयः । भविष्योत्तरे । 'वैशाखी कार्त्तिकी माघी तिथयोऽतीव पूजिताः । स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन । कुम्भान् स्वच्छजलैः पूर्णान्हिरण्यान्नसमन्वितान् । वैशाख्यां ब्राह्मणे दत्वा न शोचति कृताकृतैः' ॥

अथ ज्यैष्ठी । आदित्यपुराणे । 'ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशेषतः । अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः' । विष्णुः । 'ज्यैष्ठी ज्येष्ठायुता चेत्स्यात्तस्यां छत्रोपान-

त्प्रदानेन नरो नराधिपत्यमाप्नोति' ॥

अथाषाढी। आषाढप्रकरणे। 'चतुर्द्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिम्'। विष्णुः। 'आषाढ्यामाषाढयुतायामन्नपानादिदानेनाक्षयं फलमाप्नोति' ॥

अथ श्रावणी। ब्राह्मे। 'श्रावण्यां श्रवणे चैव पूर्वं हयशिरा हरिः। जगाद वेदं सामाख्यं सर्वकिल्बिषनाशनम्'। सिन्धवितस्तासङ्गमस्नानं, हरिपूजा, सामश्रवणं, जलक्रीडा। अथ श्रावण्यां भविष्योत्तरोक्तो रक्षाबन्धनविधिः। 'इन्द्राण्या इन्द्रस्य रक्षाबन्धः कृतः। तत्प्रभावादिन्द्रेण दानवाः सर्वेऽपि जिताः। 'संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः। ततो देवान्पितॄंश्चैव तर्प्पयेत्परमाम्भसा। उपाकर्म्मादिकं प्रोक्तमृषीणां चैवतर्प्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते। ततोपराह्णसमये रक्षापोटलिकां शुभाम्। कारयेच्चाक्षतैस्तत्र सिद्धार्थैर्हेमचर्च्चिताम्। विचित्रतन्तुग्रथितां स्थापयेद्राजनोपरि। कार्य्या गृहस्य रक्षा गोमयरचितैः सवृत्तकुण्डलिकैः। दूर्वावर्णकसहितैर्भित्तौ दुरितोपशमनाय। उपलिप्ते गृहमध्ये दत्तचतुष्के न्यसेत्कुम्भान्। पीठान्तरे च निवसेद्राजामात्यैः समौहूर्त्तैः। वेश्याजनेन सहितो मङ्गलसहितैः समुत्थितैश्चिन्हैः। रक्षाबन्धः कार्य्यः प्रशान्तिदः सर्वविघ्नानाम्। तदनुपुरोधा नृपते रक्षां बध्नीत मन्त्रेण। मन्त्रः। 'येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वां प्रतिबध्नामि रक्षे माचल माचल'। ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः। कर्त्तव्यो रक्षिकाबन्धो द्विजान्सम्पूज्य भक्तितः। अनेन विधिना यस्तु रक्षिकाबन्धमाचरेत्। स सर्वदोषरहितः सुखी सव्वँत्सरं भवेत्। यः श्रावणे विमलमासि विधानविज्ञो रक्षाविधानमिदमाचरते मनुष्यः।

आस्ते सुखेन परमेण स वर्षमेकं पुत्रप्रपौत्रसहितः ससुहृज्जनः स्यात्’ । अथ च रक्षाबन्धो भद्रायां निषिद्धः ॥ ‘भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामन्दहति फाल्गुनी’ इति वचनात् ॥ श्रावणी रक्षिकाबन्धरूपा क्रिया न तूपाकर्म्म । ‘श्रावण्याम् श्रावणीकर्म्म यथाविधि समाचरेत् । उपाकर्म्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे’ । इति निगमवचनेनोपाकर्म्मणः पृथगुपादानात् ॥

अथोपाकर्म्मनिर्णयः । याज्ञवल्क्यः । ‘अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा । हस्तेनौषधिभावेन पञ्चम्यां श्रावणस्य तु’ । अध्यायानामिति शाखाभिप्रायेण बहुवचनम् । गोभिलः ‘पर्वण्यौदयिके कुर्य्युः श्रावण्यां तैत्तिरीयकाः’ । तैत्तिरीयका इत्युपलक्षणं यजुर्वेदिन इत्यर्थः । बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः ॥ गार्ग्यः ॥ ‘पर्वण्यौदयिके कुर्य्युः श्रावणे तैत्तिरीयकाः । बह्वृचाः श्रवणर्क्षे तु ग्रहसंक्रान्तिवर्जिते’ । औदयिके उदयकालव्यापिनि । तथा । ‘श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । पीतमासान्विप्रो(?) अर्द्धपञ्चमान्मासान्सार्द्धचतुरोमासान् । अत्रैवं व्यवस्था । बह्वृचैः श्रवणर्क्षे, यजुर्वेदिभिः श्रावण्यां पूर्वाह्णे, छन्दोगैस्तु सिंहस्थेऽर्के हस्तर्क्षेऽपराह्णे कर्त्तव्यमुपाकर्म्मेति । स्मृत्यन्तरे । ‘उपाकर्म्म प्रकुर्वन्ति क्रमात्सामर्ग्यजुर्विदः । ग्रहसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु । संक्रान्तौ ग्रहणे चैव सूतके मृतके तथा । गयास्नानं प्रकुर्वीत नारदस्य वचो यथा । अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रिया । दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन्द्विजातयः ॥ स्मृतिमहार्णवे । ‘संक्रान्तिर्ग्रहणं चापि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः’ । तथा । ‘यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितं ।

स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु'। वाजसनेयिभिरिति वचनात् तदन्ये यजुःशाखिनः प्रौष्ठपद्यामुपाकुर्युः। श्रावण्यां प्रौष्ठपद्यामिति वचनात् । अत्रायं पर्यवसितार्थः, यजुःशाखाध्यायिनः श्रावण्यां उदयकालव्यापिन्यां साचेद् दुष्टा तदा प्रौष्ठपद्यां व्रीह्योषधिप्रादुर्भावे सत्युपाकुर्य्युः। बह्वृचस्तु श्रावणमासस्य श्रवणनक्षत्रे धनिष्ठायुक्ते। सामगाः श्रावणस्य हस्तयुतपञ्चम्यां चेति। ग्रहणादिदोषाभाव ओषधिप्रादुर्भावश्च सर्वेषां समान इति। पौर्णमास्यां तूदयकालव्यापिन्यां एवोपाकार्य्यं 'पर्वण्यौदयिके कुर्य्युर्ग्रहसंक्रान्तिवर्ज्जिते' इति गोभिलवचनात् । चतुर्दशीवेधनिषेधमाह कालिकापुराणे। 'चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ। वेदान् स्वीकुर्वतः पद्मयोनेस्तौ जह्रतुः श्रुतीः । ततो भूतयुते तस्मिन्नोपाकरणमिष्यते'। तेन श्रावणी दुर्गनवमीत्यादिना श्रावण्यां पूर्वविद्धाविधानमुपाकर्म्माङ्गभूताभ्युदयिकपरं श्रावण्यां विधीयमानहिरण्यगर्भपवित्रारोपणपरं वा। व्यासः। 'श्रवणेन तु यत्कर्म्म उत्तराषाढसंयुतम् । संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति। धनिष्ठासंयुतं कुर्य्याच्छ्रावणीकर्म्म यद्भवेत् । तत्कर्म्म सफलं विद्यादुपाकरणसंज्ञितम्'। बह्वृचगृह्यकारिका । 'अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा भाद्रपदे मासि श्रवणेन तदिष्यते' । गोभिलः । प्रौष्ठपदीं हस्तेनोपाकरणम्। प्रौष्ठपदीं प्राप्येत्यर्थः। बौधायनः। 'श्रावण्यां प्रौष्ठपद्यामाषाढ्यां वोपाकृत्य छन्दांस्यधीयीत'। प्रौष्ठपद्यामपि सदोषायामाषाढ्यां कुर्य्यादित्यर्थः। कालवृद्धौ तूपाकर्म्मणोप्युत्कर्षः। तदाह कात्यायनः। 'उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि। अभिषेकादिवृद्धीनान्तु तूत्कर्षो युगादिषु।न च 'दसहरासुनोत्कर्षश्चतुर्ष्वपि युगादिषु।उपाकर्म्म महाषष्ठ्योर्ह्येतदुक्तं वृषादित' इति ऋष्यशृङ्गवचनेन विरोध

इति वाच्यम्। तस्य छन्दोगपरत्वाच्छन्दोगानां वृद्धावपि सिंहार्क्के एवोपाकर्म्म। यदाह गार्ग्यः। 'सिंहे रवौ च पुष्येर्क्के पूर्वाह्ने ऽविवरे बहिः। छन्दोगा मिलिताः कुर्य्युरुत्सर्ग्गं स्वस्वछन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकम्'। अविवरे ग्रहादिदोषरहिते। पूर्वाह्ने उत्सर्जनम्, आपराह्णिकमुपाकर्म्मेत्यन्वयः। ननु 'त्रयोदश्यादितो वर्ज्ज्यं दिनानां नवकं ध्रुवम्। मङ्गलेषु समस्तेषु ग्रहणे शशिसूर्य्ययोः'। तथा 'द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः। एकादश्यादिकः सौरश्चतुर्थ्यन्तः प्रकीर्त्तितः। खण्डग्रहे ततः प्रोक्तमुभयत्र दिनत्रयम्'। इत्यादि ग्रहवेधदोषे सति पर्वणि ग्रहणे सत्यपि चतुर्द्दश्यामपि श्रवणर्क्षे चोपाकर्म्म त्याज्यं स्यादिति चेन्न। उभा कर्म्मणि वेधदोषाभावात्। 'नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च। उपाकर्मणि चोत्सर्ग्गे ग्रहवेधो न विद्यत' इति वचनात्। विशेषमाह गार्ग्यः 'अर्द्धरात्रादधस्ताच्च संक्रान्तिर्ग्रहणं तथा। उपाकर्म्म न कुर्वीत परतश्चेन्न दोषभाक्'॥ तथा। यद्यर्द्धरात्रादर्वाक्तु ग्रहःसंक्रम एव च। नोपाकर्म्म तदा कुर्याच्छ्रावण्यां श्रवणेपि तु'। अथात्र कर्त्तव्यमुच्यते कार्ष्णाजिनिः। 'उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्प्पयेत्ततः'। वृहत्प्रचेताः 'भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्न एव तु। ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः॥ बौधायनः। 'गौतमादीनृषीन्सप्त कृत्वा दर्भमयान् पुनः। पूजयित्वा यथाशक्ति तर्प्पयेदृचमुद्धरेत्'। गौतमादीनिति स्वस्वशाखोक्तर्षीणामुपलक्षकम्। ऋचं वेदम्। भविष्योत्तरे। 'उपाकर्म्मादि चेहोक्तमृषीणां चैव तर्प्पणम्। कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य शक्तितः'। औदयिकं पर्व षण्मुहूर्त्तपरिमितं ग्राह्यम्। निगमे। 'श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्त्तकैः। विद्धा स्याच्छन्दसां तत्र कुर्य्यादुत्सर्जनं तथा' इति॥

अथोत्सर्ज्जनम्। याज्ञवल्क्यः। 'पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्य्यादुत्सर्ग्गं विधिवद्बहिः'। मनुः। 'पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्ज्जनं द्विजः। माघशुक्लस्य वा मासे पूर्वाह्ले प्रथमेऽहनि'। माघशुक्लस्येति भाद्रपूर्णिमोपाकर्म्मविषयम्। तदैव सार्द्धचतुर्मासत्वसंभवात्। हारीतः—'अर्द्धपञ्चमान् मासानधीत्योर्द्ध्वमुत्सृजति पञ्चार्द्धषष्ठान्वेति। अत्रार्द्धषष्ठानिति आषाढीकृतोपाकर्म्मपरं। खादिरगृह्ये 'पुष्ये तूत्सर्ज्जनं कुर्य्यादुपाकर्म्मदिने ऽथवा। कात्यायनः। 'प्रसब्दं यदुपाकर्म्म सोत्सर्ग्गं विधिवद्द्विजैः। क्रियते छन्दसां तेन पुनराप्यायनं भवेत्। अजातयामैश्छन्दोभिर्यत्कर्म्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम्'इति।

भाद्रपौर्णमास्यां सावित्रीव्रतं भविष्योत्तरे। 'त्रयोदश्यां भाद्रपदे दन्तधावनपूर्वकं। त्रिरात्रनियमं कुर्य्यादुपवासस्य भारत। अशक्ता तु त्रयोदश्यां नक्तं कुर्य्याज्जितेन्द्रिया। अयाचितं चतुर्द्दश्यामुपवासेन पूर्णिमाम्' इत्यादि। विधिस्तु वटसावित्र्यामपि वक्ष्यते। अत्रैव लोकपालानर्चयेत्। ब्राह्मे। 'पूर्वभाद्रपदा योगे पौर्णमास्यां पितामह। शक्राग्नियमयात्वम्भोवायुवित्तेशशङ्करान्। लोकपालांस्तु रक्षार्थं त्रैलोक्यस्याभिषेचयेत्। पृथिव्या धारणार्थाय तथानन्तं च भोगिनम्। तस्मात्तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम्। कर्णिकायां लिखेत्तत्र सानन्तं कमलोद्भवम्। प्राच्यादिषु च पत्रेषु वासवाद्यांश्च सायुधान्। ततः क्रमेण तेनैव संस्थाप्य कलशान् शुभान्। पश्चात्संपूजनीयास्तु भक्त्या ब्रह्मादयः सुराः'॥

भाद्रपूर्णिमायां लोकपालार्चा

अथाश्विनपूर्णिमाकृत्यम्॥ 'आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात्। आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम्।

तस्मात्तत्र नरैः मार्गः स्वगेहस्य समीपतः। शोधितव्यः प्रयत्नेन भूषितव्यश्च मण्डनैः। वेश्मानि भूषितव्यानि नानारङ्गैर्विशेषवत्। सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः। दिवा तत्र न भोक्तव्यं मानुषैश्च विवेकिभिः। स्त्रीवृद्धमूर्खबालैश्च भोक्तव्यं पूजितैः सुरैः। पूज्याश्च सफलैः पत्रैस्तत्र द्वारेऽर्द्धभित्तयः। गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः। उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः। पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः॥ ततः पूज्यो निकुम्भश्च समासैस्तिलतण्डुलैः। सुगन्धिभिर्घृतोपेतैः कासराक्षैः सुधूपितैः। कासराक्षो महिषाक्षगुग्गुलुः। 'ब्राह्मणान्भोजयित्वा तु भोक्तव्यं मांसवर्ज्जितम्'। रुद्रगौरीस्कन्दनन्दीश्वरा अपि पूज्याः॥ अस्यामेव कोजागरव्रतम्। स्कान्दे। 'पूर्णिमाश्वयुजे मासि कौमुदी परिकीर्त्तिता। तत्राराध्य महालक्ष्मीमिन्द्रश्चैरावतस्थितम्। उपवासं प्रकुर्वीत दीपान्दद्याच्च भक्तितः। रात्रौ जागरणं कुर्य्यान्नृत्यगीतपुरःसरम्। निशीथे वरदा लक्ष्मीः कोजागर्त्तीति भाषिणी। जगत्प्रभ्रमते तस्यां लोकचेष्टावलोकिनी। नालिकेरोदकं पीत्वा अक्षक्रीडां समारभेत्। तस्मै वित्तं प्रयच्छामि कोजागर्त्ति महीतले'। ततः प्रातरिन्द्रं संपूज्य पायसेन ब्राह्मणान्भोजयेत्। ततः पारणं, स्वर्ग्गाद्यावाप्तिः फलम्। निर्णयामृते तु कोजागरव्रते विशेषः। स्कान्दे नन्दिकेश्वर उवाच। 'स्वामिन्नहं पराधीनः शम्भोः सेवापरायणः। नावकाशोऽस्ति मे कर्त्तुं व्रतानि नियमास्तथा। तन्ममैव समाचक्ष्व व्रतं व्रतविशारद। येनचीर्णेन भगवन्प्राप्यते सुमहत्फलम्॥ स्कन्द उवाच। अस्ति कोजागरं नाम व्रतानां व्रतमुत्तमम्। यत्कृत्वा समवाप्नोति जन्तुर्लोकाननुत्तमान्। नित्यमाश्वयुजे मासि पूर्णिमायां गणेश्वर। ऐरावतसमारूढः शक्रो लोकानुकम्पया॥ परिभ्रमति लोकाँस्त्रीन्पश्य भक्तव-

कोजागरव्रतविधिः

रमदः। को जागरविधानेन मामाराधयतीत्युत। तन्मे कोजागरन्नाम व्रतं लोकेषु विश्रुतम्॥ विधानं तस्य वक्ष्यामि शृणुष्वेकाग्रमानसः। महालक्ष्मीपूजा, शक्रपूजा उपवासः। लक्षं तदर्द्धमयुतं सहस्रं शतमेव वा, दीपान्पुरवीथीचैत्यदेवायतनारामगृहेषु दद्याद्यथाविभवं घृतेन तिलतैलेन वा,प्रातः क्षीरघृतशर्करपायसैर्वासोभिर्दक्षिणाभिश्च द्विजपूजा,स्वर्णदीपदानम्, ततः पारणम्। 'व्रतस्यास्य विधानेन कल्पान्वै दीपसंख्यया। अप्सरोभिः परिवृतः सूर्य्यलोके महीयते। इह चायुष्यमारोग्यं पुत्रपौत्रादिसंपदः। भवन्ति व्रत माहात्म्यात्कुलश्रैष्ठ्यङ्गणेश्वरोति। विष्णुः। अस्यामेवाश्वयुज्यां अश्विनीगतेन चन्द्रमसा घृतपूर्णभाजनं सुवर्णयुतं विप्राय दत्वा दीप्ताग्निर्भवति॥

अथ कार्त्तिकी। ब्राह्मे। 'कार्त्तिक्यां पौर्णमास्यां तु पूज्यो दामोदरः सदा। ततश्चन्द्रोदये पूज्यास्तापस्यः कृत्तिकासु षट्॥ कार्त्तिकेयस्तथा खड्गो वरुणश्च हुताशनः। धान्यैः सशूकैर्द्वारोर्द्ध्व भूषितव्यं निशागमे। माल्यैर्धूपैस्तथा गन्धैर्भक्ष्यैरुच्चावचैस्तथा। परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्प्पणैः। एवं देवास्तु संपूज्या दीपोदेयो गृहाद्बहिः। दीपोपान्ते तथा गर्त्तश्चतुरस्रो मनोहरः। प्रक्षेप्तव्यं तत्र दुग्धं नमोस्तु हरये पठन्। ब्राह्मणायाथ योग्याय दद्यात्तं क्षीरसागरम्। अस्यामेव काम्यवृषोत्सर्ग्गः। भविष्योत्तरे।

कार्त्तिक्यां वृषोत्सर्गः 'कार्त्तिक्यां तु वृषोत्सर्ग्गो विवाहः पुण्यलक्षणः। कार्य्यः कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा। गजाश्वरथदानं च घृतधेन्वादयस्तथा। प्रदेयाः पुण्यकृद्भिश्च तास्ताः सङ्कल्प्य देवताः'। मात्स्ये। 'कार्त्तिक्यां तु वृषोत्सर्ग्गं कृत्वा नक्तं समाचरेत्। शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम्'। अस्यामेव ब्राह्मे नीलवृषभदानमुक्तम्। 'नीलं च वृषभं दद्याच्चतुर्वत्सतरीयुतं। सुवाससं ब्राह्म-

णाय महाकान्ताररतारणम् । यावन्ति तस्य रोमाणि शरीरे सन्ति संख्यया । तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः । पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः । भोक्तव्यं गोरसप्रायं स्वप्तव्यं स्थण्डिले ततः' । भरण्यादिनक्षत्रत्रययोगान्महत्वमस्याः । ब्राह्मे । 'आग्नेयं तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित् । महती सा हि विज्ञेया स्नानदानेषु चोत्तमा । यदा याम्यं तु भवति ऋक्षं तस्यान्तिथौ क्वचित् । तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता । प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप । सा महाकार्त्तिकी पुण्या देवानामपि दुर्ल्लभा॥पाद्मे 'विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः । स योगः पद्मको नाम पुष्करेष्वतिदुर्ल्लभः' । इयं मन्वन्तरादिरपि । आषाढीकार्त्तिकीतद्वदितिवचनात् ॥

अथैकादशीमारभ्य कार्त्तिकीपर्य्यन्तं भीष्मपञ्चकव्रतम् । भविष्योत्तरे । 'कार्त्तिके शुक्लपक्षस्य शृणु धर्म्मं पुरातनम् । एकादश्यां समारभ्य विज्ञेयं भीष्मपञ्चकम्' । देवीपुराणे । 'यदेतदचलं पुण्यं व्रतानां व्रतमुत्तमम् । कर्त्तव्यं कार्त्तिके मासि प्रयत्नाद्भीष्मपञ्चकम् । भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् । सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम्' । तत्रैकादश्यां स्नानादिकं विधाय व्रतग्रहणं, हरिपूजा नानाविधोपचारैः । पञ्चदिनान्यखण्डदीपदानम् । वासुदेवाष्टाक्षरजपः । तिलव्रीहियवहोमः । अयं च विधिः पञ्चस्वपि दिनेषु । विशेषस्तु । 'प्रथमेह्नि हरेः पादौ पूजयेत्कमलैर्नरः । द्वितीये बिल्वपत्रेण जानुदेशं समर्च्चयेत् । पूजयेच्च तृतीयेह्नि नाभिं शृङ्गारकेण तु । वाणबिल्वजपाभिश्च ततस्कन्धौ समर्च्चयेत् । ततोऽनुपूजयेच्छीर्षं मालत्या चक्रपाणिनः । त्रिःप्राश्य गोमयं सम्यगेकादश्यामुपावसेत् । गोमूत्रं मन्त्रवद्भूयो द्वादश्यां प्राशयेद्व्रती । क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा द-

धि । पञ्चमे दिवसे स्नात्वा विधिवत्पूज्य केशवम् । भोजयेद्ब्राह्मणान्भक्त्या ततो दद्याच्च दक्षिणाम् । स्वयं नक्तं समश्नीयात्पञ्चगव्यपुरस्सरम् । यावज्जीवव्रतम् । हरिप्रतिमादानेन सर्वपापक्षयः ॥

अथाग्रहायणी । तस्यां विविधोपचारैश्चन्द्रपूजा । तदुक्तं ब्राह्मे । आग्रहायणीमुपक्रम्य । 'गोभ्यश्च लवणन्देयं तस्मिन्नहनि सर्वदा । यस्मात्तु लवणं चन्द्राद्दक्षशापाद्विनिःसृतम् । माता च दुहिता चैव सम्पूज्याश्च कुलाङ्गना । कान्तं रूपं भवेत्स्त्रीणां पूर्णेन्दोः पूजनादितः' । विष्णुः । 'मार्ग्गशीर्षशुक्लपञ्चदश्यां ससुवर्णलवणदानमाह रूपसौभाग्यलाभः फलम्' ॥

अथपौषी । ब्रह्मपुराणे । 'इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः । पुरन्दरश्च सोमश्च तथा पुष्यवृहस्पती । पञ्चैतान् संपूज्य होमं कुर्य्यात् । ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् । पुष्ययोगे तु कर्त्तव्यं राज्ञा स्नानं विशेषतः' ॥

अथ माघी । ब्राह्मे । 'माघ्यां मघासु च तिलैः सन्तर्प्य पितृदेवताः । तिलपात्राणि देयानि तिलं सघृतमोदनम् । कार्प्पासदानमत्रैव तत्रवास्नानं दानं वित्तानुसारतः । मोचकौ आचरणादाजानुपरिधानविशेषकौ । भविष्योत्तरे । 'पौर्णमास्यां तु माघे यः पूजयेद्विधिवच्छिवम् । सोऽश्वमेधमवाप्येह विष्णुलोके महीयते' ॥

अथ फाल्गुनी । तस्यां होलिका निर्णीयते । सूर्य्यसेनीये । 'सायाह्ने होलिकां कुर्य्यात्पूर्वाह्ने क्रीडनं गवाम् । दीपं द-

होलिकानिर्णयः द्यात्प्रदोषे तु एष धर्म्मः सनातनः' । श्रावणी दुर्ग्गनवमी पूर्वविद्धैव ग्राह्येत्याद्युक्तम् । भद्रायां द्वे न कर्त्तव्ये इत्यप्युक्तम् । किञ्च भतापरुद्रीये दुर्वासाः । 'निशामुखे तु पूज्यैषा होलिका सर्वतो बुधैः । न दिवा पूज्यते होली पूजिता दुःखमावहेत् । भद्रायां

दीपिता होली राज्यभङ्गं करोति वै । नगरस्य च नैवेष्टा तस्मात्तां परिवर्ज्जयेत्' । स्मृत्यन्तरे । 'दिनार्द्धात्परतोऽपि स्यात्फाल्गुनी पूर्णिमा यदि । रात्रौ भद्रावसाने तु होलिकां तत्र दीपयेत्' । भविष्योत्तरे विशेषः । 'सार्द्धयामत्रयं पूर्णा द्वितीयदिवसे यदि । प्रतिपद्वर्द्धमाना च तदा सा होलिकास्मृता' इति । यत्तु 'वह्नौ वह्निं परित्यजेदिति, वह्नौ होलिकायां वह्निं प्रतिपदमित्यर्थ इति, तच्चु सायं पूर्णिमायाम् अभद्रायां सत्यां प्रतिपदि न कार्य्यमेतत्परमन्यथा भविष्योत्तरवचनविरोधः स्यादिति ॥

अथात्र कर्त्तव्यमुच्यते । भविष्योत्तरे । युधिष्ठिरकृष्णयोः संवादे ढौण्ढोपाख्यानम् । रघुं राजानं प्रति पौरवाक्यम् । 'अस्माकं तु पुरे कापि ढुण्ढानामेह राक्षसी । दिवारात्रौ समागत्य बालान् पीडयते बलात् । रक्षया दण्डकेनापि भेषजैर्वा नराधिप । मन्त्रज्ञैः परमाचार्य्यैः सा स्रियन्तु न शक्यते । इति पौरवचः श्रुत्वा राज्ञा पृष्टोऽथनारदः । उवाच नारदो हृष्टो देवेयं मालिनः सुता । अनयोग्रेण तपसा शम्भुराराधितः पुरा । प्रहृष्यतस्यै त्रैलोक्येप्यभयं दत्तवान् हरः । एवमस्त्विति तामुक्त्वा पुनः प्रोवाच शूलभृत् । उन्मत्तेभ्यः शिशुभ्यश्च भयं ते सम्भविष्यति । तद्दिनमारभ्य सा सर्वोपद्रवं चकार तत्रोपायमाह नारदः । साम्प्रतं कथयिष्यामि येनोपायेन हन्यते । अद्य पञ्चदशी शुक्ला फाल्गुनस्य नराधिप । शीतकाले विनिष्क्रान्ते प्रातर्ग्रीष्मो भविष्यति । अभयप्रदानं लोकानां दीयतां पुरुषोत्तम । यथा निःशङ्किता लोका रमन्ति न हसन्ति च । दारुजानिच खाङ्गानि गृहीत्वा समरोत्सुकाः । योधा इव विनिर्य्यान्तु शिशवः संप्रहर्षिताः । शुष्कगोमयकाष्ठानां सञ्चयं तत्र कारयेत् । तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैः मन्त्रविस्तरैः । ततः किलकिलाशब्दैस्तालशब्दैर्म्मनोहरैः । तमग्निं त्रिःपरिक्रम्य गायन्तु च हसन्तु

च । जल्पन्तु स्वेच्छया लोका निःशङ्का यस्य यन्मतं । भगलिङ्गाकितैः शब्दैः कीर्त्तयन्देशभाषया । विस्तारयँश्च सततं सहस्रं नाम चैतयोः । तेन शब्देन सा पापा होमेन च निराकृता । अदृष्टघातैर्डिम्भानां राक्षसी क्षयमेष्यति । अदृष्टापि च दृष्ट्वेदं चरितं भण्डिमान्वितम् । भयेन तेन सा रण्डा लज्जिता मपलायते । भविष्यति न सन्देहो भस्मीभूताच पूतना । ततः मभृति लोकेस्मिन्होलिका ख्यातिमागता । सर्वदुष्टापहो होमः सर्वरोगोपशान्तिदः । क्रियतेहि द्विजैः पार्थ तेन सा होलिका स्मृता । सर्वसारा तिथिश्चेयं पौर्णमासी युधिष्ठिर । सारत्वात्फाल्गुनीत्येषा परमानन्ददायिनी । अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे । गोमयेनोपलिप्ते च सचतुष्कगृहाङ्गणे । आकारयेच्छिशुप्रायान् खड्गव्यग्रकरान्नरान् । ते काष्ठशब्दैः संस्पृश्य शब्दैः हास्यकरैः शिशून् । रक्षन्ति तेषां दात्तव्यं गुडं पक्वान्नमेव च । एवं ढुण्ढेति या तस्याः स दोषः मशमं व्रजेव । बालानां रक्षणं कार्य्यं भयात्तस्मिन्निशागमे । होलिकानन्तरं भूतिवन्दनादिकृत्त्यमपि तत्प्रतिपदि प्राग्दर्शितमनुसन्धेयम् । फाल्गुनी मन्वादिरपि ॥

अथ महाचैत्रादिलक्षणमाह गार्ग्यः । 'मासंसंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः । गुरुणा याति संयोगं सा तिथिर्महती स्मृता' । ज्येष्ठीविशेषः 'ऐन्द्रे गुरुश्शशी चैव प्राजापत्ये रविस्तथा। पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्त्तिता । वृषे वा मिथुने भानौ जीवचन्द्रौ तथेन्द्रभे । पौर्णमासी गुरोर्वारे महाज्येष्ठी प्रकीर्त्तिता' । माघ्यां विशेषः 'मेषराशौ यदा सौरिः सिंहे चन्द्रवृहस्पती । भास्करः श्रवणर्क्षे च महामाघी तु सा स्मृता' । आसां तीर्थविशेषे प्राशस्त्यमाह गार्ग्यः । 'महामाघी प्रयागे तु फाल्गुनी नैमिषे

१ तत्तन्मासंसंज्ञाकारकेनक्षत्रे ।

तथा । सालग्रामे महाचैत्री कृताः स्युः पुण्यहेतवः । गङ्गाद्वारे तु वैशाखी ज्यैष्ठी च पुरुषोत्तमे । आषाढी वै कनखले केदारे श्रावणी तथा । वदर्य्यां च प्रौष्ठपदी कुजाद्रौ तु महाश्विनी । पुष्करे कार्तिकी कान्यकुब्जे मार्ग्गशिरस्तथा । अयोध्यायां महापौषी कृता स्युस्ता महाफलाः' । महाफला इति उक्ततीर्थे फलविशेषो भवति, नतु तीर्थान्तरे फलाभाव इति । तदाह गार्ग्यः । 'आसु चेत्क्रियते श्राद्धं यच्च दानं यथाविधि । उपवासादिकं यच्च तदनन्तफलं स्मृतम्' ॥

---

अथामावास्यानिर्णयः । सा चोपवासादिषु प्रतिपद्युतैव ग्राह्या । 'प्रतिपद्यप्यमावास्येति युग्मवचनात् । 'अमावास्या तृतीया च ता उपोष्याः परान्विताः' । षष्ठ्यष्टमी अमावास्येत्यादि । निषेधश्च निगमे । 'भूतविद्धा ह्यमावास्या निष्फलं स्यात्त्रयन्त्विदमिति । स्कान्देपि । भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुङ्गवैः । स्कान्दे 'भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् । वर्ज्जयित्वा सुसावित्रीव्रतन्तु शिखिवाहन' । सावित्रीव्रते तु पूर्वविद्धा ग्राह्येत्यर्थः । 'दर्शश्च पौर्णमासश्च पितुः साम्वँत्सरं दिनम् । पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते' इत्यादीनि श्राद्धविषयाणि ॥

अथामावास्याव्रतानि ॥ तत्र ज्येष्ठामावास्यायां भविष्योत्तरोक्तं वटसावित्रीव्रतम् । शक्तौ त्रिरात्रोपवासः । अशक्तौ त्रयोदश्यां नक्तं चतुर्द्दश्यामयाचितममायामुपोषणम् । ततः सवस्त्रवंशमयपात्रे सत्यवता सार्द्धं सावित्रीप्रतिमां सुवर्णादिघटितां स्थापयेत् । वटावलम्बिनंकाष्ठभारं कृत्वा निरूढसप्तधान्यहरिद्राकण्ठसूत्रादिस्थापनम्, सावित्र्याख्यानश्रवणम् । रात्रौ जागरणम् । प्रातः प्रतिमादानं । मन्त्रश्च । 'सावित्रीयं मया दत्ता स-

वटसावित्री-व्रतविधिः

हिरण्या महासती। ब्रह्मणः प्रीणनार्थाय ब्राह्मणः प्रतिगृह्यताम्’ । इति हविष्यान्नभोजनम् । ‘व्रतेनानेन राजेन्द्र वैधव्यं नाप्नुयात्क्वचित्’ इति ॥

अथ कार्त्तिक्यमावास्या सुखरात्रिरुच्यते । ब्राह्मे । ‘अमावास्यायां तु देवाः कार्त्तिके मासि केशवात् । अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसानुषु । लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे । अतोऽर्थं विधिवत् कार्य्या मनुष्यैः सुखसुप्तिका । दिवा तत्र न भोक्तव्यमृते बालातुराक्षमान् । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्य्या शक्त्या देवगृहेषु च । दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् । ब्राह्मणान्भोजयित्वादौ विभोज्यच बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना । स्निग्धैः शूद्रैर्विदग्धैश्च बान्धवैर्निभृतैः सहेति । अस्यामेव राजा कौमुदीमहोत्सवं

कौमुदीमहोत्सवः

कुर्यात् । तदुक्तं सूर्य्यसेनीये । ‘ततोऽपराह्णसमये घोषयेन्नगरे नृपः । अद्यराज्यं बलेर्ल्लोको यथेष्टं चेष्टतामिति’ । अद्य राज्यं बलेरिति वामनो बलिं पाताले निःक्षिप्य चतुर्द्दशीसुखरात्रिप्रतिपदो बलये दत्तवानिति भविष्योत्तरोपाख्यानादुक्तम् । ‘द्यूतपानरतोद्युक्तनरनारीमनोहरे । गीतवादित्रसंघुष्टे संप्रज्वलितदीपके । दीपमालाकुले रम्ये विध्वस्तध्वान्तसञ्चये । प्रदोषे दोषरहिते शस्ते दोषागमे शुभे । वेश्याविलासिनीसार्द्धं स्वस्तिमङ्गलकारिणी । गृहाद्गृहं व्रजति च पादाभ्यङ्गप्रदायिनी । ततोर्द्धरात्रसमये स्वयं राजा पुरं व्रजेत् । अवलोकयितुं रम्यं पद्भ्यामेव शनैःशनैः । एवं गते निशीथे तु जने निद्रार्धलोचने । तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः । निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् । प्रभातसमये राज्ञा तोषणीयास्ततो जनाः । वृषभान्महिषांश्चैव युध्यमानान्परैः सह । गजानश्वांश्च योधांश्च पदातीन् समलङ्कृतान् । मञ्चारूढस्ततो पश्येन्नटनर्त्तकचारणान्’ इति । ततः

प्रातः प्रतिपदि गोवर्द्धनपूजाद्यूतादि प्रागुक्तमनुसन्धेयम्। कौमुदीपदव्युत्पत्तिमाह भविष्योत्तरे। कौमुत्मीतिर्वलेर्य्यस्मात्क्रियतेऽस्यां युधिष्ठिर। अतोर्थपृथिविः पार्थ तेनैषा कौमुदी स्मृता। एवमेकमहोरात्रं वर्षे वर्षे विशांपते। दत्तं दानवराजस्य आदर्शमिव भूतले। यः करोति नृपो राज्ये तस्य व्याधिभयं कुतः। कुतईतिभयं तस्य नास्ति मृत्युकृतं भयम्। सुभिक्षं क्षेममारोग्यं सस्यसंपदउत्तमाः। नीरुजश्च जनाः सर्वे सर्वोपद्रववर्ज्जिताः। कौमुदीकरणाद्राजन् भवन्तीह महीतले। यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर। हर्षदैन्यादिरूपेण तस्य वर्षं तथैति तत्। तस्मात्प्रहृष्टैस्तुष्टैश्च कर्त्तव्या कौमुदी नरैः। वैष्णवी मानवी चेयं तिथिः पैत्री युधिष्ठिर' इति॥

अथ कृष्णादिमासरीत्या माघामावास्यायामर्द्धोदयव्रतम्। 'माघामायां व्यतीपाते आदित्ये विष्णुदैवते। अर्द्धोदयं तदित्याहुः सहस्राक्र्कग्रहैः समम्'। एतद्व्रतेन कृतेन सप्तद्वीपसंयुतमहीदानफलम्। ब्रह्मविष्णुमहेशानां सौवर्णप्रतिमापूजा, ततोऽलङ्कारादिभिराचार्य्यपूजा, होमः। स्वर्णशृङ्गीदानं। फलम्। 'तेन दत्तं हुतं जप्तं इष्टं यज्ञैः सहस्रधा। कृतकृत्यो भवेन्मर्त्यो विधायार्द्धोदयव्रतम्'। महाभारते तु। 'अमार्क्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः। अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः। दिवैव योगः शस्तोयं नतु रात्रौ कदाचन'। स्कान्दे। 'अर्द्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम्। शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसन्निभाः। यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम्'। अत्रदानविशेषः 'चतुःषष्ट्या चत्वारिंशता पञ्चविंशत्या वा पलैस्ताम्रादिपात्रं निर्म्माय तत्र पायसं निधायाष्टदलकमलं लिखेत्। 'पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम्। तदभावे तदर्द्धं वा तदर्द्धं वापि कारयेत्। कृत्वा तु

अर्द्धोदयानिर्णयोविधिश्च

तण्डुलैः शुद्धैः पद्ममष्टदलं शुभम् । अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् । तेषां प्रीतिकरार्थाय श्वेतमाल्यैः सुशोभनम् । वस्त्रादिभिरलङ्कृत्य ब्राह्मणाय निवेदयेत्' । दानमन्त्रस्तु । 'सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयम् । आपत्तेस्तारकं यस्मात्तद्गृहाण द्विजोत्तम । समुद्रमेखलां पृथ्वीं सम्यग्दत्वा तु यत्फलम् । तत्फलं लभते मर्त्यः कृत्वा दानममत्रकम्' । इत्यर्द्धोदयविधिः ॥

माघामायामन्योविशेषः 'अमायां माघमासस्य पूजयित्वा पितामहम् । गायत्र्या सहितन्देवं वेदवेदाङ्गपारगम् । नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् । सहिरण्यां सवत्सां च ब्राह्मणाय निवेदयेत्' । अक्षयफलाप्तिः । वैष्णवे । 'माघेऽसिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन । ऋक्षेण कालः स परः पितॄणां नह्यल्पपुण्यैर्नृप लभ्यतेसौ' । वारुणेन शतभिषया । 'तत्रैव चेद्भाद्रपदा तु पूर्वा काले तदा यत् क्रियते पितृभ्यः । श्राद्धं परितृप्तिमवाप्नुवन्ति युगान्सहस्रं पितरस्तु तेन' । इयमेव धनिष्ठायुता वर्षायुतन्तृप्तिदा, तदुक्तम् महाभारते माघामावास्याप्रकरणे । 'काले धनिष्ठा यदि नाम तस्मिन्भवेच्च भूपाल तदा पितृभ्यः । दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः' । सोमयुता या काचिदमा सूर्य्यग्रहसमा । तदुक्तं शङ्खेन । 'अमावास्या तु सोमेन सप्तमी भानुना युता । चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी । चतस्रस्तिथयो ऽप्येता सूर्य्यग्रहणसन्निभाः । स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत्' । लैङ्गे फाल्गुनतिथिप्रकरणे । अमावास्यायां प्रपूज्या रुद्रोभिर्ब्राह्मणस्तथा । मांसोदनै पोलिकाभिश्चपूज्यात्मासवान्धवाः । गार्ग्यः । 'श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः । अमा चेद्रविवारेण व्यतीपातः स उच्यते' । नागदैवतमाश्लेषा, मस्तकं मृगशिरा । तथा ।

'तत्र जप्तं हुतं दत्तं सर्वं कोटिगुणं भवेत्' ।

अथान्वाधानम् । 'आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् । तदहर्याग इष्येत परतश्चेत्परेहनि' । आवर्त्तनं मध्यन्दिनम् । तथा 'पर्वप्रतिपदोः सन्धिरर्व्वागावर्तनाद्यदि । तस्मिन्नहनि यष्ठव्यं पूर्वेद्युः स्यादुपक्रमः' । लौगाक्षिः । 'पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते' । तथा । 'अपराह्णेऽथवा सायं यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते' । गोभिलोपि । 'आवर्त्तनात्परः सन्धिर्यदि तस्मिन्नुपक्रमः । परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णयः' । पर्वद्वय इति वचनात्पूर्णिमामावास्ययोः साधारणोयं निर्णयः । विशेषस्तूच्यते । कात्यायनः । 'सन्धिश्चेत्सङ्गवादूर्द्ध्वमर्वागावर्त्तनाद्भवेत् । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः' । सन्धिः पूर्णिमाप्रतिपदोः । नन्वेवं सति पूर्वेद्युरन्वाधाय परेद्युर्यष्टव्यमिति विधिविरोधः स्यादिति चेत्सत्यं, न विरोधः सद्यस्कालविधेरदर्शनात् । यदाहापस्तम्बः । 'पौर्णमास्यां त्वन्वाधानं परिस्तरणोपवासः सद्योथवा सद्यस्कालायां सर्वं क्रियत इति । ननु तथापि 'तस्मिन्नहनि यष्टव्यं पूर्वेद्युः स्यादुपक्रम' इति गोभिलविरोध इति चेन्न । सङ्गवात्पूर्वमपि सन्धेर्म्मध्यान्हार्वाचीनत्वेन तद्विषयत्वाद्गोभिलवाक्यस्य । कात्यायनवचनस्य मध्यान्हार्वाचीनसङ्गवोदूर्ध्वभाविसन्धिविषयत्वादविरोधात् । गोभिलवचनं पर्वद्वयसाधारणम्, कात्यायनवचनं पूर्णिमामात्रविषयमित्यविरोधाच्चेति । अमायां तु विशेषमाह वृद्धच्छातातपः । 'द्वितीया त्रिमुहूर्त्ता चेत्प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्द्दश्यां परतः सोमदर्शनात्' । चतुर्द्दश्यामन्वाधायामायां यागः कार्य्य इत्यर्थः ।

अथ यागकालः । याज्ञवल्क्यः । 'पञ्चदश्याः परः पादः प-

क्षादेः प्रथमस्तु यः। कालः पार्व्वणयागस्य त्वन्यथातु न विद्यते'। वृद्धशातातपः। 'पर्वणो यश्चतुर्थोऽशः आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिरिति। विशेषमाह शातातपः। 'सन्धिर्यद्यपराह्णे स्याद्यागं प्रातः परेहनि। कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दूष्यति'। यत्तु 'न यष्टव्यं चतुर्थेऽशे यागे प्रतिपदः क्वचित्। रक्षांसि तद्विलुंपन्ति श्रुतिरेषा सनातनी'। इदमाद्यंशकाले सम्भवति आलस्यादिना तदतिक्रम्य चतुर्थेऽशे न यष्टव्यमित्येवं परमिति॥

अथानध्यायतिथयः। याज्ञवल्क्यः। 'पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके। ऋतुसन्धिषु भुक्त्वाच श्राद्धिकं प्रतिगृह्य च' गौतमः 'पक्षद्वयचतुर्दश्योरष्टमीद्वितये तथा। पक्षादावपि पक्षान्ते ब्रह्म नाधीयते द्विजैः'। ब्रह्म वेदः। न च ब्रह्मेतिपदाद्वेदानामेवानध्यायो न विद्यान्तरस्येति वाच्यम्। 'चतुर्दश्यष्टमीपर्वप्रतिपद्वर्ज्जितेषु च। वेदाङ्गन्यायमीमांसाधर्म्मशास्त्राणि चाभ्यसेत्' इत्यपरार्क्के विशेषाभिधानादिति। यत्तु मनुः। 'वेदोपकरणे चैव स्वाध्याये चैव नैत्त्यके। नानुरोधोस्त्यनध्याये होममन्त्रेषु चैवहीति। तत्र वेदोपकरणे नैत्त्यके नानध्याय इत्यर्थोऽन्यथा विरोधः पूर्वोक्तेनेति। 'अमायां च चतुर्दश्यां पौर्णमास्यष्टकासु च। अमावास्या गुरुं हन्ति शिष्यं हन्ति च पूर्णिमा। ब्रह्म हन्त्यष्टमी भूता तस्मात्तां परिवर्ज्जयेत्'। बौधायनः। 'महानिशा तु विज्ञेया मध्ये मध्यमयामयोः। तत्र स्नानं न कुर्वीत स्वाध्यायं पितृतर्प्पणम्'। वृद्धमनुः। 'त्रयोदश्यां न सप्तम्यां चतुर्थ्यामर्द्धरात्रतः। अर्वाङ्न्नाध्ययनं कुर्य्याद्यदीच्छेत्तस्य धारणम्'। अत्र विशेषमाह गार्ग्यः। 'रात्रौ यामद्वयादर्वाक् सप्तमी वा त्रयोदशी। प्रदोषः स तु विज्ञेयः सर्वविद्यासुगर्हितः। रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते। प्रदोषः

सतु विज्ञेयो वेदाध्यायविगर्हितः'। भीष्मः। 'चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु । विषुवायनयोर्द्वन्द्वे शयनीबोधिनीद्वये। पक्षाधिकत्रयोदश्यां तस्या एवोत्तरा तिथिः। दर्शस्पृग्दिवैत्र स्यादनध्यायः श्रुतावपि'। श्रुतिः श्रवणद्वादशी । चातुर्मास्यद्वितीया गर्ग्गेणोक्ताः। 'शुचावूर्ज्जे तपस्ये च या द्वितीया विधुक्षये। चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः । पूर्वं चोर्द्धमनध्यायमहः संक्रमणे निशि। दिवापूर्वोत्तरं रात्राविति वेदविदोविदुः'। याज्ञवल्क्यः। 'त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु। उपाकर्म्मणि चोत्सर्ग्गे स्वशाखाश्रोत्रिये मृते। सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने। समाप्य वेदं द्युनिशमारण्यकमधीत्य च'। तथा 'पशुमण्डूकनकुलश्वाहिमार्ज्जारमूषकैः। कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये'। शक्रध्वजस्योद्वासनदिने उत्थापनदिने चेत्यर्थः। अनध्यायाध्ययनदोषमाह स्मृतिचन्द्रिका। 'अनध्यायेष्वध्ययने प्रज्ञामायुः प्रजां श्रियम्। ब्रह्मवीर्य्यश्रितं तेजो निकृन्तति यमः स्वयम्'। स्मृत्यर्थसारे विशेषः 'चतुर्द्दश्यष्टमीपर्वप्रतिपत्सु च सर्वदा। दुर्म्मेधानामनध्यायस्त्वन्तरागमनेषु च'। दुर्म्मेधानां विस्मृतिशीलानां। स्मृतिचन्द्रिका। 'उदयेऽस्तमये चापि मुहूर्त्तद्वयगामि यत्। तद्दिने तदहोरात्रमनध्यायं विना विदुः'। तथा। 'तावदेव त्वनध्यायो न तन्मिश्रादिनान्तरे। उपवासव्रतादीनां तिथिमाहुस्तथैव च'। मैथिलादिनिबन्धे विशेषः। 'प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी। दिनन्दूषयते सर्वं मेघविन्दुरिवोदकम्' इति संक्षेपः ।

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे।
सर्वतिथिनिर्णयाख्यो गत उद्धारस्तुरीयोऽयम्॥४॥

अथ मुक्तकव्रतानि। तिथिविशेषानियतत्वं मुक्तकत्वम्। आदित्यपुराणोक्तं पुत्रोत्पत्तिव्रतम्। श्रवणे श्रवणे वर्षं यावत्स्नानम्। इदं च वसिष्ठपुत्रेण शक्तिना कृतम्॥

अथ विष्णुधर्म्मोक्तं शत्रुनाशव्रतम्। 'कृतोपवासो याम्येषु कृत्तिकासु च सर्वदा। पूजयेद्वासुदेवं वै कुङ्कुमेन सुगन्धिना' इति॥

अथ लिङ्गपुराणोक्तं ज्येष्ठापूजाव्रतम्। 'अलक्ष्मीरग्रतो जाता पश्चाल्लक्ष्मी हरेः प्रिया। ज्येष्ठा तेन समाख्याता ह्यलक्ष्मीर्द्विज-

ज्येष्ठाख्यानकम्

सत्तम। तद्भर्त्ता दुःसहो नाम मुनिः सतु तया सह। सर्वत्र भ्रममाणोऽपि स्वस्थलं नाध्यगच्छत'। तं मार्क्कण्डेयः प्राहस्म 'यत्र भार्य्या च भर्त्ता च परस्परविरोधिनौ। सभार्य्यस्त्वं गृहं तस्य विशेथा भयवर्ज्जितः। वासुदेवे रतिर्नास्ति नास्ति यत्र सहोदरे। जपहोमादिकं नास्ति सभार्य्यस्त्वं समाविश। रात्रौ रात्रौ गृहे यस्मिन् कलहो वर्द्धते मिथः। अनया सार्द्धमनिशं विश त्वं भयवर्ज्जितः। अगस्त्यार्क्कादयो वापि बन्धुजीवो गृहेषु वै। करवीरो विशेषेण नन्द्यावर्त्तमथापि वा। मल्लिका वा गृहे यस्य सभार्य्यस्त्वं समाविश। बालानां प्रेक्षमाणानां यत्र वृद्धा हि भुञ्जते। मिष्टान्नं तत्र संहृष्टः सभार्य्यस्त्वं सदा विश। या नारी शौचविभ्रष्टा देहसंस्कारवर्ज्जिता। सर्वभक्ष्यरता नित्यं तस्या स्थानं समाविश। पृष्ठतोमैथुनं येषां श्ववच्च खरवच्च वा। जले वा मैथुनं कुर्यात्सभार्य्यस्त्वं समाविश। यः शृङ्गाद्यौषधैः क्षुद्रैः शेफमालिप्य गच्छति। भगद्रावं च कुरुते सभार्य्यस्त्वं समाविश। तस्मात्प्रदेयस्तस्यै च बलिर्नित्यं नरेश्वरैः। विष्णुभक्तैर्न सन्देहः सर्वयत्नेन सर्वथा। अङ्गनाभिः सदा पूज्या बलिभिर्विविधैर्द्विजाः'। भविष्योत्तरे तु मृतवत्सादीनां विशेषेणैतद्व्रतमुक्तम्। मन्त्रश्च। 'शार्ङ्गैर्बाणैश्च खड्गैश्च आरनालदतर्प्पणैः। अन्यैरप्यायुधैर्युक्तां ज्येष्ठे त्वामर्चयाम्यहम्॥

अथ सौरधर्म्मोक्तं मार्गशीर्षादिद्वादशमासिकमादित्यव्रतम् । कुष्ठादिनाशः पुत्रादिप्राप्तिश्च फलम् । आग्रहायणादिमासेषु द्वादशसु प्रतिमासरविवारेषु क्रमेण तुलस्यादिद्वादशवस्तुभिरुपवासनियमः । तुलसीपत्रत्रय—घृतपलद्वय—तिलमुष्टित्रय—दधिपलत्रय—दुग्धगोमय—तोयाञ्जलित्रय—मरिचत्रय—शक्तुपलत्रय—गोमूत्र—सिता—दुग्धोदनैः खण्डेनेति । रविपूजा प्रतिमासं रौप्यरथोपरि सूर्य्यप्रतिमां स्थाप्य । अन्ते उद्यापनं, फलं चोक्तमेवेति ॥

अथ वराहपुराणोक्तं व्यतीपातव्रतम् । सोमसूर्य्ययोः क्रुद्धदृष्टिपाताद्व्यतीपातः समभवत् । सोमसूर्य्यावूचतुः । 'कोपदृष्ट्या नौ विविधादतिपाताद्भवानभूत् । व्यतीपातस्ततो नाम्ना भवान्भुवि भविष्यति ॥ स्नानदानजपहोममर्चनं यस्त्वदीयसमये समाचरेत् । तस्य पुण्यमिह नौ प्रसादतोऽनन्तमस्तु तव चाप्यनुग्रहात् । तत्काले तव विदधाति पूजनम् यस्तस्येष्टं भवतु भवेः सुभद्ररूपः । पुत्रायुर्द्धनसुखकीर्त्तिपुष्टिरूपारोग्याद्यं गुणिजनवल्लभेत सर्वम्' । प्रतिमादिविशेषो निबन्धे । उपवासः । त्रयोदशमासिकं व्रतम् । उद्यापनं चतुर्दशे । एतदेव व्रतं नारदीयेप्युक्तम् । हर्यश्ववराहयोः संवादः । 'शङ्खचक्रगदापाणिं पद्महस्तं हिरण्मयम् । वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुडध्वजम् । गोक्षीरेणैव सम्पूर्णं कामभाजनमुत्तमम् । स्थापयेद्देवदेवेशं स्थानं तत्रैव कल्पयेत्' । हरिसालोक्यम् ।

अथ भविष्योत्तरोक्तं भद्राव्रतम् । 'सुता मार्तण्डदेवस्य छायायां जनिता पुरा । शनैश्चरस्य भगिनी सोदर्य्यातिभयङ्करी । सा जातमात्रा भुवनं ग्रस्तुं समुपचक्रमे' । तादृशीं भद्रां दृष्ट्वा कस्मै देयेति चिन्तयद्रविः । यस्मै दित्सति तमेव भक्षयति । एवं तया जगद्भोक्तुमारब्धम् । ततो ब्रह्मा सूर्य्यायोपलम्भन्ददौ ।

सूर्य्येण चासामर्थ्ये दर्शिते ब्रह्मा। 'उवाच विष्टिमानाय्य शृणु भद्रे मयोदितम्। करणैः सह वर्त्तस्व ववबालवकौलवैः। सप्तमेऽर्द्धदिने भासे यदभीष्टं कुरुष्व तत्। यात्राप्रवेशमाङ्गल्यकृषिवाणिज्यकारकान्। भक्षय स्वाभिमुखगान्नरान्मार्ग्गप्रवर्त्तिनः। नोद्वेजनीयो हि जनो भवत्त्या दिवसत्रयम्'। भद्रास्तोत्रव्रतपूजादिप्रकारोन्यत्रेति॥

अथ ब्रह्माण्डपुराणोक्तमर्द्धश्रावणीव्रतम्। 'मासे तु श्रावणे मासि शुक्लपक्षे मनोहरे। संस्थाप्य पार्वतीन्देवीं पूजयेद्भक्तिभावतः। मासं यावन्नियमतः संस्मरन्पार्वतीं हृदि'। एकभक्तादिकं, सकलव्रतपरिपूर्त्तिः फलम्।

अथ भविष्यपुराणोक्तो वृन्ताकत्यागविधिः। कृष्ण उवाच। वृन्ताकस्य विधिं वक्ष्ये शृणु पार्थ समाहितः। संव्वत्सरं वा षण्मासान् त्रीन्वा मासान्नभक्षयेत्। अथ भरण्यां मघायां वा एकरात्रोपवासं कृत्वा चतुर्द्दशयमानामावाहनं पूजां होमं च कृत्वा तिलाज्यैस्ततः शक्तौ सत्यां स्वर्णवृन्ताकं कृष्णां गां तथा वृषभं च कुण्डलमंगुलीयकं क्षत्रोपानहौ च विप्राय दद्यात्। विप्रान्भोजयित्वा आशिषो वाचयेत् 'अनेन विधिना यस्तु वृन्ताकं संप्रयच्छति। त्रीन्मासान्वाथ षण्मासान्वर्षं चैकं न भक्षयेत्। अथवैनं विधिं कृत्वा यावज्जीवन्त्यजेद्बुधः'। पौण्डरीकाश्वमेधयोः फलम्। अच्युतसालोक्यञ्च। अपरं च। 'सप्तकोटिसहस्राणि नाकपृष्ठे महीयते। सप्तजन्मान्तरं यावद्यमलोकं न पश्यति' इति॥

अथ चैत्रादिमासव्रतानि। मात्स्ये। 'वर्ज्जयित्वा मधौ यस्तु दधिक्षीरघृतैक्षवम्। दद्याद्वस्त्राणि सूक्ष्माणि पट्टवस्त्रयुतानि च। सम्पूज्य विप्रमिथुनं गौरी मे प्रीयतामिति। एतद्गौरीव्रतं नाम भवानीलोकदायकम्'। भविष्योत्तरे। 'चैत्रे त्रिरात्रं नक्ताशी

नद्यां स्नात्वा ददाति यः । अजाः पञ्च पयस्विन्यो दरिद्राय कुटुम्बिने । न जायते पुनरसौ जीवलोके कदाचन' इति । वामनपुराणे 'चैत्रे मासि विचित्राणि शयनान्यासनानि च । विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेषु च' ॥

अथ वैशाखः । महाभारते । 'निस्तरेदेकभक्तेन वैशाखं योजितेन्द्रियः । प्रातःस्नायी नरः स्त्री वा ज्ञातीनां श्रेष्ठतां व्रजेत्' । वामनीये । 'गन्धमाल्यानि च तथा वैशाखे सुरभीणि च । देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये' ॥

अथ ज्येष्ठः । भविष्योत्तरे । 'पिष्टकेन कजं कृत्वा ज्येष्ठे मासि च वैदिकम् । पुष्पैः सम्पूज्य गन्धाद्यैर्भाववस्त्रविभूषितैः । वर्षकोटिगुणं साग्रं सूर्य्यलोके महीयते' । कजो ब्राह्मणः । वामनीये । 'उदकुम्भाम्बु धेनुं च तालवृन्तं सचन्दनम् । त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि च' ॥

अथाषाढः । महाभारते । 'आषाढमेकभक्तेन नीत्वा मासमतन्द्रितः । बहुधान्यो बहुधनो बहुपुत्रश्च जायते' । वामनीये । 'उपानद्युगलं छत्रं लवणामलकानि च । आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः' ॥

अथ श्रावणः । महाभारते । 'श्रावणं नियतो मासमेकभक्तेन यः क्षपेत् । यत्र तत्राभिषेकेण पूजयेज्ज्ञातिवर्द्धन' इति । वामनपुराणे । 'घृतं च क्षीरकुम्भाँश्च धृतधेनुं फलानि च । श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिता ॥

अथ भाद्रः । भारते । प्रौष्ठपद्यं च यो मासमेकाहारो भवेन्नरः । धनाढ्यः स्फीतमतुलमैश्वर्य्यं प्रतिपद्यते' । वामनपुराणे । 'मासि भाद्रपदे दद्यात्पायसं मधुसर्प्पिषी । हृषीकेशप्रीणनार्थं लवणं सगुडोदनम्' ॥

अथाश्विनः। यमः । 'घृतमाश्वयुजे मासि नित्यं दद्याद्विजातये। प्रीणयित्वाश्विनौ देवौ रूपभागभिजायते'। वामनीये। 'तिलास्तुरङ्गं वृषभं दधि ताम्रवशादिकम्। प्रीत्यर्थं पद्मनाभस्य दद्यादाश्वयुजे नरः'। वशा धेनुः॥

अथ कार्त्तिकः। पाद्मे। 'कृत्स्नः संवत्सरः पुण्यस्तस्माद्वर्षा सुपूजिता । वर्षायाः कार्त्तिकः पुण्यः कार्त्तिकाद्ग्रीष्मपञ्चकम्। एकतः पुष्करे वासः कुरुक्षेत्रे हिमाचले । एकतः कार्त्तिके वत्स सर्वदा केशवप्रियः। कोटिकोटिसहस्राणि पापानि सुबहून्यपि। निमिषार्द्धेन दीपस्य विलयं यान्ति कार्त्तिके'। नारदीये। 'कृच्छ्रं वाप्यतिकृच्छ्रं वा प्राजापत्यमथापि च । सम्प्राप्ते कार्त्तिके मासि कुर्य्याच्छक्त्यातिपुण्यवान्' । स्कान्दे । 'अव्रतेन नयेद्यस्तु मासं दामोदरप्रियम् । तिर्य्यग्योनिमवाप्नोति सर्वधर्म्मबहिष्कृतः । दुर्ल्लभा मालतीपूजा दुर्ल्लभा तुलसी मुने। दुर्ल्लभं कार्त्तिके स्नानं दुर्ल्लभं साधुसेवनम् । दुर्ल्लभो द्वारकावासो दुर्ल्लभं कृष्णदर्शनम् । दुर्ल्लभं गोमतीस्नानं दुर्ल्लभं कार्त्तिके व्रतम्। भोजनं ब्रह्मपत्रेषु कथायाः श्रवणं हरेः। दर्शनं वैष्णवानां च महापातकनाशनम्' । ब्रह्मपत्रे पालाशपत्रे । इदं वानप्रस्थादिपरम् । यदाह मिताक्षरा। 'पद्मपालाशपत्रेषु गृही भुक्त्वैन्दवं चरेत् । वानप्रस्थो यतिश्चैव लभेच्चान्द्रायणं फलमिति। कार्त्तिकेतरमासपरं वेति । नारदीये। 'अभ्यङ्गेऽभ्यवहारे च तैलमूर्ज्जे विवर्ज्जयेत्। भविता नारकी विप्र तैलाभ्यङ्गी नरः किल'। तैलमत्र तिलप्रभवस्नेहः । 'तैलत्यागी तिलान्दद्याद्द्रोणमात्रान्सकाञ्चनान्' इति वचनात् । सर्वत्र निषेधान्वयी तिलप्रभवस्नेह एव व्याकरणेन तत्रैव शक्त्यवधारणादिति । पाद्मे स्नानमन्त्रोयथा 'कार्त्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्द्दन । प्री-

त्यर्थं तव देवेश दामोदर मया सह’ । मया लक्ष्म्या । इदं मन्त्रं समुच्चार्य्य मौनी स्नायाद्व्रती नरः । व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम । गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिषूदन । नित्ये नैमित्तिके कृष्ण कार्त्तिके पापनाशने । गृहाणार्घ्यं मया दत्तं राधया सहित प्रभो । न गृहे कार्त्तिकं कुर्य्याद्विशेषेण तु कार्त्तिकीम् । तीर्थेतु कार्त्तिकं कुर्य्याद्विशेषेण तु भाविनि’ । स्कान्दे । ‘एकेन जातीपुष्पेण कार्त्तिकेय महामते । तुलसीदलार्द्धभागेन कार्त्तिके मुक्तिमाप्नुयात् । जातीपुष्पसहस्रस्य यो मालां संप्रयच्छति । विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु । कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेत्स भवने विष्णोर्विष्णुतुल्यपराक्रमः । मालतीमालया विष्णुः पूजितो येन कार्त्तिके । पापाक्षरकृतां मालां शौरिस्तस्य प्रमार्ज्जति । अर्चयित्वा हृषीकेशं कुसुमैः केतकोद्भवैः । पुण्यं तद्भवनं याति केशवस्य शिवं मनुः(?) । प्रयागो माघमासे तु पुष्करं कार्त्तिके तथा । नर्म्मदा माधवे मासि हन्यात्पापं त्रिजन्मजम् । कार्त्तिके नार्च्चितो यैस्तु कमलैः कमलेक्षणः । जन्मकोटिषु विप्रेन्द्र न तेषां कमला गृहे । पद्मेनैकेन देवेशं योऽर्चयेत्कमलाप्रियम् । वर्षायुतसहस्राणां पापस्य कुरुते क्षयम् । अपराधसहस्राणि अपराधशतानि च । पद्मेनैकेन देवेशः क्षमते प्रणयार्चितः । पद्मैः पद्मालयाकान्तः पूजितः पद्महस्तधृक् । ददाति वैष्णवान्पुत्रान्भक्तिमव्यभिचारिणीम् । तुलसीदललक्षेण योऽर्चयेद्द्वारकाप्रियम् । जन्मायुतशतोत्थस्य पापस्य कुरुते शमम् । स्नानमात्रेण वै गङ्गा दर्शनादेव नर्म्मदा । घ्राणेन तुलसीपत्रं पापं जन्मार्ज्जितं हरेत् । गतो धात्रीघनच्छाये योर्चयेच्चक्रचिह्नितम् । पुष्पे पुष्पेश्वमेधस्य फलं प्राप्नोति मानवः । धात्रीच्छायां समभ्यास्य कुर्य्यात्पिण्डं च योमुने । मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य

तु । धात्रीफलं च तुलसी मृत्तिका द्वारकोद्भवा । सफलं जीवितं तस्य त्रितयं यस्य वेश्मनि । यावद्दिनानि वहते धात्रीमालां कलौ नरः । तावद्युगसहस्राणि वैकुण्ठे वसते सुखम् । सरोरुहाणि तुलसी मालती मुनिपुष्पकम् । कार्त्तिके दयितान्याहुर्विष्णोर्दीपं च पञ्चमम् । इष्ट्वा क्रतुशतैः पुण्यं दत्वा रत्नान्यनेकशः । तत्पुण्यं तुलसीपत्रैः कार्त्तिके केशवार्च्चनात् । अगस्त्यकुसुमैर्देवं योर्चयेद्गरुडध्वजम् । दर्शनात्तस्य देवर्षे नरकाग्निः प्रशाम्यति । न तत्करोति विप्रर्षे तपसा तोषितो हरिः । यत् करोति हृषीकेशो मुनिपुष्पैरलङ्कृतः । विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् । कार्त्तिके भक्तितोऽभ्यर्च्च्य वाजिमेधफलं लभेत् । गवामयुतदानेन यत्फलं प्राप्यते मुने । मुनिपुष्पेण चैकेन कार्त्तिके तत्फलं स्मृतम् । विल्वपत्रेण ये कृष्णं कार्त्तिके कलिनाशनम् । पूजयन्ति महाभक्त्या मुक्तिस्तेषां मयोदिता । शृणु दीपस्य माहात्म्यं कार्त्तिके केशवप्रियम् । दीपदानेन विप्रेन्द्र न पुनर्ज्जायते भुवि । मा मूढ मथुरां गच्छ मा प्रयागं च मार्बुदम् । दीपदानेन देवस्य सर्वं फलमवाप्स्यसि । राजन् कृते तु यत्पुण्यं नर्म्मदायां शशिग्रहे । तत्फलं कोटिगुणितं दीपदानेन कार्त्तिके । घृतेन दीपको यस्य तिलतैलेन वा पुनः । ज्वलते तुलसीमूले वाजिमेधेन तस्य किम्' । तिलतैलं तिलस्नेहः । अथानन्वयः । 'जन्मप्रभृति यत्पुण्यं नरेणोपार्ज्जितं च यत् । वृथा करोति तत्सर्वमकृत्वा तु प्रबोधिनीम् । शालग्रामशिलायान्तु नावाहनविसर्ज्जने । यतस्ततः शिलाचक्रे नित्यं संनिहितो हरिः । शालग्रामशिला यत्र यत्र द्वारावतीशिला । उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः । शालग्रामशिलां यस्तु तुलस्या परिपूजयेत् । प्रत्यहं कार्त्तिके मासि विष्णुलोकं स गच्छति । शालग्रामशिलापूजा गन्धपुष्पोदकादिकम् । विशेषात्कार्त्ति-

कार्त्तिकेदीपदानफलम्

के मासि सर्वाघौघविघातकम् । शालग्रामशिलापूजा किं पुनश्च- क्रचिह्निता' इतिवचनाच्चक्राङ्कितत्पूजाफलाधिक्यम् । 'स्नानार्च्चन- क्रियाकाले घण्टानादं करोति यः । पुरतो वासुदेवस्य तस्य पुण्य- फलं शृणु । वर्षकोटिसहस्राणि वर्षकोटिशतानि च । वसते देव- लोकेषु अप्सरोगणसेवितः । प्रदक्षिणं यः कुरुते कार्त्तिके वि- ष्णुसद्मनि । पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः' । अथ च- रणोदकादिमाहात्म्यम् । 'प्रपीतैर्म्मस्तके क्षिप्तैः श्रीविष्णोश्चरणो- दकैः । निवेदितान्नैर्भुक्तैश्च कार्त्तिके मुक्तिमाप्नुयात्' । गौतमः । 'शालग्रामशिलातोयमपीत्वा यस्तु मस्तके । प्रक्षिप्तं तत्प्रकुरुते ब्र- ह्महा स निगद्यते' । विष्णुः 'कार्त्तिके मासि सकले सायङ्काले ति- लतैलेनाकाशदीपं दद्यात्' । पुष्करपुराणे । 'तुलायां तिलतैलेन सायंसन्ध्यासमागमे । आकाशदीपं यो दद्यान्मासमेकं हरिप्रियम् । महतीं श्रियमाप्नोति रूपसौभाग्यसम्पदः' । विष्णुः । 'कार्त्तिकं स- कलं मासं नित्यस्नायी जितेन्द्रियः । जपन् हविष्यभुक् शान्तः सर्वपापैः प्रमुच्यते' । वामनपुराणे । 'रजतं कनकं दीपान्मणिमुक्ताफलादि- कम् । दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्त्तिके नरः ॥

अथाग्रहणः । महाभारते । 'मार्ग्गशीर्षन्तु यो मासमेकभुक्तेन सन्नयेत् । भोजयेद्ब्राह्मणान्शक्त्या मुच्यते व्याधिकिल्बिषैः । कृ- षी भोगी बहुधनो बहुधान्यश्च जायते' । वामनपुराणे । खरोष्ट्राश्वन- रा गावः शकटादिरजादिकम् । दातव्यं केशवप्रीत्यै मासि मा- र्गशिरे नरैः ॥

अथ पौषः । महाभारते 'प्रासादनगरादीनि गृहप्रावरणानि च । नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः' ॥

अथमाघः । विष्णुः । 'माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा- सघृतशर्करं ब्राह्मणान्भोजयित्वा दीप्ताग्निर्भवति' । भविष्योत्तरे ।

'पौर्णमास्याममायां वा प्रारभ्य स्नानमाचरेत् । त्रिंशद्दिनानि पुण्यानि मकरस्थे दिवाकरे । अप्रावृतशरीरस्तु यः कल्यं स्नानमाचरेत् । पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः' । वामनपुराणे । 'माघे मासि तिलाः शस्तास्तिलधेनुश्च दानतः । तूलेन्धनादयश्चान्ये माधवप्रीणनाय च' । स्नानमन्त्रः 'मकरस्थे रवौ माघे गोविन्दाच्युत माधव । स्नानेनानेन मे देव यथोक्तफलदो भवेतिसङ्क्षेपः ॥

अथ फाल्गुनः। स्कान्दे। 'एकभक्तन्तु कुर्वाणः फाल्गुने मासि नित्यशः। स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रियाः। वामनपुराणे । 'फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् । गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभैः ॥

अथागस्त्यार्घ्यविधिः । मात्स्ये । 'प्रत्यूषसमये विद्वान्कुर्य्यात्तस्योदये निशि । स्नानं शुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरे गृही । स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् । पञ्चरत्नसमायुक्तं घृतपात्रेण संयुतम् । नानाभक्ष्यफलैर्युक्तं ताम्रपात्रसमन्वितम् । अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदण्डम् । चतुर्भुजं कुम्भमुखे निधाय धान्यानि सप्तांकुरसंयुतानि । सकाशपुष्पाक्षतशुक्तियुक्तं मन्त्रेण दद्याद्विजपुङ्गवाय । उत्क्षिप्य लंबोदरदीर्घबाहुमनन्यचेता यमदिङ्मुखस्थः । श्वेतां च दद्याद्यदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्साम् । धेनुं बहुक्षीरवतीं प्रणम्य सवस्त्रघण्टाभरणां द्विजाय । आ सप्तरात्रादुदयेऽर्घ्यमस्य दातव्यमेतत्सकलं नरेण । यावत्समाः सप्तदशाथवा स्युरथोर्द्ध्वमप्येव वदन्ति केचित्' । मन्त्रश्च । 'काशपुष्पप्रतीकाश वह्निमारुतस-

१ 'अगस्त्यः खनमानेति विप्रोऽर्घ्यं विनिवेदयेत्' इति भविष्योक्तेः ब्राह्मणस्य वैदिकमन्त्रेणैवार्घ्येऽधिकारः । सचायं मन्त्र ऋग्वेदे द्वितीयाष्टके चतुर्थाध्याये यथा—'अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम' ॥ इति ।

म्भव । मित्रावरुणयोः पुत्र कुम्भयोने नमोस्तुते । विन्ध्यवृद्धिक्षयकर मेघतोयविषापह । रत्नवल्लभ देवेश लङ्कावास नमोस्तु ते । वातापी भक्षितो येन समुद्रः शोषितः पुरा । लोपामुद्रापतिः श्रीमान्योऽसौ तस्मै नमोनमः । अनेन विधिना यस्त्वगस्त्यार्घ्यं निवेदयेत् । इन्द्रलोकमवाप्नोति रूपारोग्यसमन्वितः । सप्तैव लोकानाप्नोति सप्तार्घान्यः प्रयच्छति ॥

अथ चातुर्मास्यव्रतानि । भविष्योत्तरे । श्रीकृष्ण उवाच ।

चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि ।
स्त्री वा नरोवा मद्भक्तो धर्म्मार्थं सुदृढव्रती ॥
गृह्णीयान्नियमान्नेतान्दन्तधावनपूर्वकम् ।
तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक्पृथक् ॥
मधुरगीर्भवेद्राजन्पुरुषोगुडवर्ज्जनात् ।
तैलस्य वर्ज्जनात्पार्थ सुन्दराङ्गः प्रजायते ॥
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् ।
कट्वम्लतिक्तमधुरक्षारकाषायजान्रसान् ॥
यो वर्ज्जयेत्स वैरूप्यं दौर्गत्यं नाप्नुयात्क्वचित् ।
फलत्यागेन मतिमान्बहुपुत्रश्च जायते ॥
शाकमात्राशनाद्रोगी त्वपक्वादोऽमलो भवेत् ।
दधिदुग्धादिनियमात्स्वर्ग्गलोकं लभेन्नरः ॥
भूमौ संस्तरशायी च विष्णोरनुचरो भवेत् ।
सदा मुनिः सदा योगी मधुमांसविवर्ज्जनात् ॥
निराधिर्नीरुजो भोगी सुरामिषविवर्ज्जनात् ।
एकान्तरोपवासेन ब्रह्मलोके महीयते ॥
धारणान्नखरोम्णान्तु गङ्गास्नानं दिने दिने ।
मौनव्रती भवेद्यस्तु तस्याज्ञास्खलिता भवेत् ॥

भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् ।
नमो नारायणायेति जप्त्वानशनजं फलम् ॥
पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् ।
विष्णुपादाम्बुजस्पर्शात्कृतकृत्यो भवेन्नरः ॥
विष्णुदेवकुले कुर्य्यादुपलेपनमार्ज्जने ।
कल्पस्थायी भवेद्राजन्स नरो नात्र संशयः ॥
प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः ।
हंसयुक्तविमानेन सच विष्णुपदं व्रजेत् ॥
तीर्थाम्बुना हरेः स्नानान्निर्म्मलं देहमाप्नुयात् ।
पञ्चगव्याशनात्पार्थ चान्द्रायणफलं लभेत् ॥
नक्तभोजी समग्रन्तु तीर्थयात्राफलं लभेत् ।
अयाचितेन चाप्नोति वापीकूपक्रियाफलम् ॥
षष्ठकालेऽन्नभोज्येन स्वर्ग्गस्थायी नरो भवेत् ।
नित्यस्नायी नरो यस्तु नरकं न स पश्यति ॥
भोजनं वर्ज्जयेद्यस्तु स स्नानं पौष्करं लभेत् ।
पर्णेषु योनरो भुङ्क्ते कुरुक्षेत्रफलं भवेत् ॥
शिलायां भोजनान्नित्यं प्रयागस्नानजं फलम् ।
यामद्वयं जलत्यागी न रोगैः परिभूयते ॥
एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः ।

मात्स्ये विशेषः ।

'आषाढादिचतुर्मासमभ्यङ्गं वर्ज्जयेन्नरः ।
भोजनोपस्करं दद्यात्स याति भवनं हरेः ॥
आषाढादिषु वै यस्तु वर्ज्जयेन्नखकर्त्तनम् ।
वृन्ताकं च चतुर्मासं मधुसर्प्पिर्घटान्वितम् ॥

कार्त्तिक्यां तत् पुनर्हैमं ब्राह्मणाय निवेदयेत् ।
स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतम् ॥
महाफलानि यस्त्यक्त्वा चतुर्मासं द्विजातये ।
हैमानि कार्त्तिके दद्याद् गोप्रदानसमं ततः ।
एतत्फलव्रतं नाम सूर्य्यलोकफलप्रदम् ॥

चातुर्मास्यव्रतं नित्यम् । यदाह महाभारते ।

वार्षिकांश्चतुरो मासान् वाहयेत्केनचिन्नरः ।
व्रतेन नोचेदाप्नोति कल्मषं वत्सरोद्भवम् ॥

तथा । वार्षिकांश्चतुरो मासान्व्रतं किञ्चित्समाचरेत् ।
असम्भवे तुलार्के च कर्त्तव्यं तत्प्रयत्नतः ॥

एतद्व्रतोपक्रमे मन्त्रावाह सनत्कुमारः ॥

'इदं व्रतं मयादेव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥
गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे म्रियाम्यहम् ।
ततो भवतु संपूर्णं त्वत्प्रसादाज्जनार्द्दन' ॥

महाभारते। चतुर्द्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।
कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥

चतुर्द्धा एकमादिप्रकारचतुष्टयेनेति ।

श्रीविश्वंभरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।
मुक्तकनियमव्रतनिर्णयनामाभूत्पञ्चमोद्धारः ॥ ५ ॥

अथ षष्ठे समुद्धारे संक्रान्त्यादित्रयं मया ।
निर्णीयते सप्तमे तु श्राद्धं निर्णेष्यतेऽखिलम् ॥

संक्रान्त्यादित्रयम् संक्रान्तिर्मलमास उपरागश्चेति । तत्र संक्रान्तिर्नामसूर्य्यस्य पूर्वराशिपरित्यागेन राश्यन्तरगमनम् । सा च द्वादशसु मासेषु द्वादशविधा माघतोगणयेत् । अयनविषुवद्विष्णुपदीषडशीतयः । पुनरेवं श्रावणत इति । वृद्धवसिष्ठः । 'अयने विषुवे द्वे च चतस्रः षडशीतयः । चतस्रो विष्णुपद्यस्तु संक्रान्त्योद्वादश स्मृताः । मृगकर्कटसंक्रान्ती द्वे उदग्दक्षिणायने । विषुवे द्वे तुलामेषौ गोलमध्ये ततोपराः' । मृगो मकरः । गोलं चलनम् । अयनविषुवयोर्गोलमध्य इत्यर्थः ॥ ज्योतिर्वसिष्ठः । 'वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः । एतद्विष्णुपदं नाम विषुवादधिकं स्मृतम् । कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः । षडशीतिमुखाः प्रोक्ता षडशीतिगुणाः फलैः' इति । पुलस्त्यः ॥ 'अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च कुर्वीत पिण्डनिर्वपणादृते ॥ अयने कोटिगुणितं लक्षं च विषुवे फलम् । षडशीत्यां सहस्रं तु फलं विष्णुपदीषु च' । शातातपः । 'सूर्य्यस्य संक्रमे पुण्ये न स्नायाद्यदि मानवः । सप्तजन्मनि रोगी स्याद्दुःखभागी च जायते ॥ संक्रान्त्यां यानि दत्तानि हव्यकव्यानि मानवैः । तानि तेभ्यो ददात्यर्कः सप्तजन्मसु निश्चितम्' । स्मृत्यन्तरे विशेषः । 'मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ । षडशीतिमुखेऽतीते तथोदगयने च भूरिफलम्' ।

संक्रान्तिनिर्णयः ।

अथ संक्रान्तेः सूक्ष्मकालत्वात्कर्म्मानर्हतया पुण्यकालमाह वृद्धवसिष्ठः । 'संक्रान्तिसमयः सूक्ष्मः दुर्ज्ञेयः पिशितेक्षणैः । तद्योगाच्चाप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रकाः' । इदं

सामान्यं, विशेषमाह स एव 'अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः पराः । वर्तमाने तुलामेषे नाड्यस्तूभयतो दशेति । माधवीये चिन्तामणौ तु विशेषः । 'त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः । षडशीत्यां तु दशैवोत्तरा नाड्य इति लिखितम्, तत्तु । 'पुण्यायां विष्णुपद्यां तु प्राक्पश्चादपि षोडश । षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिका' इति वसिष्ठवचनेन विरुध्यते इति चेन्न । चतसृणां षडशीतीनामेकैकस्याः पञ्चदश नाड्यः पुण्याः, एवं मिलित्वा षष्टिसंख्याका भवन्तीत्यभिप्रायात् । न च संक्रान्तिसामान्यविषयत्वेनाधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रा इत्युक्तम्, वाक्यान्तरेषु तु दशषोडशादिनाडीनां पुण्यत्वमुक्तमिति विरोध इति वाच्यम् । त्रिंशन्नाडीनां पुण्यत्वं तदपेक्षया षोडशनाडीनां पुण्यतरत्वं तदपेक्षया दशनाडीनां पुण्यतमत्वमित्यभिसंधेरिति । यदाह वसिष्ठः । 'या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमा इति' । वृद्धवसिष्ठो विशेषमाह 'अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् । रात्रौ संक्रमणे पुण्यं दिनार्द्धं स्नानदानयोः । अर्द्धरात्रादधस्तस्मिन् मध्यान्हस्योपरि क्रिया । उदूर्ध्वं संक्रमणे चोदूर्ध्वमुदयात्प्रहरद्वयम्' । यदार्द्धरात्रे संक्रान्तिस्तदा दिनद्वयं पुण्यम् । यदाह वृद्धवसिष्ठः । 'संक्रमस्तु निशीथे स्यात्पञ्यामाः पूर्वपश्चिमाः । संक्रान्तिकाले विज्ञेयास्ततस्नानादिकं चरेत्' । ज्योतिर्वसिष्ठः । 'पूर्णे चैवार्द्धरात्रे तु यदा संक्रमते रविः । तदा दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ' । मकरकर्कटयोस्तु विशेषमाह वृद्धगार्ग्यः । 'यद्यस्तमयवेलायां मकरं याति भास्करः । प्रदोषे चार्द्धरात्रे च स्नानं दानं परेहनि । अर्द्धरात्रे तदूदूर्ध्वं वा संक्रान्तौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः' । भविष्योत्तरे । 'मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः । प्रभाते

वा निशीथे वा कुर्य्यादहनि पूर्वतः । कार्म्मुकं च परित्यज्य मृगं संक्रमते रविः । प्रदोषे वार्द्धरात्रे वा स्नानन्दानं परेहनि' । यत्तु । 'आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् । अर्द्धरात्रे व्यतीते तु विज्ञेयमपरेहनि' । अस्यार्थः । यद्यर्द्धरात्रे तत्पूर्वदिनतिथ्या अभिन्ना तिथिर्भवति तदा पूर्वदिनं पुण्यं, भिन्नायां तिथावर्द्धरात्रे व्यतीते च परदिनं पुण्यमिति । देवीपुराणे । 'आसन्नसंक्रमे पुण्यं दिनार्द्धं स्नानदानयोरिति विशेषवचनम् । तन्मकरकर्कटव्यतिरिक्तविषयं । हेमाद्रिस्तु वृद्धगार्ग्यभविष्योत्तरवचनान्यनादृत्य 'अर्द्धरात्रे कुलीरश्चेत्पुण्यं पूर्वमहर्भवेत् । यद्यर्द्धरात्रे मकरः परं पुण्यं प्रकीर्त्तितम्' इति स्वयं संजग्राह । अत्र 'रात्रौ स्नानं न कुर्वीत दानं चैव विशेषत' इति निषेधे प्रतिप्रसवमाह जाज्ञवल्क्यः । 'राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्य्यं निशि काम्यव्रतेषु च' ।

अथ संक्रान्तिप्रसङ्गान्नदीनां रजोदोष उच्यते । व्याघ्रपादः । 'सिंहकर्कटयोर्म्मध्ये सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्ज्जयित्वा समुद्रगाः' । भविष्योत्तरे विशेषः । 'आदौ कर्कटके देवि महानद्यो रजस्वलाः । त्रिदिनं च चतुर्थेह्नि शुद्धाः स्युर्जाह्नवी यथा' । प्रतापरुद्रीये विशेषः । 'याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितोभुवि । तासु प्रावृषि न स्नायादपूर्णे दशवासर' इति । स्मृतिसंग्रहे । 'तपनस्य सुता गङ्गा गौतमी च सरस्वती । रजसा नाभिभूयन्ते वेणाच नदसंज्ञिताः' । रजोदुष्टमप्यंबु गङ्गाज-

---

१ महानद्यश्च ब्राह्मे–गोदावरी भीमरथी तुङ्गभद्रा च वेणिका तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥ भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च विहस्ता च विन्ध्यस्योत्तरसंस्थिताः । द्वादशैतामहानद्यो देवर्षिक्षेत्रसम्भवा; ॥

लसङ्गात्पावनं भवति । तदुक्तं मात्स्ये । 'पुण्यांभसा समायोगाद्दुष्टमप्यम्बु पावनमिति । महाभारतेपि । 'अपवित्रमपि प्राप्य गङ्गां याति पवित्रताम्' इति सूर्य्यसेनीये । तन्न । 'तासु स्नानं न कुर्वीतेतिवचनान्नद्यधिकरणकस्नाननिषेधात् । रजोदुष्टा हि नद्यो नदुद्धृतं तज्जलं वचनाभावादिति व्याघ्रपादः । 'अभावे कूपवापीनामनपायिपयोभृताम् । रजोदुष्टे विपर्य्यासे ग्रामभोगी न बाध्यते । इति वचनं भोगः स्नानमेव निषिद्धम् प्रतिप्रसूयत इतिध्येयम् ॥

---

अथ मलमासनिर्णयः । मलमासश्चान्द्रः सितादिःसंक्रान्तिरहितः संक्रान्तिद्वययुतश्चेति । मलमासो द्विविधः, अधिमासः क्षयमासश्च । संक्रान्तिरहितोधिमासः, संक्रान्तिद्वययुतः क्षयमासइति । तदुक्तं काठकगृह्ये । 'यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा । मलमासः स विज्ञेयोमासः स्यात्तु त्रयोदशः' । यत्राभावास्याद्वयमध्ये न संक्रान्तिः संक्रान्तिद्वयं वा स मलमास इत्यर्थः । यदाहगार्ग्यः । 'अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितं । मलमासः स विज्ञेयोमासः श्राद्धाख्य उत्तरः । एकराशिगते सूर्य्ये यदा दर्शद्वयं भवेत् हव्यकव्यक्रियाहन्ता तदा ज्ञेयोधिमासकः' । नामव्यवस्थामाह वसिष्ठः । 'मासे सव्वँत्सरे चैव तिथिद्वैधं यदाभवेत् । तत्रोत्तरश्चोत्तमः स्यात्सूर्य्यस्य च मलिम्लुचः' । अयमधिमाससंज्ञोपि असंक्रान्तिमासे त्वाद्यो मलिम्लुचः उत्तरः शुद्धः । द्विसंक्रान्तमासस्तु मलमास एव नाधिमासः । तदाह सत्यः । 'राशिद्वयं यत्र मासे संक्रमेत दिवाकरः । नाधिमासो भवेदेष मलमासस्तु केवलम्' । द्विसंक्रान्तमासः क्षयाख्योपि । ज्योतिः शास्त्रे । 'असंक्रान्तिमासोधिमासः स्फुटं स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येधिमासद्वयञ्च । एकत्र मा-

सद्वितयं यदि स्याद्वर्षेऽधिकं तत्र परोऽधिमासः । त्रयोदशं तु श्रुति-राह वेदे चतुर्द्दशः क्कापि न चास्ति दृष्टः' । अयं च त्रयोदशो मासः त्रिंशमासादूर्द्ध्वं षट्त्रिंशमासात्पूर्वं भवतीति नियमः । ज्योतिः शास्त्रे 'त्रिंशत्षट्त्रिंशमासस्य ह्याभ्यन्तरयोर्द्वयोः । अधिमासोऽवकल्प्येत वादरायणकीर्त्तितः' । अनयोरेवासंक्रान्तस्य संसर्पकइति द्विसंक्रान्तस्याहर्प्पतिरिति च संज्ञान्तरम् । तदुक्तम् । 'दर्शद्वयं यदैकस्मिन्सौरे संसर्प्पकोभवेत् । अहर्प्पतिर्यदैकास्मिंश्चान्द्रे द्वौ संक्रमौ तदा । संसर्प्पाहर्प्पतीचेति द्विविधावधिमासकौ । मासौ पूर्वापरौ दुष्टौ परपूर्वौ शुभावहौ' इति । अत्रेदं बोध्यम् । स्फुटमानागत एवाधिमासः, न तु मध्यममान एव, तस्य श्रौतस्मार्त्तव्यवहारानुपयोगात् । तदुक्तम् । 'इन्द्राग्नी यत्र हूतेये मासादिः सम्प्रकीर्त्तितः । अग्नीषोमौ स्मृतौ मध्ये पर्य्याप्तौ पितृसोमकौ । तमतिक्रम्य तुर्यदा रविर्गच्छेत्कदाचन । आद्योमलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृत' इतिवचनाभ्यां शुक्लप्रतिपदादिदर्शान्तो भवतीति । अस्य नियतं भवनकालमाह 'द्वात्रिंशद्भिर्गतैर्मासैर्द्दिनैः षोडशभिस्तथा । चतुर्घटीयुतैर त्रपतत्येकोऽधिमासक' इति । अत्र वाक्ये दर्शान्तविवक्षाया कृष्णद्वितीयायां घटिकाचतुष्टयगतेधिमासोपक्रमः प्राप्तः । अतएवोक्तं 'असंक्रान्तिमासोधिमासः स्फुटं स्यादिति । स्फुटः स्फुटमानलब्धः । मध्यममानागतस्यासंक्रान्तस्य ज्योतिश्शास्त्र एवोपयोगः । अयं चाधिमासो न मध्यममानागताधिमासवन्नियतः । व्यभिचारस्य स्फुटत्वादिति । उक्तं हि । 'षष्ट्या तु दिवसैर्म्मासः कथितो वादरायणैः । पूर्वार्द्धन्तु परित्यज्य कर्त्तव्या उत्तरे क्रिया' इति । एवं द्विसंक्रान्तमासोपि शुक्लप्रतिपदादिः । यदा चायं भवति तदा वर्षमध्ये क्षयमासस्योभयत एकया संक्रान्त्याऽसंक्रान्तमासद्वयं भवतीति । तदुक्तम् । तदा वर्षमध्येऽधिमासद्वयं चेति । वर्षं चात्र पूर्वासंक्रा-

न्तादिकं चान्द्रमासद्वादशभिर्भवति न चैत्रादिकम् । चैत्रादिषट्-
के कदाचिदपि द्वितीयासंक्रान्त्यसम्भवात् । अयञ्च मासद्वयात्मक-
स्तदुक्तम् । 'दर्शान्तयोर्द्वयोर्म्मध्येऽधिमासश्चैत्रसंज्ञकः । द्वे संक्रान्ती-
क्षयः स्यात्स एकोपि ह्यात्मको भवेत्' इति । अत्रोत्तर एवासंक्रान्तो
मलिम्लुचम् । यदाह जाबालिः । 'एकस्मिन्नपि वर्षे च द्वौ मासाव-
धिमासकौ । पूर्वो मासः प्रशस्तः स्यादपरस्तु मलिम्लुचः' । त-
था । 'मासद्वयेऽब्दमध्ये वा संक्रान्तिर्न यदा भवेत् । प्रकृतस्तत्र पूर्व-
स्स्यादधिमासस्तथोत्तर' इति । यदाश्विनादिषट्के एकोऽसंक्रान्तः ।
अपरस्तदुत्तरचैत्रादिषट्के तदा पूर्वोऽसंक्रान्तः शुद्धः । तदुक्तं ब्र
ह्मसिद्धान्ते । 'चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत् । दृष्टाहि
सर्वशास्त्रेषु तस्मिन्मूर्त्तिस्त्रयोदशी' इति । तस्मिन्नुत्तरश्चैत्रादिषट्के त्र-
योदशी मूर्त्तिरधिमासरूपा । चैत्रादर्वागित्याश्विनपर्य्यन्तं बोध्य-
म् । अत एवोक्तं 'घटकन्यागते सूर्य्ये वृश्चिके चापके तथा । मकरे
वाथ कुम्भेच नाधिमासो विधीयते । मासः कन्यागते भानावसं-
क्रान्तो भवेद्यदि । दैवं पित्र्यं तथा कर्म्म तुलास्थे कर्त्तुरक्षयम्'
इति सङ्क्षेपः ॥

अथाधिमासकार्य्याकार्य्यनिर्णयः । काठकपरिशिष्टे । 'म-
लेऽनन्यगतिं[1] नित्यां कुर्य्यान्नैमित्तिकीं क्रियां' । बृहस्पतिः । 'नि-
त्यनैमित्तिके कुर्य्यात्प्रयतः सन्मलिम्लुचे । तीर्थश्राद्धं गजच्छायां
प्रेतश्राद्धं तथैव च' । यमः । 'गर्भे वार्द्धुषिके भृत्ये श्राद्धकर्म्मणि
मासिके । सपिण्डीकरणे नित्ये नाधिमासं विवर्ज्जयेत् । तीर्थस्नानं
जपो होमो यस्तु व्रीहियवादिभिः । जातकर्म्मान्तकर्म्माणि नव-
श्राद्धं तथैव च । मघात्रयोदशी श्राद्धं श्राद्धान्यपि च षोडश ।

१ नविद्यते अन्या आचरणरूपात् गतिर्यस्याः सा तथा ताम्, तथा
च यस्या अन्यस्मिन् मासे करणेऽपि न सम्पूर्णतासिद्धिस्ताम् ॥

चन्द्रसूर्य्यग्रहे स्नानश्राद्धदानजपादिकम् । कार्य्याणि मलमासेपि नित्यं नैमित्तिकं तथा' । अत्र तीर्थस्नानमपूर्वतीर्थस्नानभिन्नम् । 'मलमासेप्यनावृत्ततीर्थयात्रां विवर्ज्जयेत्' इति वचनात् । नैमित्तिकं तु पूर्वत्र परत्र वा यदैव निमित्तं सम्पद्यते तदैव कार्य्यम् । तदाह गभस्तिः 'जातकर्म्मणि यच्छ्राद्धं नवश्राद्धं तथैव च । ग्रहणे पुंसवादौ च तत्पूर्वत्र परत्र वा' । पूर्वत्र परत्र वा मासे, निमित्तवशादितिशेषः । मात्स्ये । 'चन्द्रसूर्य्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेपि देयं स्याद्दत्तमक्षयकारकम्' । मरीचिः । 'योगे चालभ्य[1]योगेपि सीमन्ते पुंसवे तथा । यद्दानादिकमुद्दिष्टं पूर्वत्रापि न दुष्यति' । व्यासः । 'श्रौतस्मार्त्तक्रिया याश्च द्वादशे मासि कीर्त्तिताः । त्रयोदशे तु ताः सर्वाः राक्षस्यः परिकीर्त्तिताः' । एतत्काम्येष्टिविषयम् । यदुक्तं गृह्यपरिशिष्टे । 'अवषट्कारहोमाश्च पर्व चाग्रयणं तथा । मलमासेपि कर्त्तव्याः काम्या इष्टीर्विवर्ज्जयेत्' । अवषट्कारहोमा अग्निहोत्रोपाशतवैश्वदेवाद्याः । पर्व दर्शपौर्णमासेष्टिः पार्वस्थालीपाकश्च । आग्रयणं नवान्नेन क्रियमाणेष्टिः, सा चापदि पुरातनान्नाभावे । नवान्न भोजनार्थं कर्त्तव्या नत्वनापदि । मात्स्ये । 'दर्शे चाहरहः श्राद्धं दानञ्च प्रतिवासरम् । गोभूतिलहिरण्यानां मासेपि स्यान्मलिम्लुचे' । ऋष्यशृङ्गः । 'सम्वँत्सरातिरेकेण मासो यः स्यान्मलिम्लुचः । तस्मिंस्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसङ्क्षये' । अयं निषेधो दार्शिककाम्यश्राद्धविषयः । यदाह जाबालिः । 'नित्यं नैमित्तिकं चैव श्राद्धं कुर्य्यान्मलिम्लुचे । तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन' ।

मलमासमृताना वार्षिकम् कार्य्यं मलमासमृतानां तु मलमासे प्रत्याब्दिके प्राप्ते मलमास एव न शुद्धे । तदाह भृगुः । 'मलमासमृतानान्तु यच्छ्राद्धं प्राति-

---

१ अलभ्ययोगेऽर्धोदयपद्मकादियोगे ।

वत्सरम् । मलमासे तु तत्कार्यं नान्येषान्तु कदाचन’ । तुशब्द एवार्थे । सत्यतपाः । ‘वर्षे वर्षे तु यच्छ्राद्धं मृताहे तन्मलिम्लुचे । कुर्य्यात्तत्र प्रमीतानामन्येषामितरत्रतु’ । वृद्धवसिष्ठः । ‘श्राद्धीयाहनि सम्प्राप्ते अधिमासोभवेद्यदि । मासद्वयेपि कुर्वीत श्राद्धमेवं न दुष्यति’ । व्यासः । ‘षष्टिभिर्द्दिवसैर्मासः कथितो वादरायणैः । उत्तरे देवकार्य्याणि पितृकार्य्याणि चोभयोः’ । इदं वचनद्वयं मासिकादिश्राद्धविषयं, तदुक्तं स्मृतिचन्द्रिकायाम् । ‘यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम् । मन्वादिकं तैर्थिकं च कुर्य्यान्मासद्वयेपि वा’ । आपरपक्षिकमाश्विनापरपक्षीयभिन्नं सर्वमासकृष्णपक्षीयम् । ‘वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् । राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते’ इति । ‘महालयाष्टकाश्राद्धोपाकर्म्माद्यपि कर्म्म यत् । स्पष्टमासविशेषाख्याविहितंवर्जयेन्मले’ इति च भृगुपरिशिष्टवाक्याभ्यां महालयश्राद्धस्य मलमासे निषेधात् । वसिष्ठः । ‘असंक्रान्तेपि कर्त्तव्यमाब्दिकं प्रथमन्द्विजैः । तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा’ । सपिण्डीकरणमब्दे पूर्णे यत्क्रियते तदत्र ग्राह्यम् ।

अथाधिमासे वर्ज्याणि । परिशिष्टे । ‘सोमयागादिकर्म्माणि नित्यान्यपि मलिम्लुचे । महालयाष्टकाश्राद्धोपाकर्म्माद्यपि कर्म्म यत् । स्पष्टमासविशेषाख्याविहितं वर्ज्जयेन्मले’ । स्पष्टमासेति मासविशेषनाम्ना यद्विहितं कर्म्म वैशाखे कार्य्यमित्यादिकं मलिम्लुचे वर्ज्जयेदित्यर्थः । मनुवृहस्पती । ‘अग्न्याधानं प्रतिष्ठाञ्च जपदानव्रतानि च । देवव्रतवृषोत्सर्ग्गचूडाकरणमेखलाः । माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत्’ । वृषोत्सर्ग्गः काम्य एव नत्वेकादशे क्रियमाणः । तस्य नैमित्तिकत्वात् । ‘बाले वा यदि वा वृद्धे शुक्रे वास्तङ्गते गुरौ । मलमास इवैतानि वर्ज्जयेद्देवदर्शनम्’ । देव-

दर्शनमपूर्वं। तदाह गार्ग्यः। 'अपूर्वदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे। मलमासेप्यनावृत्ततीर्थयात्रां विवर्ज्जयेत्'। शातातपः। 'अस्तङ्गते गुरौ शुक्रे क्षीणे बाले मलिम्लुचे। व्रतारम्भापवर्गञ्च न कुर्य्यान्मौञ्जिबन्धनम्'। गार्ग्यः। 'नवान्नप्राशनं चौलं विवाहं मौञ्जिबन्धनम्। निष्क्रमं जातकर्म्माणि काम्यं वृषविसर्ज्जनम्। अस्तङ्गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे। उद्यापनमुपारम्भं व्रतानां नैव कारयेत्'। नामेतिस्वकाले चेदकृतं तन्न कार्य्यम्। 'नामकर्म्म च जातेष्टिं यथाकालं समाचरेत्। अतीपातेपि कुर्वीत प्रशस्ते मासि पुण्यदम्' इति गार्ग्यात्। अतीपाते मलमासादौ न पापद्यमित्यर्थः। वसिष्ठः। 'वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म्म यत्। न कुर्यान्मलमासेऽपि महादानव्रतानिच' इति। मरीचिः। 'गृहप्रवेशगोदानस्थानाश्रममहोत्सवम्। न कुर्य्यान्मलमासेपि गुरुशुक्रे तथास्तगे'। मात्स्ये। 'आधानयज्ञकर्म्माणि प्रायश्चित्तव्रतानि च। न कुर्य्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे'। स्मृतिसंग्रहे। 'आरम्भं दर्शपूर्णेष्ट्योरग्निहोत्रस्य चादिमम्। प्रतिष्ठारामकूपादि मलमासे विवर्ज्जयेत्'। ज्योतिषे। 'उद्यानचूडाव्रतबन्धदीक्षा विवाहयात्रा च वधूप्रवेशः। तडागकूपत्रिदशप्रतिष्ठा वृहस्पतौ सिंहगते न कुर्य्यात्'। वायवीये। 'गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः। अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः। न त्यक्तव्यं गयाश्राद्धं सिंहस्थेपि वृहस्पतौ'। नच प्राप्तगयस्यैव श्राद्धमनिषिद्धम्, यात्रैव तु निषिद्धेतिवाच्यम्। 'अधिमासे च जन्मर्क्षे अस्तेच गुरुशुक्रयोः। तीर्थयात्रा न कर्त्तव्या गयागोदावरीं विना' इतिवचने गयायात्राया अनिषेधादिति।

अथ मलमासव्रतम्। प्रतापमार्त्तण्डे।

अधिमासे तु सम्प्राप्ते द्वादशी वाथ पूर्णिमा।
व्यतीपातदिने चापि किञ्चिद्दानं महाफलम्॥

सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
तत्फलं समवाप्नोति विष्णुलोके महीयते ॥
तस्योक्तदिवसे दानं विष्णुप्रीत्यै विधीयते ।
आज्यपक्वं गुडैर्युक्तं त्रयस्त्रिंशदपूपकम् ॥
कांस्यपात्रे विनिःक्षिप्य शक्तितो दक्षिणान्वितम् ।
उपानच्छत्रसंयुक्तं विप्राय विनिवेदयेत् ॥
कलाकाष्ठादिरूपेण यो नित्यं वर्त्तते हरिः ।
गृहाण विप्ररूपेण तस्मै कालात्मने नमः ॥
यस्य हस्ते गदाचक्रं गरुडो यस्य वाहनम् ।
शङ्खः करतले पद्मं स मे विष्णुः प्रसीदतु ॥
अधिमासे तु सम्प्राप्ते वस्त्रादिकमनन्तकम् ।
दानं गृहाण सर्वात्मन्व्रतसम्पूर्त्तिसिद्धये ॥
साज्यश्च गुडसंयुक्तं त्रयस्त्रिंशदपूपकम् ।
प्राणिनां प्रीणनार्थाय तस्मै कालात्मने नमः ॥
कुरुक्षेत्रमिदं क्षेत्रं साक्षाद्विष्णुरयं द्विजः ।
समादत्तमिदं सर्वं गृहाण पुरुषोत्तम ॥
अधिमासे तु सम्प्राप्ते पात्रयुक्तं जनार्दनम् ।
उद्दिश्यापूपदानेन स मे विष्णुः प्रसीदतु ॥
येनाक्रान्तास्त्रयो लोका दानवाश्च वशीकृताः ।
शरण्यः सर्वभूतानां स मे विष्णुः प्रसीदतु ॥
एतेमन्त्राः । इति पद्मपुराणीयं विधानम् ।

अथ ब्रह्माण्डपुराणीयं उमामहेश्वरयोः सम्वाँदे अप्सरसां दुर्व्वाससा दत्तशापानां कथाप्रसङ्गेनैतद्व्रतकथनम् ॥

'मासेऽधिके सदा देवि स्थाणुः पूज्यः सुरासुरैः ।
यैरर्च्चितं स्थिरं लिङ्गं चलं वा पृथुलोचने ॥

मलिम्लुचे मदीयं वा मासमेकं वरानने ।
वसन्ति ते मम पुरे यावत्कल्पः समाप्यते ॥
अपूज्ये पूजयेद्देवं सर्वकामफलं लभेत् ।
अपूज्ये मलमासे । तत अप्सरसामुपाख्यानम् ॥
इष्टान् कामानवाप्नोति मासं सम्पूज्य शङ्करम् ।
मलिम्लुचे सदा देवि पुत्रपौत्रयुतो भवेत् ॥
लक्ष्मीवानायुरुत्तीर्णः शिवलोके महीयते ॥
अवैधव्यं लभेन्नारी गोसहस्रफलं लभेत् ।
नारी वा पुरुषो वापि कुमारी विधवाथवा ॥
यं यं कामयते कामं तं तं पूरयते नृणाम् ।
तत्र स्थाणुमूर्त्तौ शिवस्योमासहितस्य पूजा आवाहनाद्युपचारैः ॥
एकभक्तेन कर्त्तव्यं मासमेकं यतव्रतम् ।
त्रयस्त्रिंशत्प्रदातव्यं वैणवं मृण्मयं च यत् ॥
सोपस्करं फलयुतं नृणां सौभाग्यदं पदम् ।
समाप्ते तु व्रते पूर्णे जागरं पार्वतीपुरः ॥
गीततूर्य्यनिनादैश्च क्षपयेच्छर्वरीमुखम् ।
उद्देष्टारं सपत्नीकं पूजयेद्यत्नतो गुरुम् ॥
प्रतिपच्छुक्लपक्षाच्च यावत्कृष्णचतुर्द्दशि ।
एकभक्तेन कर्त्तव्यं पश्चाद्व्रतसमापनम् ॥
रुद्रयामलेपि । उमाशङ्करपूजनम् । दुर्वासा उवाच ।
श्रूयतां मलमासस्य विधानं कथयामि वः ॥
यस्य श्रवणमात्रेण मुच्यते पापकञ्चुकात् ।
मलमासमनुप्राप्य शुक्लपक्षे तथापरे ।
तीर्थे वा यदि वा गेहे व्रतं कार्य्यं नरोत्तमैः ॥
प्रतिपद्दिवसेऽष्टम्यां पञ्चम्यां वा प्रयत्नतः ।

एकादश्यां च भूतायां चतुर्वर्ग्गफलप्रदम् ॥
सन्ध्यायां नियमं कुर्य्याद्दन्तधावनपूर्वकम् ।
प्रातरुत्थाय मेधावी स्नात्वावश्यकमाचरेत् ॥
तदनुमतिमामेकां सुवर्णस्य शिवाकृतिम् ।
कारयेद्वित्तमानेन स्नापयेच्च यथाविधि ॥
पञ्चामृतैस्ततो वस्त्रयुग्मेन परिवेष्टितम् ।
ताम्रपात्रोपरिन्यस्य स्थापयेत्कलशे सुधीः ॥
जलपूर्णे सरत्ने च पूगीफलसमन्विते ।
भूषिते पुष्पमालाभिः सप्तधान्योपरिस्थिते ॥
तत्र प्रतिष्ठां कुर्वीत स्वस्तिवाचनपूर्वकम् ।
चन्दनेन सुगन्धेन पुष्पैः कालोद्भवैस्तथा ॥
धूपदीपैः सनैवेद्यैस्ताम्बूलैश्च फलैः शुभैः ।
अर्चयित्वार्प्पयेत्तत्र छत्रोपानत्कमण्डलुम् ॥
स्वस्थस्तदनु विप्रस्य सकाशाच्छृणुयात्कथां ।
अथाचार्य्यं समभ्यर्च्य तस्मै देयं समर्प्पयेत् ॥
परिच्छदयुतं पश्चाद्गोधूमान्नं सशर्करम् ।
सघृतं भोजयेद्विप्रान् तेभ्यो दद्याच्च दक्षिणाम् ॥
गृहीत्वा ऽच्छिद्रवाक्यानि ततो भोजनमाचरेत् ।
अक्षारलवणं बालकुटुम्बपरिवेष्टितः ॥
एवं कुर्वन् व्रतं मर्त्यो मुच्यते पापसञ्चयात् ।
तस्मान्नरैः प्रयत्नेन कर्त्तव्यं पापभीरुभिः ॥
अब्दत्रयार्ज्जितं पुण्यमकृतं हन्ति नान्यथा ।
इति श्रीरुद्रयामलस्य मलमासनिर्णयः समाप्तः ।

अथोपरागनिर्णयः । उपरागो नाम पर्व्वप्रतिपत्सन्धौ राहुणा सूर्य्याचन्द्रमसोर्ग्रासः । तदुक्तं वृद्धगार्ग्येण । 'पूर्णिमाप्रतिपत्सन्धौ राहुः संपूर्णमण्डलं । ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे' । ब्रह्मसिद्धान्ते । 'यावत्कालः पर्व्वणोन्ते तावत्प्रतिपदादितः । रवीन्दुग्रहणेऽनेहाः स पुण्यो मिश्रणाद्भवेत् । महानदीषु वान्यासु स्नानं कुर्य्याद्यथाविधि' । अत्र पर्व्वान्तिमोभागः स्पर्शकालः, प्र-

ग्रहणेस्नानविधिः

तिपदादिमो भागो मोक्षकालः, एतावन्मिश्रितोऽनेहाः कालो ग्रहणे पुण्यतम इत्यर्थः । वसिष्ठः । 'इन्दोर्लक्षगुणं पुण्यं रवेर्द्दशगुणं स्मृतम् । गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्द्दश । गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् । गङ्गास्नानं तत्फलं स्याद्राहुग्रस्ते निशाकरे । दिवाकरे पुनस्तद्वद्दशसंख्यमुदाहृतम्' । अत्र गङ्गाशब्देन वेणागोदावरीजाह्नव्यस्तिस्रोपि ग्राह्याः, तदाह ब्रह्मपुराणे । 'तिस्रो नद्यो महापुण्या वेणा गोदा च जाह्नवी । गां हरीसां(?) गता प्राप्ता गङ्गा इति च कीर्त्तिता' । गङ्गाद्यभावे 'वापीकूपतडागेषु गिरिप्रस्रवणेषु च । नद्यां नदे देवखाते सरसीषूद्धृताम्बुनि । उष्णोदकेन वा स्नायाद्ग्रहणे चन्द्रसूर्य्ययोः' । अत्रोष्णोदकस्नानमातुरविषयम् । तदाह व्याघ्रः । 'आदित्यकिरणैः पूतं पुनः पूतं च वह्निना । अतो व्याध्यातुरः स्नायाद् ग्रहणे चन्द्रसूर्य्ययोः । राहुर्वै हस्तिरूपेण ग्रसते चन्द्रसूर्य्ययोः । राहुस्पर्शे ततः स्नात्वा दानादौ कल्पते नरः । चन्द्रसूर्य्यग्रहे स्नायात्सूतके मृतकेपि च । अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति' । महाभारते । 'सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने । अ-

ग्रहणेश्राद्धविधिः ।

कुर्व्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदति' । व्यासः । 'आपद्यनग्नौ तीर्थे च ग्रहणे चन्द्रसूर्य्ययोः । आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि' । तथा 'अन्नाभावे द्विजाभावे प्रवासे पु-

त्रजन्मनि। हेमश्राद्धं गृहे शूद्र आमं कुर्य्यात्सदैव हि'। विष्णुः। 'संध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः। तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्। भूमिर्ग्गावः सुवर्णं च धान्यं वा यद्यदीप्सितम्। तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता'। बौधायनः। 'अश्रोत्रियः श्रोत्रियो वा अपात्रं पात्रमेव वा। सविद्यो वाप्यविद्यो वा ग्रहणे दानमर्हति'। व्यासः। 'सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः। सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्य्ययोः'। अङ्गिराः। 'सर्वे वर्णाः सूतकेपि मृतके राहुदर्शने। स्नात्वा श्राद्धं प्रकुर्वीरन्नानन्त्याय तदिष्यते। सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते'। व्याघ्रः। 'स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके। श्रौतकर्म्मणि तत्कालस्नानाच्छुद्धिमवाप्नुयात्'। व्यासः। 'त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा। मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः। अत एते त्रयः कालाः श्रेष्ठमध्यकनिष्ठकाः'। तथा। 'ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते। मुच्यमाने भवेद्दानं मुक्ते स्नानं पुनर्भवेत्'। मार्कण्डेयः। 'चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे। अक्षयं कथितं पुण्यं तत्रार्के तु विशेषतः'। अत्र दृशिश्चाक्षुषज्ञानवचनो न ज्ञानसामान्यमभिधत्ते। तथा सति रात्रौ सूर्य्यग्रहे दिवा चन्द्रग्रहे च शास्त्रतोऽवगते स्नानादिकं प्रसज्येत। नचेष्टापत्तिः 'सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहो भवेत्। तत्र स्नानं न कुर्वीत दद्याद्दानं नच क्वचित्' इतिषट्त्रिंशन्मतवचनात्। महाभारते। 'अर्वाग्यामत्रयादिन्दोर्ग्रहणे भुक्तिमाचरेत्। तूर्य्ययामादधश्चैव राहुग्रस्ते दिवाकरे'। वृद्धवसिष्ठः। 'सूर्य्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना'।

ग्रहणे भोजननियमः

मात्स्येविशेषः। 'अपराह्ने न मध्याह्ने मध्याह्ने न तु सङ्गवे। भुञ्जीत

चेव सङ्गवे स्यान्न पूर्वं भुजिमाचरेव' ॥ अपराह्ने चेदुपरागः स्यान्न मध्याह्ने भुञ्जीतेत्यादिरर्थः । इदं बालादिविषयम् । वसिष्ठः—'ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः भुञ्जीतावर्त्तनात्पूर्व्वं पश्चिमे प्रथमादधः' । प्रथमाद्रात्रिप्रथमयामात् । पश्चिमे रात्रिपश्चिमयामे । प्रथमाव रात्रिप्रथमयामात् । मार्क्कण्डेयः । 'चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्ग्गवम् । ग्रहणं तु भवेत्तस्मिंस्तत्पूर्व्वं भोजनं नरः । नाचरेत्संग्रहं चैव तथैवास्तमुपागते । यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु । मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा ततः परम्' । दृष्ट्वेति ज्ञानोपलक्षणम् । विष्णुधर्म्मोत्तरे । 'अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्यग्रहो यदा । मुक्तिं दृष्ट्वातु भोक्तव्यं स्नानं कृत्वा ततः परम्' । इदमपि ग्रस्तास्तपरम् । वृद्धगौतमः । 'चन्द्रसूर्य्यग्रहे नाद्यात्तस्मिन्नहनि पूर्व्वतः । राहोर्व्विमुक्तिं विज्ञाय स्नात्वा कुर्व्वीत भोजनम्' । अत्र विज्ञायेति न दृष्ट्वा । तेन मेघाच्छादनेप्युदयं ज्ञात्वा भुञ्जीतेत्यर्थः । प्रतापमार्त्तण्डे । 'सूर्य्येन्दुग्रहणं यावत्तावत्कुर्य्याज्जपादिकम् । न स्वपेन्नच भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः । मुक्तयोश्च कृतस्नानः पश्चाद्भुञ्ज्यात्स्ववेश्मनि' । अनेन परान्नभोजननिवृत्तिः । 'अस्तोदये विधोः पूर्व्वं नाहर्भोजनमाचरेव' । शातातपः । 'नाद्यात्सूर्य्यग्रहाव पूर्वमह्नि सायं शशिग्रहात् । ग्रहकाले च नाश्नीयाव स्नात्वाश्नीयात्तु मुक्तयोः । मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा' । नारदः । 'संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे । चन्द्रसूर्य्यग्रहे चैव न कुर्य्यात्पुत्रवान् गृही' । तथा । 'चन्द्रसूर्य्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः । अमुक्तयोरस्तगयोः

---

१ विशेषोनिगदे—निद्रायां जायते रोगो मूत्रे दारिद्र्यमाप्नुयात् । पुरीषे कृमियोनिः स्यान्मैथुने ग्रामशूकरः ॥ अभ्यङ्गे च भवेत्कुष्ठी भोजनेस्यादधोगतिः । वञ्चने च भवेत्सर्प्पो वधे च नरकं व्रजेत् । इति ।

स्नात्वा दृष्ट्वापरेऽहनि' । विष्णुः । 'चन्द्रसूर्य्योपरागेतु नाश्नीयाद्वि-मुक्तयोः । अस्तञ्च गतयोर्भुञ्ज्यादृदृष्ट्वा स्नात्वापरेहनि' । यच्च । 'सायाह्ने सङ्गवेश्नीयात्पराह्णे सङ्गवादधः । मध्याह्ने परतो ऽश्नीयान्नोपवासो रविग्रहे' । तथा 'मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते । आकलय्य ततः कालं स्नात्वा भुञ्जीत वाग्यतः' । अत्राकलनज्ञानमात्रं नतु चाक्षुषः संग्रहश्च । 'काले यावति शास्त्रतः सुविदितोदृग्ज्ञानयोग्योपि वा, मोक्तः पुण्यकरो ग्रहोथ विफलोदेशान्तरस्थः सचेत् ।

समर्थस्य ग्रहणभोजने प्रायश्चित्तमाह कात्यायनः । 'चन्द्रसूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति । तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति' । व्यासः । 'सूर्य्यवारे रविग्रासः सोमवारे विधोर्ग्रहः । चूडामणिरितिख्यातस्तत्रानन्तफलं भवेत् । वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्य्ययोः । तत्पुण्यं कोटिगुणितं ग्रहे चूडामणौ भवेत्' । ग्रहणे त्वेकरात्राद्युपवासः काम्यस्तदुक्तं गालवेन । 'एकरात्रमुपोष्यैव ग्रहणे चन्द्रसूर्य्ययोः । कञ्चुकादिव सर्प्पस्य निवृत्तिः पापकोशतः । त्रिरात्रं योह्युपवशेद् ग्रहणे चन्द्रसूर्य्ययोः । स्नात्वा दत्वा च विधिवन्मोदते ब्रह्मणासह' इति ।

अथ यस्य जन्मराशौ जन्मर्क्षे वोपरागस्तस्य विधिरुच्यते । ज्योतिषे ।

होरायां गृह्यते यस्य नक्षत्रे वा निशाकरः ।
प्राणसन्देहमाप्नोति स वा मरणमृच्छति ॥
होरायां लग्नगे । मात्स्ये ।
यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः ॥
तस्य स्नानं प्रवक्ष्यामि मन्त्रौषधिसमन्वितम् ।
चन्द्रोपरागे संप्राप्ते कृत्वा ब्राह्मणभोजनम् ॥
संपूज्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः ।

पूर्व्वमेवोपरागस्य समानीयौषधादिकम् ॥
स्थापयेच्चतुरः कुंभानग्रतः सागरानिव ।
गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ॥
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ।
पञ्चगव्यं पञ्चरत्नं पञ्चत्वक् पञ्चपल्लवम् ॥
रोचनं पद्मकं शङ्खं कुङ्कुमं रक्तचन्दनम् ।
शुक्तिस्फटिकतीर्थाम्बुसितसर्षपगुग्गुलून् ॥
मधुकं देवदारुं च विष्णुक्रान्तां शतावरीम् ।
बलां च सहदेवीं च निशाद्वितयमेव च ॥
एतत्सर्व्वं विनिक्षिप्य कुंभेष्वावाहयेत्सुरान् ॥
सर्व्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ।
सहस्रनयनस्तेऽसौ ग्रहपीडां व्यपोहतु ॥
मुखं यः सर्व्वदेवानां सप्तार्च्चिरमितद्युतिः ।
चन्द्रोपरागसंभूतामग्निः पीडां व्यपोहतु ॥
यः कर्म्मसाक्षी लोकानां धर्म्मो महिषवाहनः ।
यमश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ॥
रक्षोगणाधिपः साक्षान्नीलाञ्जनसमप्रभः ।
खड्गहस्तोऽतिभीमश्च ग्रहपीडां व्यपोहतु ॥
नागपाशधरो देवः सदा मकरवाहनः ।
स जलाधिपतिश्चन्द्रग्रहपीडां व्यपोहतु ॥
योसाविन्दुधरोदेवः पीनाकी वृषवाहनः ।
चन्द्रोपरागपापानि स नाशयतु शङ्करः ॥
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्ण्वर्करुद्राश्च दहन्तु मम पातकम् ॥
एवमावाहयेत्कुंभान्मन्त्रैरेतैश्च वारुणैः ।

एतानेव तथा मन्त्रान्स्वर्णपट्टे विलेखयेत् ॥
ताम्रपट्टेऽथवा लेख्यं नववस्त्रे तथैव च ।
मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः ॥
कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान् ।
गृहीत्वा स्नापयेद्गूढं भद्रपीठोपरिस्थितम् ॥
पूर्वोक्तैरेव मन्त्रैश्च यजमानन्द्विजोत्तमाः ।
अभिषेकं ततः कुर्य्युर्मन्त्रैर्वारुणसूक्तकैः ॥
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
आचार्य्यं वरयेत्पश्चात्स्वर्णपट्टं निवेदयेत् ।
आचार्य्ये दक्षिणान्दद्याद्गोदानं च स्वशक्तितः ॥
अतऊर्द्ध्वं ब्रह्मपूजां तदर्द्धेन विशेषतः ।
पूजयेद्वस्त्रगोदानैर्ब्राह्मणानापि शक्तितः ॥
गन्धमाल्यैर्धूपदीपैः पूजयेदिष्टदेवताम् ।
होमं चैव प्रकुर्व्वीत तिलैर्व्याहृतिभिस्ततः ॥
निवृत्ते ग्रहणे सर्वं ब्राह्मणेभ्यो विशेषतः ॥
दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितम् ।
सूर्य्यग्रहे सूर्य्यनामयुक्तान्मन्त्रांश्च कीर्त्तयेत् ॥
अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत् ।
न तस्य ग्रहणे दोषः कदाचिदपि जायते ॥

गूढमिति ग्रदणदर्शनं यथा न भवति तथा छत्रादिना व्यवधानं कुर्य्यादित्यर्थः । सूर्य्यसेनीये तु सकृद्ग्रहणं दृष्ट्वा तथा स्थातव्यं यथा न पुनर्ग्रहणदर्शनं सम्भवतीत्यर्थ उक्तः । स च सति वचने रमणीय इति सङ्क्षेपः ॥

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।
षष्ठः संक्रान्त्यादि-त्रयनिर्णयनामकोद्धारः ॥ ६ ॥
इति पूर्वार्द्धम् ॥

# अथोत्तरार्द्धम् ।

अथ श्राद्धप्रकरणमाह । तत्र श्राद्धस्वरूपमाह मरीचिः । 'प्रेतं पितरमुद्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते किञ्चित्तच्छ्राद्धं परिकीर्त्तितम्' । तच्च द्विविधमेकोद्दिष्टं पार्वणञ्चेति । त-

श्राद्धभेदाः त्रैकोद्दिष्टस्वरूपमाह कण्वः । 'एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टमुदीरितम्' । पार्वणस्वरूपमाह स एव । 'त्रीण्युद्दिश्य तु यत्ताद्धि पार्वणं मुनयो विदुः' । पार्वणमपि त्रिविधं नित्यनैमित्तिककाम्यभेदात् । तत्र नित्यममावास्यादिश्राद्धम् । यदाह विष्णुः । 'अमावास्या तिस्रोष्टकास्तिस्रोन्वष्टकाः प्रौष्ठपदे हेमन्तशिशिरयोरपरपक्षेषु माघी प्रौष्ठपदी महालयत्रयोदशी ब्रीहियवपाकौ चेति । 'एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः । श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते' । व्याघ्रपादः । 'न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्तीयते हि सः' । तथा । 'अमावास्याव्यतीपातपौर्णमास्यष्टकासु च । द्विजः श्राद्धमकुर्व्वाणः प्रायश्चित्तं किलार्हति' । एकोद्दिष्टं तु नित्यमेव, तदाह कात्यायनः । 'मृताहेऽहरहर्दर्शे श्राद्धं यच्च महालये । तन्नित्यमुदीरितं सद्भिर्न्नित्यवत्तद्विधानतः' । नैमित्तिकमाह गालवः । 'प्रेतश्राद्धं सपिण्डान्तं संक्रान्तिग्रहणेषु च । सव्वँत्सरोदकुम्भश्च वृद्धिश्राद्धं निमित्ततः' । काम्यमाह स एव । 'तिथ्यादिषु च यच्छ्राद्धं मन्वादिषु युगादिषु । अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम्' । केचित्पञ्चविधं श्राद्धमाहुः केपि द्वादशविधम् । तत्र सर्व्वेषां भेदानां त्रिष्वेवान्तर्भावान्न तानि प्रपञ्चितानि ॥

अथ श्राद्धकालानाह याज्ञवल्क्यः। 'अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः। व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः। श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः'। अत्र मार्ग्गादिपञ्चमासकृष्णाष्टम्योऽष्टकाः। तदुक्तं कालादर्शे। 'मार्ग्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने। कृष्णपक्षेषु पूर्व्वेद्युरष्टकान्वष्टकापरा'। ननु तिस्रोष्टका इति विष्णुसूत्रविरोध इति चेत्सत्यम्। विष्णुसूत्रं हि मार्ग्गपौषयोर्हेमन्तत्वेन माघफाल्गुनयोः शिशिरत्वेनैकत्वात्संग्रहेणोक्तम्, 'तिस्रोष्टका इति। तेन हेमन्ताष्टका शिशिराष्टका भाद्राष्टका चेति संगृह्य तिस्रोष्टकाः, त्रित्वसंख्याया अभिधाने किं कारणमिति चेत्। इदन्तु देवताविशेषे द्रव्यविशेषे च त्रित्वाभिधानमेवाष्टकायास्त्रित्वाभिधाने कारणं, तदुक्तं वायुपुराणे। 'पित्र्यदानाय मूलं स्युरष्टकास्तिस्र एव च। कृष्णपक्षे वरिष्ठा हि पूर्व्वा चैन्द्रीति भाष्यते। प्राजापत्या द्वितीया हि तृतीया वैश्वदेवकी। आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा। शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः'। पूर्व्वा मार्ग्गपौषयोरष्टमी। द्वितीया माघफाल्गुनयोः। तृतीयाभाद्रस्येत्यर्थः। आद्या हेमन्ताष्टमी, अन्या शिशिराष्टमी। तृतीया वर्षाष्टमीति त्रित्वसंख्या नानुपपन्ना। आश्वलायनस्तु चतस्रोऽष्टका आह। हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणां अष्टमीष्वष्टका' इति। गजच्छाया तु। 'यदेन्दुः पितृदैवत्ये हंसे चैव करास्थिते। त्रयोदशी गजच्छाया श्राद्धे पुण्यैरवाप्यते'॥

श्राद्धकालाः

अत्र मासङ्गिकाः श्राद्धप्रदेशा उच्यन्ते। विष्णुधर्म्मोत्तरे। 'दक्षिणप्रवणे देशे तीर्थादौ वा गृहेपि वा। भूसंस्का-

श्राद्धदेशाः

---

१ भूसंस्कारो याज्ञवल्क्येनोक्तः। 'भूशुद्धिर्मार्जनाद्दाहात् फालाद्गोक्रमणात्तथा। सेकादुल्लेखनाल्लेपाद् गृहे मार्जनलेपनात्' इति।

रादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः'। परकीयगृहनिषेधमाह यमः। 'परकीयप्रदेशे तु पितॄणां निर्व्वपेत्तु यः। तद्भूमिस्वामिपितृभिः श्राद्धकर्म्म विहन्यते'। परकीयप्रदेशाः परस्वीकृतगृहाः। तीर्थाद्यभावे गृहस्वामिपितृभ्योऽग्रभागं जीवते च गृहस्वामिने किञ्चिन्निष्क्रयरूपं दद्यात्। तदाह यमः। 'अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम्'। तीर्थादिषु भूस्वामिदानाभावः। तदुक्तं पुराणसमुच्चये। 'अटवी पर्वताः पुण्या नदीतीराणि यानि च। सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः'। तथा। 'वनानि गिरयो नद्यस्तीर्थान्यायतनानि च। देवखातं च गर्त्तश्च न स्वामी तेषु विद्यते'। क्षयाहे चान्द्रो मासो ग्राह्यः। 'आब्दिके पितृकार्य्ये च मासश्चान्द्रसमःस्मृत' इति वचनात्। यत्तु। 'यस्मिन् राशौ गते सूर्य्ये विपत्तिं याति मानवः। तद्राशावेव कर्त्तव्यं पितृकार्य्यं मृतेहनीति, तदधिमासमृतविषयम्। 'अधिमासमृतानां तु सौरं मानं समाश्रयेत्। स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु' इति वचनादिति॥

अथ श्राद्धकर्त्तुर्न्नियमाः। मरीचिः। 'श्राद्धीयाहे दशम्यां च द्वादश्यां व्रतवासरे। एकादश्यां व्यतीपाते तैलं मांसं विवर्ज्जयेत्'। गोभिलः। 'स्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्। निरामिषं सकृद्भोक्ता सर्व्वभुक्तजनं गृहे'। स्मृत्यर्थसारे। 'पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्। दानं प्रतिग्रहं होमं श्राद्धकृत्वष्ट वर्ज्जयेत्। दन्तधावनताम्बूले स्निग्धस्नानमभोजनम्। रत्यौषधपरान्नं च श्राद्धकृत्सप्त वर्ज्जयेत्'।

अथ क्रमपरिप्राप्तमेकोद्दिष्टन्निरूप्यते। तस्य मृताहकार्य्यत्वात्तत्स्वरूपमाह सूर्य्यसेनीये। 'मासपक्षतिथिस्पृष्टे यस्मिन्यो म्रियते ऽहनि। प्रत्यब्दन्तु तथाभूतं मृताहं तस्य तं विदुः'। क्षयाह-

एकोद्दिष्टनिर्णयः

तिथिरपराह्णव्यापिनी ग्राह्या, दिनद्वयेप्यपराह्णव्यापित्वेऽधिकापराह्णव्यापिनी ग्राह्या। उभयत्रापराह्णव्यापित्वे तु पूर्व्वैव सायङ्कालव्यापिनी ग्राह्या। अत्र वाक्यानि। 'अपराह्णः पितॄणां वै यापराह्णानुयायिनी। सा ग्राह्या पितृकृत्येषु न पूर्व्वाह्णानुयायिनी'। मरीचिः। 'ह्यपराह्णव्यापिनी स्यादाब्दिकस्य यदा तिथिः। महतीं तत्र तद्विद्धां प्रशंसन्ति महर्षयः'। साम्येन व्याप्तौ खर्वादिवाक्यान्निर्णयः। नारदः। 'दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्। पूर्व्वविद्धमकुर्व्वाणो नरकं प्रतिपद्यते'। उभयत्रापराह्णस्पर्शाभावे नरकं व्रजेत्। इदं द्वितीयदिनेऽपराह्णव्यापित्वे सति पूर्व्वदिने सायाह्ने न कार्य्यमित्येवं परम्। व्यासः। 'अह्नोस्तमयवेलायां कलामात्रापि या तिथिः। सैव प्रत्याब्दिके ग्राह्या नेतरा पुत्रहानिदा'। इदं कैमुतिकन्यायेन कलामात्रापि ग्राह्या किमुत त्रिमुहूर्त्तात्मकसायङ्कालव्यापिनीत्येवं परम्। सायं त्रिमुहूर्त्तव्यापित्वाभावे परैव कुतुपव्यापिनी ग्राह्या। तदाह गोभिलः। 'त्रिमुहूर्त्ता न चेद्ग्राह्या परैव कुतुपे हि सा। ननु 'प्रारभ्य कुतुपे श्राद्धं कुर्य्यादारौहिणं बुध' इत्यसङ्गतं सायङ्कालीनतिथेर्ग्राह्यत्वादिति चेत्सत्यम्। 'सा तिथिस्तदहो रात्रं यस्यामस्तमियाद्रविः। यत्रास्तं सविता याति पितरस्तामुपासत' इत्यादिवाक्यैरस्तगामितिथेः सम्पूर्णत्वविधानात्कुतुप एवारभ्य श्राद्धं कार्य्य मिति। तच्च क्षयाहश्राद्धं पित्रोरेकोद्दिष्टं पार्व्वणं वा यथादेशाचारं कुर्य्यात्। उभयविधायकवाक्यबलात्। वाक्यानि च यथाह यमः। 'सपिण्डीकरणा दूर्द्ध्वं प्रति संवत्सरं सुतैः। मातापित्रोः पृथक्कार्य्यमेकोद्दिष्टं मृतेऽहनि'॥ शातातपः—'सपिण्डीकरणं कृत्वा कुर्य्यात्पार्व्वणवत्सदा। प्रतिसम्वँत्सरं श्राद्धं छागले-

१ रौहिणो नवमोमुहूर्त्तः।

योदितो विधिः' । अत्र विज्ञानेश्वरस्वामिना ब्रीहियववद्विकल्प इत्युक्तम् । शङ्खः । 'अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्व्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन'। प्रचेताः 'दण्डग्रहणमात्रेण नैव प्रेतोभवेद्यतिः । अतः सुतेन कर्त्तव्यं पार्व्वणं तस्य सर्वदा' । तथा 'साग्निकस्य सुतैः कार्य्यं पार्वणं प्रतिवत्सरम् । निरग्निकसुतैः कार्य्यमेकोद्दिष्टं न पार्वणम्' ॥ तथा 'औरसः क्षेत्रजश्चैव कुर्य्यात् पार्वणमेवतु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश' इत्यादिवचनेषु सत्स्वपि मिताक्षराकारेण ब्रीहियववद्विकल्पः कथ मुक्त इति न बुध्यामहे, क्षयाहे पार्वणविधायकवचनानां साग्निकपरतया यतिपरतया अमावास्याप्रेतपक्षान्यतरमृतपरतया वा संकोचयितुं शक्यत्वादित्यस्माद्दक्षाणामुत्प्रेक्षा । शातातपः 'अनाद्यगर्भज्येष्ठोऽपि भ्राता सद्भिर्निगद्यते । कृते सपिण्डने तस्य नैव पार्वणमाचरेत्' । अनाद्यगर्भेत्यभिधानादाद्यगर्भज्येष्ठस्य भ्रातुः पितृवदेव पार्वणमेकोद्दिष्टं वा यथास्वकुलाचारं कुर्य्यादित्यवगम्यत इति निर्णयामृतकृतः । सुमन्तुः । 'यश्च मन्त्रप्रदाता स्याद्यश्च विद्यां प्रयच्छति । गुरू तावपि कुर्वीत तयोर्नैव तु पार्वणम्' । वृद्धगार्ग्यः । 'मातुः सहोदरो यश्च पितुः सहभवश्च यः । तयोश्चैव न कुर्वीत पार्वणं पिण्डनादृते' । वृद्धवसिष्ठः । 'सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते । भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च । मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्' । लौगाक्षिः । 'सर्वाभावे स्वयं पत्न्यः स्वभर्त्तृणाममन्त्रकम् । सपिण्डीकरणं कुर्य्युस्ततः पार्वणमेव च' । सुमन्तुः । 'यत्र पुत्रः स्थितः कर्त्ता न भवेद्धर्म्मकर्म्मणि । तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्व्वणं तथा' । अपुत्राणां पत्नीव्यतिरिक्ते कर्त्तरि एकोद्दिष्टमेव ।

'अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम्' इति वचनात्। स्त्रीणां विशेषमाह जातूकर्ण्यः। 'क्षयाहं वर्ज्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया। केचिदिच्छन्ति नारीणामन्यत्रापि महर्षयः'। अन्यत्र अन्वष्टकादिषु। तदुक्तम्। 'अन्वष्टकान्तथा वृद्धिं मातुः श्राद्धं मृतेऽहनि। एकोद्दिष्टं तथा त्यक्त्वा स्त्रीणां नान्यत्पृथग्भवेत्' इति। शातातपः। 'नान्दीमुखेन्वष्टकायां गयायां च मृतेहनि। पितामह्यादिभिः सार्द्धं मातुःश्राद्धं समाचरेत्'। कार्ष्णाजिनिः। 'अन्वष्टकायां वृद्धौ च गयायां च मृतेहनि। मातुः श्राद्धं पृथक्कुर्य्यादन्यत्र पतिना सह'। मातुरिति स्त्रीणामुपलक्षणम्। अन्वारोहणमृतायां विशे-

अन्वारोहणे विशेषः

षमाह लौगाक्षिः। 'मृताहनि समासेन पिण्डनिर्वपणं पृथक्। नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु'। समासेन पिण्डनिर्वपणं द्विपितृकश्राद्धवत् द्वयोरुद्देशेनैक एव पिण्डो देयः, नवश्राद्धं तु पृथग्भवतीत्यर्थः, मृताहनीति विशेषोपादानात् तिथिभेदे तु पृथगेव श्राद्धं न समासेनेति गम्यते। किं च नवश्राद्धं पृथगिति परिसंख्यया नवश्राद्धस्यैव पृथग्विधानान्नवश्राद्धव्यतिरिक्तेषु षोडशश्राद्धादिषु साँवत्सरिकवदेव समासेनैव विधानं बोध्यम्, सूर्य्यसेनीयादिस्वरसोप्येवम्। यत्तु वचनं 'एकचित्यां समारूढौ दम्पती निधनं गतौ। पृथक् श्राद्धं तयोः कुर्य्यादोदनं च पृथक् पृथक्' इति। तन्नवश्राद्धविषयम्। अत्रौदनग्रहणेन नवश्राद्धस्य पक्वान्नकार्य्यत्वमायाति। अङ्गिराः। 'नवश्राद्धेषु यच्छिष्टं गृहे पर्य्युषितं च यत्। दम्पत्योर्भुक्तशिष्टं च तन्न भुञ्जीत कर्हिचित्'। इदन्तु ध्येयम्। एकस्मिन्नेव दिने पूर्वभागे भर्त्तुर्मरणे परभागे पत्न्या अनुमरणेपि समासेनैव पिण्डदानादि कार्य्यम्। भिन्नमरणरूपनिमित्तापेक्षया तिथ्येकत्वादिनिमि-

त्तानामेव न्याय्यत्वात् । लाघवात् भर्त्तुर्मरणदिनप्रभृत्येव दिनगणनां कृत्वा तिलोदकपिण्डदानाशौचादि कर्त्तव्यम् । यत्पुनर्भृगुवचनम् । 'या समारोहणं कुर्य्याद्भर्त्तुश्चित्यां पतिव्रता । तां मृताहनि सम्प्राप्ते पृथक् पिण्डे नियोजयेत् । प्रत्यब्दं तु नवश्राद्धं युगपन्न समापयेत्' इति । तदपि भर्त्तृमृताहतिथिव्यतिरिक्तायां तिथौ चित्यारोहणविषयम् । संघातमृतानां विशेषमाह भृगुः । 'एककाले

युगपन्मरणे विशेषः

गतासूनां बहूनामथवा द्वयोः । तन्त्रेण श्रपणं कुर्य्याच्छ्राद्धं चैव पृथक् पृथक्' । ऋष्यशृङ्गः । 'भवेद्यदि सपिण्डानां युगपन्मरणं तदा । सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् । तथा 'कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः पुनः । तृतीयस्य ततः कुर्य्यात्सन्निपाते त्वयं क्रमः' । पित्रोर्विशेषमाह कार्ष्णा-

श्राद्धसम्पाते निर्णयः

जिनिः । 'पित्रोः श्राद्धे समं प्राप्ते नवे पर्य्युषितेऽपि वा । पितृपूर्वं सुतः कुर्यादन्यत्रासति योगतः' । ननु 'नैकः श्राद्धद्वयं कुर्य्यात्समानेऽहनि कुत्रचित्' इतिप्रचेतसा निषिद्धमिति चेन्न । देवताभेदे निमित्तभेदे चैकस्यानेकश्राद्धविधानात् । तदाह जाबालिः । 'श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने । नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदयम् । श्राद्धं कृत्वा पुनः श्राद्धं न कुर्यादेकवासरे । यदि नैमित्तिकं न स्यादेकोद्दिष्टं भवेद्यदि' । कात्यायनः । 'द्वे बहूनि निमित्तानि जायेरन्नेकवासरे । नैमित्तिकानि कार्य्याणि निमित्तोत्पत्त्यनुक्रमात्' । कालादर्शे तु विशेषः । 'नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि । दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः । दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्म्मणः । प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत्' । दर्शश्राद्धेनैव नित्यश्राद्धसिद्धिरित्यादिरर्थः । नियतानियतनिमित्तकत्वेपि देवताभेदेन श्राद्धद्वयं कार्य्यम् । तदुक्तं कालादर्श एव । 'नि-

त्यस्य चोदकुम्भस्य नित्यमासिकयोरपि । दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि । नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि । युगाद्याब्दिकयोश्चापि मघाद्याब्दिकयोरपि । प्रत्याब्दिकेषु चालभ्ययोगेषु विहितस्य च । सम्पाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत्' । अत्र नित्यदार्शिकयोः षड्देवताकत्वान्मासिकोदकुम्भयोरेकोद्दिष्टत्वाद्देवताभेदतया युगादिमन्वाद्यलभ्ययोगनिमित्तश्राद्धानां षड्दैवतत्वादाब्दिकस्य त्रिदैवतत्वाद्वा देवताभेद इति । तथा । 'निमित्तानि यतश्चात्र पूर्वानुष्ठानकारणम्' । अनियतनिमित्तं उदकुम्भमासिकाब्दिकादिकं प्रथमं कार्य्यम् । नित्यदार्शिकादिनियतनिमित्तं पश्चादिति तात्पर्य्यम् । पार्वणैकोद्दिष्टयोरेकाहकार्य्यत्वे पार्वणं कृत्वैकोद्दिष्टं कुर्य्यात् । तदाह जाबालिः । 'यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणं—पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत्' ।श्राद्धविघ्ने विशेषमाह मरीचिः ।

श्राद्धविघ्ने निर्णयः 'श्राद्धविघ्ने समुत्पन्नेप्यविज्ञाते मृताहनि । कुर्य्यादन्नेन कृष्णायामेकादश्यां विधुक्षये' । आशौचरूपे श्राद्धविघ्ने विशेषमाह ऋष्यशृङ्गः । 'आब्दिके चैव संप्राप्ते आशौचं जायते यदि । आशौचे तु व्यतिक्रान्ते तत्र श्राद्धं विधीयते' । आशौचान्तदिनेपि करणासम्भवे त्वाह गोभिलः । 'देये प्रत्याब्दिकं श्राद्धे त्वन्तरा मृतसूतके । आशौचानन्तरं कुर्य्यात्तन्मासेन्दुक्षयेपि च' । सूर्य्यसेनीये तु—अशौचान्तेपि क्षयाहतिथिसजातीयतिथावेव कार्य्यम् । 'तदहश्चेत्प्रमुच्येत केनचित्सूतकादिना । सूतकानन्तरं कुर्य्यात्पुनस्तदहरेवच' इति वचनादित्युक्तम् । अत्र सूतकपदं श्राद्धविघ्नोपलक्षणम् । यदिपुनः पत्न्येव कर्त्री रजस्वला भवति तदा पञ्चमेऽहनि श्राद्धं कुर्य्यात् । तदाह गौतमः । 'अपुत्रा तु यदा भार्य्या संप्राप्ते भर्त्तुराब्दिके । रजस्वला भवेत्सातु कुर्य्यात्तत्पञ्चमेहनि' ।

तथा। 'आब्दिके समनुप्राप्ते यस्य भार्य्या रजस्वला। पञ्चमेऽहनि तच्छ्राद्धं न कुर्य्यात्तन्मृताहनि। आर्त्तवे देशकालानां विप्लवे समुपस्थिते। आमश्राद्धं द्विजैः कार्य्यं शूद्रैः कार्य्यं सदैव हि' इति व्याघ्रपदवचनम्। 'आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मान। आमश्राद्धं प्रकुर्वीत यस्यभार्य्या रजस्वला' इति च कात्यायनवचनं पुत्रादिकर्त्तृकमृताहव्यतिरिक्तश्राद्धविषयम्। यदाह लौगाक्षिः। 'पुष्पवत्स्वपि दारेषु विदेशस्थोप्यनग्निकः। अन्नेनैवाब्दिकं कुर्य्याद्धेम्ना वामेन न क्वचित्'। अन्नेन पक्केन। मरीचिः। 'अनग्निकः प्रवासी च यस्य भार्य्या रजस्वला। आमश्राद्धं प्रकुर्वीत न तत्कुर्य्यान् मृताहनि'। कार्ष्णाजिनिः। 'आपन्नोऽप्याब्दिकं नैव कुर्य्यादामेन कुत्रचित्। अन्नेन तदमायान्तु कृष्णे वा हरिवासरे'। प्रतापमार्त्तण्डे। 'विदेशगो वा विगताग्निको वा रजस्वलायामपि धर्म्मपत्न्याम्। श्राद्धं मृताहे विदधीत पाकैर्नामेन हेम्ना न च पञ्चमेह्नि'। हेमाद्रिस्तु—अधिकारिभार्यान्तररहितेन धर्मपत्न्यां च रजस्वलायाम् पञ्चमेह्नि श्राद्धं कर्त्तव्यं न तु मृताहे। भार्यान्तरयुक्तेन च मृताह एव कर्त्तव्यमितिविशेषमाहेति। सुमन्तुः। 'पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप। आपत्तिषु महाबाहो विदेशगमनादिभिः। सर्वदैव तु शूद्राणामामश्राद्धं विदुर्बुधाः'। प्रचेताः। 'स्त्रीशूद्रः स्वपचश्चैव जातकर्म्मणि चाप्यथ। आमश्राद्धं सदा कुर्य्याद्विधिना पार्वणेन तु'। स्वयम्पचतीति स्वपचः अपत्नीक इत्यर्थ इति रामकृष्णः। तथा। 'अपत्नीकः प्रवासी च यस्य भार्य्या रजस्वला। आमश्राद्धन्द्विजो दद्याच्छूद्रो दद्यात् सदैव हि'। तथा। 'श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्। अमावास्यादिनियतं माससंवत्सरादृते'। व्यासः। 'सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्ययं विधिः। आवाहनादि सर्वं स्यात्पिण्डदानं च

आमश्राद्ध-निर्णयः

भारत। यद्ददाति द्विजातिभ्यः शृतं चाप्यथ वाशृतम्। तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्'। आमश्राद्धे पक्कान्नस्थाने आमान्नमात्रं विशेषः। विधिः सर्वोऽपि स एवेत्यर्थः। षट्त्रिंशन्मते तु पिण्डदाने विशेषमाह। 'आमश्राद्धं यदा कुर्य्यात्पिण्डदानं कथं भवेत्'। उत्तरं 'गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन तु'। व्यासः। 'आमं ददद्धि कौन्तेये दद्यादामं चतुर्ग्गुणम्'। चतुर्ग्गुणत्वं पुरुषाहारापेक्षया। तथा। 'आमश्राद्धं तु पूर्वाह्णे सिद्धान्नेन तु मध्यतः। पार्वणं चापराह्णे तु वृद्धिश्राद्धन्तथाग्निकम्'। मध्यत इत्येकोद्दिष्टविषयम्। आग्निकम् अग्न्याधाननिमित्तम्। मध्य इति व्यवहितेनान्वयः। शूद्रकर्त्तृके विशेषमाह। 'मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः। आममात्रेण तत्रैव पितॄणां दत्तमक्षयम्'। एतदामश्राद्धं शूद्रस्य नित्यं तस्य पक्कान्नेन ब्राह्मणभोजननिषेधात्। यदाह सुमन्तुः। 'न पक्कं भोजयेद्विप्रान्सच्छूद्रोऽपि कदाचन। भोजयन्प्रत्यवायी स्यान्नच तस्य फलं लभेत्' इत्यामश्राद्धनिर्णयः समाप्तः॥

क्षयदिनाज्ञाने प्रकारमाह बृहस्पतिः। 'न ज्ञायेत मृताहश्चेत्प्रोषिते संस्थिते सति। मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यात्तदाब्दिकम्'। मरीचिः। 'श्राद्धविघ्ने समुत्पन्ने चाविज्ञाते मृतेहनि। एकादश्यां तु कर्त्तव्यं कृष्णपक्षे विशेषतः'। दिनज्ञाने मासाज्ञानेप्याह बृहस्पतिः। 'यदा मासो न विज्ञातो विज्ञातं दिनमेव तु। तदा चाषाढके मासि माघे वा तद्दिनं भवेत्'। माघाषाढयोरासत्त्या कल्पनम्। उभयापरिज्ञाने स एव 'दिनमासावविज्ञातौ मरणस्य यदा पुनः। प्रस्थानमासदिवसौ ग्राह्यौ पूर्वोक्तया दिशा'। पूर्वोक्तयेति मरणमासाद्यज्ञानवत्कल्पनेत्यर्थः। यदा मरणप्रस्थानदिनाज्ञानं तथा मृतवार्त्ताश्रवणदिने तत्राप्यसम्भवे श्रवणमासामावास्यायां वा कुर्य्यात्। तदुक्तं प्रचेतसा। 'अपरिज्ञाने अमावा-

क्षयाहाज्ञाने कदावार्षिकम्

स्यायां श्रवणदिने चेति। मृताहे द्रव्याद्यभावेन श्राद्धाकरणे प्रकारो निर्णयामृते प्रोक्तः। 'पिण्डमात्रं प्रकर्त्तव्यमभावे द्रव्यविप्रयोः। श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोपि वा'। पात्राभावे तु विशेषः। 'पात्राभावे परं कृत्वा पितृयज्ञविधिं नरः। निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततोनयेत्' इति। पितृयज्ञविधिं श्राद्धम्। अन्यच्च। 'सर्वाभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा। नतु प्राप्तस्य लोपो ऽस्ति पैतृकस्य विशेषतः'। सर्वस्य द्रव्यपात्रादेरभावे। अतिदरिद्रस्य विशेषमाह वृद्धवसिष्ठः। 'अग्निना वा दहेत्कक्षं श्राद्धकाले समागते। तस्मिन् वोपवसेदह्नि जपेद्वा श्राद्धसंहिताम्'। कक्षं तृणसमूहम्। वैष्णवे। 'सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः। सूर्य्यादिलोकपालानामिदमुच्चैः पठिष्यति। नमेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोगि स्वपितॄन्नतोस्मि। तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य। इत्येतत्पितृभिर्गीतं भावाभावप्रयोजकम्। यः करोति कृतन्तेन श्राद्धं भवति पार्थिव' इति॥

श्राद्धाशक्तौ प्रकारः

अथ पार्वणनिर्णयः। पार्वणं यद्यप्येकोद्दिष्टप्रकृतितया पूर्वमेव निर्णेतुमुचितम्। तथापि लाघवेन पूर्वोद्दिष्टतयैकोद्दिष्टमेव प्रथमं निरणायि। तत्र प्रथमं दर्शश्राद्धनिर्णयः। व्याघ्रपादः 'न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः। इन्दुक्षये मासि मासि प्रायश्चित्तीयते हि सः। अमावास्याव्यतीपातपौर्णमास्यष्टकासु च। द्विजः श्राद्धमकुर्वाणः प्रायश्चित्तं किलार्हति'। अमावास्या द्विविधा सिनीवाली कुहूश्चेति। तत्र भूतविद्धामावास्या चन्द्रदर्शनसम्भवात् सिनीवालीत्युच्यते। नष्टचन्द्रा कुहूः स्मृतेति। इयं च सर्वाप्यपराह्णव्यापिनी ग्राह्या। 'पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणामिति श्रुतेः। स्मृतिर-

दर्शश्राद्धनिर्णयः

पि। 'पूर्वाह्णे वैदिकं कार्य्यमपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्'। हारीतः। 'अपराह्णः पितॄणां वै यापराह्णानुयायिनी। सा ग्राह्या पितृकृत्येषु न पूर्वाह्णानुयायिनी'। स्मृत्यन्तरे। 'द्विगुणाद्यात्मनश्छाया दर्शे स्यादापराह्णिकी। गजच्छाया हि सा प्रोक्ता पितॄणां तृप्तिकारिणी'। भारद्वाजः। 'वनस्पतिगते सोमे याच्छाया पूर्वतो मुखी। गजच्छाया हि सा तत्र पितॄणां दत्तमक्षयम्'। चन्द्रस्त्वमावास्यायाश्चतुर्थे भागे वनस्पतिगतो भवति। तथा च स्मृतिः। 'त्रिमुहूर्त्तं वसेदर्के त्रिमुहूर्त्तं जले वसेत्। त्रिमुहूर्त्तं वसेद् गोषु त्रिमुहूर्त्तं वनस्पताविति। कार्ष्णाजिनिः। 'भूतविद्धाममावास्यां मोहादज्ञानतोपि वा। श्राद्धकर्म्मणि ये कुर्य्युस्तेषामायुः प्रहीयते'। इदं भूतविद्धायां श्राद्धनिषेधकं वचनं प्रतिपद्विद्धाया अपराह्णव्यापित्वे सति बोध्यं, तदभावे भूतविद्धाया विधानात्। तदाहजाबालिः। 'प्रतिपद्यप्यमावास्या नापराह्णगता भवेत्। भूतविद्धैव सा ग्राह्या पित्र्ये कर्म्मणि सर्वदा'। तथा 'प्रतिपद्यप्यमावास्या पूर्वाह्णव्यापिनी यदि। भूतविद्धैव सा ग्राह्या पितृकार्य्येषु सर्वदा'। पूर्वाह्णव्यापिन्येव नापराह्णव्यापिनीत्यर्थः। उभयत्रापराह्णव्यापित्वाभावे च परैव कुतपव्यापिनी ग्राह्या, तदुक्तं हारीतेन। 'भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा। पित्र्ये कर्म्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी'। अत्र कुतपशब्देन रौहिणविरञ्चावपि गृह्येते। तदाहापस्तम्बः। 'कुतपाद्यान्मुहूर्त्तांस्त्रीन्यदा चरति भास्करः। स कालः कुतपस्तत्र पितॄणां दत्तमक्षयम्'। अत्र कुतुपारब्धस्य श्राद्धस्य प्रतिपद्भागे समाप्तौ न दोषः। यदाह जाबालिः 'पूर्वाह्णे चेदमावास्या

---

१ अत्र प्रातश्शब्दः सार्द्धप्रहरपरः 'प्रहरोऽप्यर्द्धसंयुक्तः प्रातरित्यभिधीयते' इति गार्ग्योक्तेः॥

मापराह्ने भवेद्यदि। प्रतिपद्यपि कर्त्तव्यं श्राद्धं श्राद्धविदो विदुः'। गौतमः। 'प्रारभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं न तु लङ्घयेत्'। हारीतः। 'कन्यामकरमीनेषु तुलायां मिथुने तथा। भूतविद्धैव सर्वेषां पूज्या भवति यत्नतः'। इदं व्रतविषयम्। तदाह जाबालिः। 'तुलायां मकरे मीने कन्यायां मिथुने तथा। भूतविद्धा व्रते ग्राह्या शेषेषु प्रतिपद्युता'। उभयत्रापराह्नव्यापिन्यां तु तिथिक्षये साग्निभिः सिनीवाली ग्राह्या निरग्निभिः स्त्रीशूद्रैश्च कुहूरिति। 'अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये। आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्म्मता'। आपस्तम्बः। 'अमावास्यायां यदहश्चन्द्रमसं न पश्यति तदहः पिण्डपितृयज्ञं कुरुते' इति'। कात्यायनः। 'अमावास्यायामपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शन' इति। यदा पिण्डपितृयज्ञो दर्शश्राद्धं च कर्त्तव्यं स्यात्तदा-क्रमेण कुर्य्यात्। यदाह मनुः। 'पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्। पिण्डान्वाहार्य्यकश्राद्धं कुर्य्यान्मासानुमासिकम्'। पिण्डान्वाहार्य्यकं पार्व्वणश्राद्धं। पिण्डाः अनु ब्राह्मणभोजनानन्तरम् आह्रीयन्तेऽस्मिन्निति व्युत्पत्तेः। आहिताग्निरदृष्टचन्द्रायामपराह्णव्यापिन्यां पिण्डपितृयज्ञं कृत्वा पार्वणश्राद्धादिकं कुर्य्यादिति समुदायार्थः। कार्ष्णाजिनिः। 'सिनीवाली द्विजैर्ग्राह्या साग्निकैः पितृकर्म्मणि। स्त्रीभिः शूद्रैः कुहूर्ग्राह्या तथा चानग्निकैर्द्विजैः'। प्रचेताः। 'सिनीवाली कुहूश्चैव श्रुत्युक्ते पितृकर्म्मणि। स्यातान्न यदि मध्याह्ने श्राद्धमेवं कथं भवेत्। तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्म्मता। साम्येऽपि च कुहूर्ज्ञेया वेदवेदान्तवेदिभिरिति। अत्र साग्नेः यत्सिनीवालीविधानं तदपराह्णव्यापित्वे सति तिथिक्षयविषयम्। अपराह्णद्वयव्यापीत्युक्तवचनात्। इदमत्र तात्पर्य्यं व्यवसितम्। यानि भूतविद्धानिषेधकानि वचनानि तानि भूतवि-

च्छाया आपराह्णिकत्वाभावे प्रतिपदि चापराह्णिकत्वे तिथिसाम्य-वृद्ध्योश्च उभयत्रापराह्णव्यापित्वे च बोध्यानि। तत्पराण्येव प्रतिपद्विद्धाविधायकानि। यानि पुनर्भूतविद्धायां श्राद्धविधायकानि तानि तस्याऽपराह्णव्यापित्वे उभयत्रापराह्णव्यापित्वे च तिथिक्षये साग्निकविषयाणि ज्ञेयानि। यानि कुतपकालव्यापिन्यां श्राद्धविधायकानि तान्युभयत्रापराह्णव्यापित्वाभावविषयकाणि वेदितव्यानि। येऽप्यपराह्णानादरेण कुतपकालआधानेनैवामावास्याश्राद्धमिच्छन्ति तेषामप्यपराह्णव्यापिन्यां कुतपकालमारभ्य श्राद्धं कर्त्तव्यमित्यभिप्राय इति। निर्णयामृतादिस्वरसोप्येवमेवेति। अन्यथा 'अपराह्णः पितॄणां तु यापराह्णानुयायिनीत्यादि बहुवचनविरोधः स्यात्। एवं पौर्णमास्यपि श्राद्धेऽमावास्यावदेव निर्णेया। तदुक्तम्। 'अमावास्या यथा पुण्या पितृपिण्डस्य कर्म्मणि। पौर्णमासी तथा ग्राह्या विशेषो नास्ति कश्चन'। मनुः। 'दैवाद्यन्ते तदीहेत पित्राद्यन्ते न तद्भवेत्। पित्राद्यन्तं त्वीहमानः क्षिप्रमेव विनश्यति' इति वचनात्। पितृदक्षिणानन्तरं वैश्वदैविकदक्षिणा कार्य्या। यज्ञस्य दक्षिणान्तत्वादिति ध्येयम्।

अथाश्विनापरपक्षश्राद्धनिर्णयः। स एव महालय उच्यते। यदाह

महालयश्राद्ध निर्णय. मनुः। 'नभस्यस्यापरे पक्षे यत्र कन्यां व्रजेद्रविः। स महालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा'। नभस्यस्येति शुक्लादिमासाभिप्रायेण। यमोपि। 'आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्। तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्क्को भवेन्न वा'। साङ्ख्यायनिः। 'पुण्यः कन्यागतः सूर्य्यः पुण्यः पक्षश्च पञ्चमः। कन्यास्थार्कान्वितः पक्षः सोत्यन्तं पुण्य उच्यते'। कार्ष्णाजिनिः। 'आदौ मध्येऽवसाने च यत्र कन्यां व्रजेद्रविः। स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति'। ब्रह्माण्डपुराणे। 'कन्यां गते सवि-

तरि यान्यहानि तु षोडश । ऋतुभिस्तानि तुल्यानि तेषु दत्तं महाक्षयम्' । शुक्लप्रतिपदा सह षोडशसङ्ख्यापूरणम् । जाबालिः । 'आगतेपि रवौ कन्यां श्राद्धं कुर्वीत सर्वदा । आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्म्मणि' । अत्र पञ्चमः पक्षो मलमाससम्बन्धी चेत् तदा तमतिक्रम्य शुक्लपक्ष एव श्राद्धादिकं कार्य्यम् । यदाह भृगुः । 'एकराशिस्थिते सूर्य्ये यदा दर्शद्वयं भवेत् । हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः । वृद्धिश्राद्धं तथा सोमम् अग्न्याधानं महालयम् । राजाभिषेकं काम्यं च न कुर्य्याद्भानुलङ्घिते' । अत्र च श्राद्धमावश्यकम् । शाकेनापि नापरपक्षमतिक्रामेदितिश्रुतेः । काम्यं च । 'पुत्रानायुस्तथारोग्यमैश्वर्य्यमतुलं तथा । प्राप्नोति पञ्चमे दत्वा श्राद्धङ्कामांस्तथापरान्' इति । तच्च पार्वणविधिना षड्दैवतङ्कार्य्यम् । तदाह गौतमः । 'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि । अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्' । कौत्सः । 'उत्तराहस्तचित्राः स्युः कन्यायां भास्वति स्थिते । कृष्णपक्षो गजच्छाया समानः पितृकर्म्मसु । पार्वणस्यावृता कुर्य्यादक्रोधः श्राद्धमत्र तु' । आवृता प्रकारेण । गौतमः । 'अथापरपक्षे श्राद्धं पितृभ्यो दद्यात्पञ्चम्यादिदर्शान्तमष्टम्यादि दशम्यादि सर्वस्मिन्नेकस्मिन्वेति । ब्रह्माण्डपुराणे । 'आश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्यादिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा' । आश्वयुगिति कृष्णादिमासाभिप्रायेण । त्रिभागस्तृतीयो भागश्चतुर्थ्यन्ताश्चतस्रस्तिथयश्चतुर्दशी चेति पञ्चतिथिरूपस्तेन हीनं पञ्चम्यादि दर्शान्तम् । त्रिभागं तृतीयभागं, अत्रापि चतुर्दश्या सह दशतिथयो द्विभागरूपा बहिर्भवन्ति । अर्द्धमष्टम्यादि । पञ्चम्यादिपक्षेषु चतुर्दशीं वर्ज्जयित्वा श्राद्धे प्राशस्त्यमाह मनुः । 'कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयो य-

थैता न तथेतराः'। दशम्यादाविति पञ्चम्याद्युपलक्षणमिति प्राञ्चः। तन्न। यावद्वचनं हि वाचनिकमिति न्यायेन प्राशस्त्यस्य दशम्यादिपञ्चतिथिष्वेव वाचनिकतयोपलक्षणत्वेन पञ्चम्यादितिथिष्वपि तस्य साधारण्यकल्पने मानाभाव इति वयमाकलयामः। पक्षसङ्कल्पे चतुर्दश्यादि न वर्ज्यम्। तदाह कार्ष्णाजिनिः। 'नभस्यस्यासिते पक्षे श्राद्धं कुर्य्याद्दिने दिने। नैव नन्दादिवर्ज्ज्यं स्यान्नैव वर्ज्ज्या चतुर्दशी'। अन्यथा 'प्रतिपत्प्रभृतिष्वेकां वर्ज्जयित्वा चतुर्द्दशीमितिप्रत्येकं प्रतिपदादितिथीनां फलकथने चतुर्दशीवर्ज्जनं याज्ञवल्कीयं पक्षश्राद्धे विरुध्येत। तस्मात्पक्षश्राद्धे प्रतिदिनं मया श्राद्धं विधेयमिति संकल्पे चतुर्दश्यपि न त्याज्येति निर्णीयते। अत एव कात्यायनोप्याह। 'ऊर्द्ध्वं चतुर्थ्या यदहः संपद्यते। सप्तम्या ऊर्द्ध्वं यदहः संपद्यते। ऊर्द्ध्वं नवम्या यदहः संपद्यते ऋतेचतुर्द्दशीमिति। गार्ग्ग्यः। 'नन्दायां भार्ग्गवदिने त्रयोदश्यां त्रिजन्मसु। एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयाव'। इदं नन्दादिवर्ज्जनमेकस्मिन्नेव दिने श्राद्धकरणे बोध्यम्। कार्ष्णाजिनिः। 'ऋते नैमित्तिकं काम्यं श्राद्धं यस्तु मघोडुभिः। दद्यात्तज्ज्येष्ठपुत्रस्य नाशः स्यादिति निश्चयः। मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति' इतिपिण्डदानस्य श्राद्धपूर्वकत्वाच्छ्राद्धनिषेध एव तात्पर्य्यमिति प्राञ्चः। अन्नोत्सर्ग्गस्य श्राद्धत्वान्नित्यश्राद्धादिवदपिण्डकश्राद्धस्यापि सम्भवात्पिण्डमात्रस्यैव निषेधो वाचानिक इत्यर्व्वाञ्चः। वृहद्गार्ग्ग्यः। 'प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्ग्गवे तथा। यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति'। प्राजापत्ये रोहिण्याम्। पौष्णे रेवत्याम्। पित्र्यर्क्षे मघायाम्। श्राद्धं पिण्डदानं, नक्षत्रपुरस्कारेण श्राद्धकरणं पुत्रवतो निषिद्धमिति कश्चित्। 'भानौ भौमे त्रयोदश्यां नन्दासु च

महालयेवर्ज्यतिथ्यादि

मघासु च । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्प्पणम्' । एतानि वर्ज्जयित्वा तु शुभे कस्मिंश्चिद्दिने श्राद्धं कुर्य्यात् । तच्च श्राद्धं मातॄणां सह पृथग्वा कुर्य्यात् । तदुक्तमपरार्के । गयामहाल्यादौ तु पृथक्सह वा स्वभर्तृभिरितिसिद्धमिति । मातृश्राद्धं पृथक्शस्तं मातामहानां सपत्नीकमेवेति । स्मृत्यर्थसारे चतुर्विंशतिमते । 'केचिदिच्छन्ति नारीणां पृथक्श्राद्धं महर्षयः । आचार्य्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च । तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलाञ्जलीन् । पिण्डांस्तेभ्यः सदा दद्यात्कन्याभाद्रपदे नरः । तीर्थेषु चैव सर्वेषु माघमासे मघासु च । एकस्मिन्ब्राह्मणे सर्वानाचार्य्यादीन्प्रपूजयेत् । दश द्वादश वा पिण्डान्दद्यादकरणं न तु । नैसर्गिको विधिर्न्यूनः पक्षे वै पञ्चमे स्मृतः । तस्मिन्दत्तं हविर्नूनं पितॄणामक्षयं भवेत्' । स्मृत्यर्थसारे । 'गुर्वाचार्य्यपितृव्यमातुलश्वशुरोपाध्यायभ्रातृसखिस्त्रीपोषकद्रव्यदतत्पुत्रशिष्यर्त्विजानां तत्स्त्रीणां च श्राद्धं कार्यं, अपुत्राणां विशेषेण, तत्रैकः पाको वैश्वदेवं तन्त्रं पिण्डं बर्हिश्चैकमिति । एतेषामेकोद्दिष्टं सुमन्तुराह 'सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते । भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च । मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्' । पुराणसमुच्चये । 'एकादश्यां प्रकुर्वीत एकोद्दिष्टानि सर्वशः । यस्याधिदेवता विष्णुः पितृवर्गस्य कृत्स्नशः' । एतत्पक्षाष्टम्यप्यष्टकेति प्रागुक्तं । पाद्मे सत्यवतीं प्रति पितॄणां वचनं 'प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि । आयुरारोग्यदा नित्यं सर्वकामफलप्रदा' इति । अत्राष्टम्यां श्राद्धं गयाश्राद्धसमम् । तदुक्तं ब्रह्मपुराणे । 'आषाढ्याः पञ्चमे पक्षे गया माघ्याष्टमी स्मृता । त्रयोदशी गजच्छाया गयातुल्या तु पैतृके' ।

गजच्छायाश्राद्धम्

गजच्छायालक्षणं तु यमस्मृतौ । 'यदेन्दुः पितृदैवत्ये हंसश्चैव करे

स्थितः । याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता’ । पितृदैवत्यं मघा, हंसः सूर्य्यः, करे हस्ते । याम्यतिथिस्त्रयोदशी । अङ्गिराः । ‘त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः । पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम्’ । इदं वचनं त्रयोदश्यां मातामहवर्ग्गं परित्यज्य पितृवर्ग्गस्यैव श्राद्धं न कर्त्तव्यमित्येवं परम् । यदाह कार्ष्णाजिनिः । ‘श्राद्धं नैकस्य वर्ग्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्तास्तत्र येऽस्य स्युः प्रजां हिंसन्ति तेऽग्रजाम्’ । प्रशंसामाह यमः । ‘पिता पितामहश्चैव तथैव प्रपितामहः । जातं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव । मधुमांसेन खड्गेन पयसा पायसेन वा । एष दास्यति नस्तृप्तिं वर्षासु च मघासु च । अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् । पायसं मधुसर्पिभ्यां वर्षासु च मघासु च’ । अस्यां मघायां ज्येष्ठपुत्रवता पिण्डरहितं श्राद्धं कर्त्तव्यम् । तदुक्तं देवीपुराणे । ‘तत्रापि महती पूजा कर्त्तव्या पितृदैवते । ऋक्षे पिण्डप्रदानं च ज्येष्ठपुत्री विवर्ज्जयेत्’ । नागरखण्डे । ‘अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति । कन्यासंस्थे सहस्रांशौ तस्य स्याद्वंशसङ्क्षयः । इति शापेन देवानां निर्द्दग्धेयं महातिथिः । ततःप्रभृति नैतस्यां क्रियते श्राद्धमुत्तमम् । एतत्त्रयोदशीश्राद्धं वंशोच्छेदस्य कारणं’ इत्यादीनि त्रयोदशीश्राद्धनिषेधकानि वचनानि काम्यश्राद्धविषयाणि एकवर्ग्गविषयाणि वा । नागरखण्डे । ‘अतः श्राद्धं विना देयं तद्दिने मधुपायसम् । तस्याभावेपि दातव्यं क्षीरोदनमनुत्तमम् । तस्मिन्नहनि विप्रेभ्यः पितॄणां तुष्टये नृप’ । पुत्रवद्गृहस्थैस्त्रयोदशीश्राद्धं पूर्वोक्तशापाशङ्कया नचेत्क्रियते । तदा पित्राद्युद्देशेन ब्राह्मणा भोजयितव्या इति तात्पर्य्यम् । कात्यायनोपि । ‘त्रयोदश्यां युवानस्तस्य म्रियन्ते’ तस्य श्राद्धकर्त्तुः । अपरपक्षे त्रयोदशीयुगादिः ।

अतश्च युगादिनिमित्तमपि पिण्डरहितमेव कार्य्यं । वस्तुतस्तु नागरखण्डे निषेधकवचनेषु श्राद्धपदं पिण्डदानपरमेवेति न काप्यनुपपत्तिः । मत्स्यपुराणे । 'भरणी प्रेतपक्षे तु महती परिकीर्त्तिता । अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत्' ॥

अथ नवम्यामन्वष्टका तत्र नवदैवतं श्राद्धं कुर्यात् । तदुक्तम् । 'अन्वष्टकासु नवभिः पिण्डैः श्राद्धं समाचरेत् । पित्रादिमातृमध्यं च तथा मातामहान्तकम्' । अत्राप्यनेकमातृकत्वेपि पितृकश्राद्धवत्सकलमात्राद्युद्देशेन मातृपिण्ड एक एव देयः न्यायस्य तुल्यत्वात् । ततः पितामहीप्रपितामहीपिण्डौ । मातॄणां प्रत्येकं पिण्डदाने तु नवसंख्याधिकपिण्डत्वेनान्वष्टकाभङ्गप्रसङ्ग इति । हेमाद्रिस्तु—मातृयजनं त्वन्वष्टकास्वादित इत्यूचे । तत्र वीजं न जानीमः । यतेरेकदाण्डिनस्त्रिदण्डिनो वा प्रेतपक्षद्वादश्यामेव पार्वणं कुर्वीत । यदुक्तं वायवीये 'सन्न्यासिनोप्याब्दिकादि पुत्रः कुर्य्याद्यथाविधि । महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु' । महालये पुत्रेण पक्षादिश्राद्धाकरणे मरणतिथिसजातीयतिथौ श्राद्धं कार्य्यम् । तदुक्तं नागरखण्डे 'आषाढ्याः पञ्चमे पक्षे कन्यासंस्थेदिवाकरे । मृताहनि पितॄणां वै श्राद्धं दास्यति यो नरः । तस्य सम्वत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्' । तत्पक्षचतुर्दश्यां शस्त्रहतस्यैकोद्दिष्टं कार्य्यम् । 'समत्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं तु कर्त्तव्यं चतुर्दश्यां महालये' । समत्वमागतस्य सपिण्डीकृतस्य । वै एव । तेन शस्त्रहतस्यैव चतुर्दश्यां नान्यस्येत्यर्थ इति विज्ञानेश्वरस्वामिनः । पित्रादित्रिके शस्त्रहते पार्वणमाह पराशरः । 'चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते । एकोद्दिष्टविधानेन तत् कुर्य्याच्छस्त्रघातिनाम्' । शस्त्रेण घातो येषां ते शस्त्रघातिनः । 'पित्रादयस्त्रयो यस्य शस्त्रैर्यातास्त्वनुक्रमात् । स भूते

शस्त्रादिहतानां श्राद्धम्

पार्वणं कुर्य्यादाब्दिकानि पृथक् पृथक्' । भूते चतुर्द्दश्यां । अत्र शस्त्रपदं विषश्वापदाद्युपलक्षकम् । तदुक्तं ब्रह्माण्डपुराणे । 'प्राणनाशकशस्त्राग्निविषोद्बन्धनिनां तथा । चतुर्द्दश्यां तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः' । मरीचिः । 'विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनां । चतुर्द्दश्यां क्रियाः कार्य्या अन्येषां तु विगर्हिता' । विषादिभिर्घातो येषां ते तथा तेषां । घातिनामिति हतानामित्यर्थे छान्दसः प्रयोग इति केचित् । अत्र शस्त्रहतस्य चतुर्द्दश्यामेव, चतुर्द्दश्यां शस्त्रहतस्यैवेत्युभयनियमः । वसन्ते ब्राह्मणोऽग्नीनादधीतेतिवदितिकेचित् । तन्न । 'आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् । चतुर्द्दश्यां भवेत्पूजामावास्यां यान्ति कामिकी' इति देवीपुराणवचनविरोधादिति । अत्र हेमाद्रिसङ्ग्रहः । 'भूतादिग्रहशस्त्रविप्रगरलाग्न्युद्बन्धतोयादिभिर्नष्टानां नखिदन्तिशृङ्ग्यनशनाध्यारोहलोहोपलैः । विद्युद्दण्डनगाधिरोहणमुखैः पापोपघातैर्नृणां प्रेतानामजरावतां च रचयेच्छ्राद्धानि भूतेऽसिते । भाद्रेप्यत्र विशेषतोऽथ न तदान्येषां पितृणामिह श्राद्धं स्यादिति । तदा भाद्रासितचतुर्द्दश्यां शुक्लादिमासाभिप्रायेणेदम् । नागरखण्डे । 'अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा । उपसर्गमृतानां च विषमृत्युमुपेयुषाम् । वह्निना च प्रदग्धानां जलमृत्युमुपेयुषाम् । सर्पव्याघ्रहतानां च मृतस्योद्बन्धनैरपि । श्राद्धं तेषां प्रकर्त्तव्यं चतुर्द्दश्यां नराधिप' । ये पुनर्वै जलाग्निप्रवेशभृगुपतनादिमृतास्तेषां चतुर्द्दश्यां न कुर्यात् । यदाह शाकटायनः । 'जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि । श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्द्दशीम्' । जलाग्निग्रहणं विधिपरिगृहीतमरणे हेतूपलक्षणम् । एवं च पतिमरणानन्तरशास्त्रविहिताग्निप्रवेशेन मृतानां स्त्रीणामपि श्राद्धं चतुर्द्दश्यां न कर्त्तव्यं । तथा च दैत्यना-

रायणीयोदाहृतश्राद्धकल्पे सूतवाक्यम् । 'माद्र्याः श्राद्धे समुत्पन्ने कर्त्तुकामो युधिष्ठिरः । माघ्कृष्णचतुर्दश्यां वारितोऽसौ द्विजोत्तमैः । अस्याः श्राद्धं न कर्त्तव्यं पत्या सह मृता यतः' । अत एव शस्त्रादिहतत्वमेव नियामकम् । नतु लिङ्गविशेषान्तर्भावोपीत्याहुः । दैत्यनारायणीये । 'दुश्चारिण्यश्च या नार्यः पुत्रैस्त्यक्तान्यतो मृताः । तासां श्राद्धं चतुर्दश्यां न तु याः पतिभिः सह' । अस्मिन्पक्षे श्राद्धाकरणे आश्विनसितपञ्चम्यन्तासु तिथिषु कस्यां चित्तिथौ श्राद्धं कार्यम् । तदाह यमः । 'हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् । पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः' । ब्रह्मपुराणे । 'यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः । तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरन्तदा' । तथा । 'कन्यां गते सवितरि पितरो यान्ति वै सुतान् । शून्या प्रेतपुरी सर्वा यावद्वृश्चिकसंक्रमः । संप्राप्ते कार्त्तिके यस्य निराशाः पितरो गताः । पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम्' । नागरखण्डे । 'मासद्वयं प्रतीक्षन्ते गृहद्वारं समाश्रिताः । वायुभूताः पिपासार्त्ताः क्षुत्क्षामाः पितरो नृणाम् । यावत्कन्यागतः सूर्यः तुलास्थश्च महीपते' । अत्र कन्यास्थार्क्कः कालोऽतिप्रशस्तः । तदुक्तं नागरखण्डे । 'प्रेतपक्षेप्यतिक्रान्ते यावत्कन्यां गतो रविः । तावच्छ्राद्धं प्रवाञ्छन्ति दत्तं वै पितरः सुतैः । सुमन्तुः । 'येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि । तस्यान्दद्यान्नचेद्दत्तं पितॄणान्तु महालये' ॥ प्रत्येकं प्रतिपदादितिथिषु श्राद्धविधाने फलमाह मनुः । 'कुर्वन्प्रतिपदि श्राद्धं सुरूपांल्लभते सुतान् । कन्यकां तु द्वितीयायां तृतीयायान्तु वेदिनः । पशून् क्षुद्रान् चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् । षष्ठ्यां द्यूतं कृषिं चापि सप्तम्यां लभते नरः । अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा । स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु । ए-

महालयश्राद्धाकरणे गौणकालः

कादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् । द्वादश्यां जातरूपं च रजतं कुप्यमेव च । ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यामुरुप्रजाम् । प्रीयन्ते पितरश्चास्य ये शस्त्रेण हता रणे । पक्षत्यादिविनिर्दिष्टान् विपुलान्मनसः प्रियान् । श्राद्धदः पञ्चदश्यां तु सर्वान्कामान्समश्नुते' । याज्ञवल्क्यः । 'कन्यां कन्यावेदिनश्च पशून्द्रव्यं सुतानपि । द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा । ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके । ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा । प्रतिपत्प्रभृतिष्वेकां वर्ज्जयित्वा चतुर्दशीम्' । कन्यावेदिनो जामातॄन् । कुप्यं हेमरूप्यभिन्नधातुम् ॥

अथ कृत्तिकादिऋक्षेषु क्रमात्फलान्याह याज्ञवल्क्यः । 'स्वर्गं ह्यपत्यं मोक्षं च शौर्यं क्षेत्रं बलं तथा । पुत्रान् श्रैष्ठ्यं च सौभाग्यं समृद्धि मुख्यतां श्रुतम् । प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीन्यपि । अरोगित्वं यशो वीतशोकतां परमां गतिम् । धनं वेदान् भिषक् सिद्धिं कुप्यं गामप्यजाविकाम् । अश्वानायुश्च विधिवद्यो वा श्राद्धं प्रयच्छति । कृत्तिकादिभरण्यन्तं सकामानाप्नुयादिमान्' । नक्षत्रफलानि विष्कम्भादियोगेषु क्रमात्स्युः । तदाह मरीचिः । 'कृत्तिकादिषु ऋक्षेषु श्राद्धं यत्फलमीरितम् । विष्कम्भादिषु योगेषु तदेव फलमश्नुते' । रव्यादिवारेषु क्रमात्फलान्याह बृहस्पतिः । 'आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयं । सर्वान्कामान्प्रियां विद्यां धनमायुर्यथाक्रमम् । सूर्यादिवासरेष्वेतच्छ्राद्धकृल्लभते फलम् । ववादिकरणेष्वेतत्फलमाहुर्मनीषिणः' । तत्र मन्वादियुगादिषु काम्यं संक्रान्तिषु नैमित्तिकं च पिण्डरहितमेव कार्यम् । तदाह पुलस्त्यः । 'अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च कुर्वीत पिण्डनिर्वपणादृते । कालादर्शे 'विषुवायनसंक्रान्तिमन्वादिषु युगादिषु । विहाय पिण्डनिर्वापश्राद्धं सर्वं समाचरेत् । इति महालयश्राद्धनिर्णयः समाप्तः ॥

वृद्धिश्राद्ध निर्णयः

अथाभ्युदयिकम् । तच्च त्रिविधम् । विवाहादिनियतनिमित्तकं पुत्रजन्माद्यनियतनिमित्तकम् अग्न्याधाननिमित्तकं चेति। तत्र विवाहादिनिमित्तं प्रातः कार्य्यम् । यदाह शातातपः । प्रातर्वृद्धिनिमित्तकमिति । प्रातशशब्दोत्र सार्द्धयामपरः । तदाह गार्ग्यः । 'ललाटसंमिते भानौ प्रथमः प्रहरः स्मृतः । स एव सार्द्धसंयुक्तः प्रातरित्यभिधीयते' । अग्न्याधाननिमित्तं त्वपराह्णे। तदाह गालवः। 'पार्वणं चापराह्णे तु वृद्धिश्राद्धं तथाग्निकम्'। आग्निकमग्न्याधाननिमित्तम् वृद्धिश्राद्धमपराह्णे कुर्यादित्यर्थः। पुत्रजन्मादिनिमित्तस्यानियतत्वात् तन्निमित्तं वृद्धिश्राद्धं तदनन्तरमेव कुर्यात् । एतच्च मातृपूर्वं कुर्यात् । तदुक्तम् । 'मातृश्राद्धं तु पूर्वं स्यात्पितृणां तदनन्तरम् । ततो मातामहानां स्यादेवं नान्दीमुखं भवेत्' । नान्दीमुखमाभ्युदयिकम् । आभ्युदयिकनिमित्तान्याह कार्ष्णाजिनिः। 'कन्यापुत्रविवाहेषु प्रवेशे नवसद्मनः । नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखान्पितृगणान् पूजयेत्प्रयतो गृही'। पुत्रादीत्यादिशब्दात्पौत्रादेः सङ्ग्रहः। गार्ग्यः। 'पुत्रोत्पत्तिप्रतिष्ठासु तन्मौञ्जीत्यागबन्धने । चूडायां च विवाहेषु वृद्धिश्राद्धं विधीयते' । वृद्धगार्ग्यः 'अग्न्याधानाभिषेकादाविष्टापूर्त्तौ क्रिया क्रतौ । वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा । क्रतावाद्ये । मात्स्ये । 'उत्सवानन्दसन्तानयज्ञोद्वाहादिमङ्गले । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहाः पूज्याः विश्वेदेवास्तथैव च' । अत्र विशेषोगार्ग्येणोक्तः । 'मातृश्राद्धं तु पूर्वेद्युः कर्म्माहनि च पैतृकम् । मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं भवेत्' । अशक्तौ शातातपः । 'पृथग्दिने त्वशक्तश्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् । पूर्वाह्णे मातृकं श्राद्धम्पराह्णे पैत्रिकं तथा । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्' । एकस्मिन्दिनेपि कालभेदेन कुर्य्यादित्यर्थः । दधिबदरा-

दिभिः पिण्डदानं कुलाचारमात्रं चेत्कुर्य्यात् न चेन्न कुर्य्यात् । तदुक्तं भविष्योतरे । 'पिण्डनिर्वपणं कुर्य्यान्न वा कुर्य्यान्नराधिप । वृद्धिश्राद्धे महाबाहो कुलधर्म्ममवेक्ष्य तु' । मनुः । 'अलाभे भिन्नकल्पानां नान्दीश्राद्धत्रयं बुधः । पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्' । वैश्वदेवं च तान्त्रिकमितिशातातपवचनमप्यस्मिन्नेव पक्षे व्यवतिष्ठते, कालभेदे तन्त्रासम्भवात् । आभ्युदयिकमकृत्वा वैदिके कर्म्मणि नाधिकारी भवति । तदुक्तं मात्स्ये । 'नानिष्ट्वातु पितॄन् श्राद्धे कर्म्म वैदिकमाचरेत्' । पारस्करः । 'निषेधकाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्म्माङ्गं वृद्धिवत्कृतम्' । सोमे अग्न्याधाने । वैदिककर्म्ममात्रे वृद्धिश्राद्धावृत्तावपवादमाह च्छन्दोगपरिशिष्टे कात्यायनः । 'असकृद्यानि कर्म्माणि क्रियन्ते कर्म्मकारिभिः । प्रतिप्रयोगं नेमाःस्युर्मातरः श्राद्धमेव च' । येषु पुनः क्रियमाणेषु श्राद्धावृत्तिस्तानि परिगीतानि तेनैव । 'आधानहोमयोश्चैव वैश्वदेवे तथैव च । बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च । नवयज्ञे च यज्ञज्ञा वदंत्येवं महर्षयः । एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक्' । येषुप्रथमप्रयोगेपि न वृद्धिश्राद्धं तान्याह स एव । 'नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्म्मप्रोषितागमकर्म्मसु' । श्राद्धं वृद्धिश्राद्धं । प्रसववेदनावत्यां स्त्रियां प्रसवादर्वाग् यद्विहितं कर्म्म तत्सोष्यन्तीजातकर्म्मेतिप्रसिद्धम् । प्रोषितस्य स्वगृहागमने यद्विहितं कर्म्म तत्प्रोषितागमकर्म्म । जातकर्म्मणि वृद्धिश्राद्धनिषेधश्छन्दोगमात्रविषयः । पूर्वोदाहृतवचनेषु जातकर्म्मणि वृद्धिश्राद्धविधानात् । कात्यायनः । 'गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् । सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु' । एकस्मिन्दिने चौलोपनयनविवाहादिषु क्रियमाणेषु वृद्धिश्राद्धमेकं भवतीत्यर्थः । इति वृद्धिश्राद्धनिर्णयः ।

अथ जीवितश्राद्धम् । ब्रह्मपुराणे । देशे कालधनश्राद्धव्यव-

सायसमुच्छ्रिते। जीविते सति जीवाय दद्याच्छ्राद्धं स्वयं नर' इति।

अथ नैमित्तिकश्राद्धं प्रस्तूयते। तच्च नवश्राद्धं नाम सूतके प्रथमतृतीयादिदिनेषु क्रियमाणं नवीनं श्राद्धम्। तदाहाङ्गिराः। 'प्रथमेह्नि तृतीयेह्नि पञ्चमे सप्तमे तथा। नवमैकादशे वापि नवश्राद्धं प्रकीर्त्तितम्'। वृद्धवसिष्ठः। 'सप्तमेह्नि तृतीयेह्नि प्रथमे नवमे तथा। एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा'। पञ्चैव नवश्राद्धान्याह बौधायनः। 'मरणाद्विषमदिनेष्वेकैकं नवश्राद्धं कुर्य्यादानवमात्, यत्रनवमंविच्छिद्येतैकादशेतत्कुर्यादिति। विश्वस्वामिनस्तु-आश्वलायनानां पञ्चापस्तम्बानां षडन्येषां विभाषेति व्यवस्थां कृतवन्तः। 'नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः। आपस्तम्बाः षडित्याहुर्विभाषा त्वितरेषु हि' इति नवश्राद्धम्॥

नवश्राद्धम्

अथ श्राद्धाधिकारिणः। शङ्खः 'पितुः पुत्रेण कर्त्तव्याः पिण्डदानोदकक्रियाः। पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः'। पुत्राश्च द्वादश याज्ञवल्क्येनोक्ताः—'औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतस्तुसः। अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः। दद्यान्माता पिता वा यं स पुत्रो दत्तकोभवेत्। क्रीतश्च ताभ्यांविक्रीतः कृत्रिमश्च स्वयं कृतः। दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धोभवेत्सुतः। पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः। सजातीयेषु मया प्रोक्तस्तनयेषु यथाविधि'। अत्रायं क्रमः कालादर्शे। मातापित्रोरौर्द्ध्वदेहिकमौरसः पुत्रः कुर्यात्। तदभावे पौत्रः, तदभावे प्रपौत्रः, तदभावे पुत्रिकापुत्रः। द्विविधोहि पुत्रिकापुत्रः। 'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रोभवेदिति' व्यवस्थयैकः। पुत्रिकैव च पुत्र इत्यपरः। तदभावे

श्राद्धाधिकारिनिर्णयः

क्रीतस्तदभावे दत्तस्तदभावेऽपविद्धस्तदभावे पत्नी, पत्न्यभावे गूढजः, तदभावे कानीनस्तदभावे पौनर्भवः, तदभावे सहोढजः । 'पुत्राभावेतु पत्नी स्यात्तदभावे तु सोदर' इति शङ्खवचनं कानीनादिव्यतिरिक्तपुत्राभावविषयम् । कानीनादीनां चतुर्णां पत्न्यभावेऽधिकारस्य स्मृतिसंग्रहोक्तत्वात् । 'कानीनगूढसहजपुनर्भूतनयाश्च ये । पत्न्यभावेऽधिकुर्य्युस्ते अप्यशस्ताः सुता हि ते' । तदभावे दौहित्रः । तदभावे सोदरः, तदभावे तत्सुतः । तदभावे त्वसोदरः । तदभावे तत्पुत्रः, तदभावे पिता, तदभावे माता, तदभावे स्नुषा, तदभावे भगिनी सोदरा । तदभावे तत्पुत्रस्तदभावे सपिण्डः, तदभावे सोदकस्तदभावे मातुः सपिण्डः, तदभावे ऋत्विक्, तदभावे त्वाचार्यः उपनीय सांगवेदाध्यापयिता, तदभावे नृपतिः प्रेतजातीयेन पुरुषेण प्रेतद्रव्यं दत्वा कारयेत् । अत्र वाक्यानि । सुमन्तुः । 'मातुः पितुश्च कुर्व्वीत मृतयोरौरसः सुतः । पैत्रिमेधिकसंस्कारं मन्त्रपूर्व्वकमादृतः' । वैष्णवे । 'पुत्रः पौत्रः प्रपौत्रश्च पत्नी च भ्रातृसन्ततिः । सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते । एषामभावे सर्व्वेषां समानोदकसन्ततिः' । तथा । 'पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ । ऋक्थहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः । भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः । ततस्त्वसोदरो भ्राता तदभावे तु तत्सुतः । भ्रातुर्भ्राता स्वयं चक्रे यस्य भार्य्या न विद्यते । तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः' । तथा । 'उत्सन्नबान्धवं प्रेतं पिता भ्राता तथाग्रजः । जननी वापि संस्कुर्य्यान्महदेनोऽन्यथा भवेत् । मातृपक्षस्य पिण्डेन सम्बद्धो योजलेन वा । कुलद्वयेपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप' । तथा 'पुत्रोभ्राता पिता वापि मातुलो गुरुरेव च । एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः' । यत्तु । 'नच माता नच पिता कुर्यात्पुत्रस्य पैतृकम् । नाग्रजश्च तथा भ्राता भ्रातॄणां च कनीयसाम्' इति, तत्पुत्रादिसत्वे बोध्यम् ।

वौधायनः। 'यदि स्नेहेन कुर्यातां सपिण्डीकरणं विना। गयायान्तु विशेषेण ज्यायानपि समाचरेत्'। कुर्यातां पितराविति शेषः। कात्यायनः। 'अनुजा अग्रजा वापि भ्रातुः कुर्वन्तु संस्क्रियाम्। ततस्त्वसोदरास्तद्वत्क्रमेण तनयास्तयोः'। स्मृतिसङ्ग्रहे। 'पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा। भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा। असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः'। मार्कण्डेये। 'सख्युरुत्सन्नबन्धोश्च सखापि श्वशुरस्य च। जामाता स्नेहतः कुर्यादखिलं पैत्रिमेधिकम्। सर्वाभावे तु नृपतिः कारयेत्तस्य ऋक्थतः। तज्जातीयैर्नरैः सम्यग्दाहाद्याः सकलाः क्रियाः। सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः'। स्कान्दे। 'सर्वाभावे स्त्रियः कुर्युः स्वभर्त्तॄणाममन्त्रकम्'। अत्र स्त्रियः पत्नीव्यतिरिक्ताः। पत्नीतु धर्म्मविवाहोढैव नासुरादिविवाहोढा सा तु मुख्याधिकारिणी अन्या स्त्रीमात्रमेव। तदाह शातातपः। 'धर्म्मैर्विवाहैरूढा या सा पत्नी परिकीर्त्तिता। सहाधिकारिणी ह्येषा यज्ञादौ धर्म्मकर्म्मणि। क्रयक्रीता तु या नारी नासौ पत्न्यभिधीयते। न सा दैवे न पित्र्ये स्याद्दासीं तां मुनयो विदुः'। गौतमः। 'पुत्राभावे सपिण्डाः मातृसपिण्डाः शिष्याश्च दद्युः, तदभावे ऋत्विगाचार्यौ'। वैष्णवे। 'पूर्वाः क्रिया मध्यमाश्च तथैवोत्तरसत्क्रिया। त्रिप्रकाराः क्रियाः ह्येतास्तासाम्भेदं शृणुष्व मे। अह्नान्दशानां मध्ये तु या दाहाद्याः क्रियास्मृताः। ताः पूर्वा मध्यमा मासिमास्येकोद्दिष्टसंज्ञिताः। प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु। क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः। पितृमातृसपिण्डैस्तु समानसलिलैस्तथा। तत्सङ्घातगतैर्वापि राज्ञा वा धनहारिणा। अथाद्यः क्रियाः कार्य्याः पुत्राद्यैरेव चोत्तराः। दौहित्रैर्वा नरश्रेष्ठ कार्य्यास्तत्तनयैस्तथा'। अत्र पितृमातृसपिण्डादयः पूर्वक्रियामेव कुर्य्युर्नोत्तरामि-

ति, मध्यमक्रियायामनियमश्च । तेषामुत्तरक्रियायान्तु पुत्राद्या-भ्रातृसन्ततिपर्यन्तदौहित्रादयोपि नियता इति कल्पतरुक्तः । अ-पुत्रायाः सपत्नीपुत्रः पतिर्वौर्द्ध्वदेहिकं कुर्य्यात्तदाह मनुः । 'बह्वी-नामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तेनैव पुत्रेण प्राह पुत्र-वतीर्मनुः' । कात्यायनः । 'विदध्यादौरसः क्षेत्र्यो जनन्या और्द्ध्वदे-हिकम् । तदभावे सपत्नीजक्षेत्रजाद्यास्तया वृता' । तयावृता तेन प्रका-रेण । औरसः सर्व्वदैवेत्यर्थः । तेषामभावे तु पतिस्तदभावे सपिण्डकः । शंखः । 'भार्य्या पिण्डं पतिर्दद्याद्भर्त्तुर्भार्या तथैव च । श्वश्वा-देस्तु स्नुषा चैव तदभावे तु सोदरः' । सपत्नी वा कुर्य्यात् । त-दुक्तं स्मृत्यर्थसारे । 'पुत्राभावे मिथोदम्पती सपत्न्यश्चेति । अन्य-था पुत्राद्यधिकारिणि देशान्तरस्थिते सति मृतस्य दाहादिकर्म्म-णो लोप एव स्यात् । तथा च सति 'असगोत्रः सगोत्रो वा य-दि स्त्री यदि वा पुमान्' इत्याद्यनुपपन्नं स्यात् । कात्यायनः । 'असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् । कर्त्तव्यमितरत्सर्वं का-रयेदन्यमेव हि ॥ पूर्वा मध्यमाश्च क्रियाः कृत्वोत्तरकर्म्मामन्त्रकं कु-र्य्यादित्यर्थः । 'अनुपेतोपि कुर्वीत मन्त्रवत्पैतृमेधिकम् । यद्यसौ कृत-चूडः स्याद्यदि स्याच्च त्रिवत्सरः' । वर्षत्रयादर्वाक् कृतचूडस्तदू-र्द्ध्वमकृतचूडोपि सर्वमौर्द्ध्वदेहिकं मन्त्रवत्कुर्यादित्यर्थः । व्याघ्रः 'कृत-चूडस्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्' इति । तथा । 'कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरे-त् । उदाहरेत्स्वधाकारं नतु वेदाक्षराण्यसौ' । एतद्वचनद्वयं प्रथम-वर्षकृतचूडाविषयम् । तथा च मनुः । 'न ह्यस्मिन् युज्यते कर्म्म किंचि-दामौञ्जिबन्धनात् । नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते' । स्वधा-निनयनं श्राद्धम् । ऋष्यशृङ्गः । 'पुत्रेषु वर्त्तमानेषु नान्यं वै कारये-त्स्वधा । आनुकूल्यादपुत्रस्य श्राद्धं कुर्यात्सनाभिकः' । वाक्प्रयोग-समर्थे पुत्रे बालकेपि नान्यस्याधिकार इत्यर्थः ॥ इत्यधिकारिनिर्णयः ॥

अथ मासिकनिर्णयः। मासिकानि द्वादशमासेषु षोडश भवन्ति। तदाह जातूकर्ण्यः 'द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा। त्रैपक्षिकाब्दिके चैव श्राद्धान्येतानि षोडश'।

मासिकश्राद्ध-निर्णयः

अत्र प्रतिमास्यानि मासिकानि। आद्यमूनमासिकम्। षाण्मासिकमूनषाण्मासिकं, आब्दिकमूनाब्दिकं। तथा 'द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा। सपिण्डीकरणं चेति प्रेतश्राद्धानि षोडश'। पैठीनसिः। 'सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु। सपिण्डीकरणादूर्द्ध्वं यदा कुर्यात्तदा पुनः। प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि'। अत्र षोडशश्राद्धानि सपिण्डीकरणात्पूर्वमेकोद्दिष्टविधानेन कुर्यात्। सपिण्डीकरणादूर्द्ध्वं तु प्रत्याब्दिकवत्पार्वणमेकोद्दिष्टं वा यथा स्वकुलाचारं कुर्यादित्यर्थः। अत्राप्यादिमासिकमेकादशेऽह्न्येव कुर्यात्तदाह याज्ञवल्क्यः। 'मृतेऽहनि तु कर्तव्यं प्रतिमासन्तु वत्सरम्। प्रतिसम्वँत्सरं चैवमाद्यमेकादशेऽहनि'। अत्र प्रतिसंवत्सरं चेत्यभिधानात् आद्याब्दिकमप्येकादशेऽह्नि कुर्यात्। अतएव गोभिलः 'ब्राह्मणं भोजयेदाद्ये होतव्यमनले तथा। पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति'। द्विरावृत्तिः श्राद्धद्वयम्। आद्यं श्राद्धं क्षत्रियादिरप्येकादशेऽह्न्येव कुर्यात्। तदाह वृद्धवसिष्ठः। 'एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्। चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक्'। लौगाक्षिः। 'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि। कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः'। शुचिना कर्म कर्त्तव्यमिति वचनात्कर्त्तुस्तात्कालिकी शुद्धिरुक्ता। विष्णुः। 'अथाशौचापगमे श्राद्धमाद्यं कुर्यादिति। एतदपि ब्राह्मणमात्रविषयम्। अन्यथा वृद्धवसिष्ठलौगाक्षिवचनाभ्यां विरोध आपद्येत। अतस्तदेव विज्ञानेश्वरनिर्णयामृत-

प्रभृतयः सर्वेऽप्यत्राविप्रतिपद्यमाना मेनिरे । तथाप्यत्र मैथिलाः-अशौचापगमवचनं 'अशौचान्तद्वितीयेह्नि शय्यां दद्याद्विलक्षणाम् । काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितं । सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः । वृषोत्सर्ग्गश्च कर्त्तव्यो देया च कपिला शुभा' इति मत्स्यपुराणवचनं च क्रमेणाशौचापगम एवाद्यं श्राद्धं पञ्चदानानि चैकस्मिन्नेव दिवसे कर्त्तव्यतया बोधयति नतु दिनभेदेनोभयं । आचारोपि तथैव, अशौचान्तोऽशौचस्य चरमदिवसस्तस्यद्वितीयेह्नि अशौचापगमप्रथमदिवसे पञ्चदानान्युक्तानि । आद्यश्राद्धस्यापि स एव कालः । नह्येकादशेह्नि आद्यश्राद्धं कृत्वा स्वस्वजात्युक्ताशौचव्यपगमे शय्यादिदानं कुर्वन्त्यार्य्याः । यद्येकादशेऽह्न्येवाद्यश्राद्धं सर्वेषां वर्णानां स्यात्तदा शय्यादिकं ब्राह्मणाद्यैः क्रमेणैकादशे त्रयोदशे षोडशे एकत्रिंशे च दीयेत । न चाद्यश्राद्धप्राक्काले एकादशेऽह्न्येव शय्यादिकं दीयतामिति वाच्यम् । अशौचान्तद्वितीयेह्नि शय्यादिदानस्य विहितत्वात्, आद्यश्राद्धस्य चैकादशेह्नि विहितत्वात्कालभेदात् । किन्तु ब्राह्मणमात्रस्य न कालभेदः । तस्माच्छुचिना कर्म्म कर्त्तव्यमिति न्यायादेकादशाहपदं तत्तद्वर्णाशौचव्यपगमदिवसपरमवधारयामः । आद्यं श्राद्धमशुद्धोपीति क्षतादिकृताशुद्धिपरम् । अशौचान्तद्वितीयेह्नीति नियतनिमित्तकत्वबोधनादिति । तन्न सन्दर्भविरोधात् । तत्सामान्यमुदाहृतमिति वचनेनैकादशाहश्राद्धस्य सर्ववर्णसाधारणत्वप्रतिपादनात् । न चैकादशाहपदस्याशौचान्तदिनपरतया सर्वसाधारण्यमस्तु । आशौचं तु पृथक्पृथगित्यनेन विरोधात् । तु शब्दस्तु आद्यश्राद्धमेव हि व्यवच्छिनत्ति, कर्त्तुस्तात्कालिकीशुद्धिरिति शुद्धिपदस्य विशेषपरत्वे मानाभावात् । न चाशौचापगम इति विष्णुसूत्रमेव मानं, तस्य ब्राह्मणमात्रपर-

स्वेनाप्युपपत्तेः। न च किमत्र विनिगमकमिति वाच्यम् । वृद्धवसिष्ठलौगाक्षिवचनयोरेव विनिगमकत्वादिति । नच सद्यःशौचेप्याद्यश्राद्धमेकादशेह्नि क्रियतामितिवाच्यम् । इष्टापत्तेः, अत एव प्रायोनशनादिविहितमार्गेण मृतानां सद्यःशौचेप्येकादश एवाह्नि आद्यश्राद्धं कर्त्तव्यमित्याह शङ्खः । 'सद्यःशौचेपि दातव्यं प्रेतस्यैकादशेहनि । स एव दिवसस्तस्य श्राद्धशय्यासनादिषु' । तेनाद्यश्राद्धप्राक्काल एव शय्यादिकं तद्दिवस एव दातव्यमिति प्रतिभाति । अशौचान्तद्वितीयेऽह्नीत्येतस्य ब्राह्मणपरतयाप्युपपत्तिरिति साधु समादधुः प्राञ्चः प्रामाणिकतरा विज्ञानेश्वरप्रमुखा इति । यत्र न तथाचारः सोऽपि मैथिलादिनिबन्धवासनावासितान्तःकरणानामिदानीन्तनानामिति । वृषोत्सर्ग्गे विशेषमाह सालङ्कायनः। 'पत्यौ जीवति या नारी मृतिं गच्छति तत्सुत; । वृषोत्सर्ग्गं न कुर्वीत धेनुं दद्यात्पयस्विनीम्' । युक्तिसिद्धमेतत् 'युवानं वः पतिं ददानीत्यादिना वत्सतरीणां वृषेणेव कृतवृषोत्सर्गाया स्वर्गे पत्या सह विहरणासम्भवादिति । छन्दोगपरिशिष्टे 'ततोरुणेन गन्धेन मानस्तोक इतीरयन् । वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समालिखेत् । वृषोह्यसीति मन्त्रेण सव्ये चक्रं निवेशयेत् । ततोऽयसा प्रतप्तेन स्फुटौ तावपि कारयेत्' । इति वचने जाग्रति दक्षिणपार्श्वे चक्रेण तत्सजातीयत्वामपार्श्वे शूलेनेति मैथिलाः कल्पयन्ति, वृषस्य हरिहरमूर्त्तित्वात् दक्षिणे चक्रं वामे शूलमित्याद्यपि कल्पयन्ति। तद् वाक्यापरिज्ञानादिति । ऊनमासिकं तु द्वादशाहे ऊनमासि वा कार्य्यम्। तदाह गोभिलः। 'मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकम्' । ऊनषाण्मासिकादिकालमाह गालवः । 'ऊनषाण्मासिकं षष्ठे मास्यूनेप्यूनमासिकम् । त्रैपक्षिकं त्रिपक्षे स्याद्नाब्दं द्वादशेहनि। त्रिभिर्वा दिवसैर्न्यूने त्वेकेन द्वितयेन वा । आद्यादिषु तु मासेषु

वृषोत्सर्गे विशेषः

कुर्य्यादूनाब्दिकादिकम्' । कार्ष्णाजिनिः । 'ऊनान्यूनेषु मासेषु विषमाहे समेपि वा । त्रैपक्षिकं त्रिपक्षे स्यान्मृताहेष्वितराणि तु' । भविष्यपुराणे । 'त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरम्' । वृत्ते प्रवृत्ते । साग्नेर्विशेषमाह जातूकर्ण्यः । 'ऊर्द्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् । अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः' । मरणाद्द्वितीयादिदिने दाहे दाहदिनमारभ्येत्यर्थः । ऋष्यशृङ्गः । 'एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते । मासेऽन्यस्मिंस्तिथौ तस्यां कुर्यादन्तरितं च यत्' । एकोद्दिष्टे मासिके । चकारेण तन्मासिकसमुच्चयः, अनन्तरं तन्मासिकं च कुर्य्यादित्यर्थः । एतानि षोडशश्राद्धानि द्वादशाहादि(?)सम्वँत्सरादर्वागुक्तकाले सपिण्डने कर्त्तव्ये सति पूर्वमेतानि कृत्वा सपिण्डनं कुर्य्यादित्याह लौगाक्षिः । 'श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम्' । गोभिलोपि । 'श्राद्धानि षोडशादत्वा नैव कुर्य्यात्सपिण्डताम्' । सपिण्डनानन्तरमपि मासिकानि पुनः स्वस्वकाले कार्य्याण्येव तदाहाङ्गिराः 'यस्य सम्वँत्सरादर्वाक्सपिण्डीकरणं कृतम् । मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्' । विशेषमाह सांख्यायनिः । 'सपिण्डीकरणादर्वागपकृष्य कृतान्यपि । पुनस्तान्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् । प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा । अपकृष्यापि कुर्वीत कर्त्तुं नान्दीमुखं नरः' । सपिण्डीकरणार्थमपकृष्यकृतान्यपि तानि विवाहादिवृद्धावुपस्थितायां पुनरपकृष्य मृताह एव कार्य्याणीत्यर्थः । वृद्ध्यनन्तरं निषेधमाह कात्यायनः । 'निर्वर्त्त्य वृद्धितन्त्रं तु मासिकादि न तन्त्रयेत् । अयातयामं मरणं न भवेत्पुनरस्य तु' । अयातयामं नवं । तथा 'अन्तरेण तु यो वृद्धिं प्रेतश्राद्धानि कर्षति । अश्राद्धी नरके घोरे पितृभिः सह मज्जति' । तथा 'नन्दायां भार्ग्गवदिने चतुर्द्दश्यां त्रिपुष्करे । ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षया-

व' । त्रिपुष्करलक्षणम् रत्नमालायाम् । 'विषमचरणधिष्ण्यं भद्रातिथिर्यदि जायते, सुरगुरुशनिक्ष्मापुत्राणां कथञ्चन वासरे । मुनिभिरुदितः सोयं योगस्त्रिपुष्करसंज्ञकस्त्रिगुणफलदो वृद्धौ नष्टे मृते मह्वते तथा' । विषमचरणधिष्ण्यं त्रिपादनक्षत्रं कृत्तिकादि । इति मासिकनिर्णयः ॥

सपिण्डीकरण-निर्णयः

अथ सपिण्डीकरणम् । तस्याष्टौ काला भवन्ति । कालादर्शे 'एकादशे द्वादशेह्नि त्रिपक्षे वा त्रिमासि च । षष्ठे चैकादशे वाब्दे सम्पूर्णे वा शुभागमे' । शुभागम इति यदैव विवाहाद्याभ्युदयिकं प्राप्तं ततः पूर्वं सपिण्डनं कुर्य्यादित्यर्थः । कार्ष्णाजिनिः । 'सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान् सुतः । परतो दशरात्राच्चेत्कुहूरब्दोपरीतरे' । परतः एकादशेह्नि, इतरे निरग्नयो ऽब्दोपरि सापिण्डनं कुर्य्युरित्यर्थः । हारीतः । 'या तु पूर्वममावास्या मृताहाद्दशमी भवेत् । सपिण्डीकरणं तस्यां कुर्य्यादेव सुतोऽग्निमान्' । अत्रापि मृताहादूर्द्ध्वं द्वितीयदिनात्परिगणनायामेकादशे भवति । तस्याममावास्या यदि भवेदित्यर्थः । वृद्धवसिष्ठः । 'प्रथमा स्यादमावास्या मृताहाद्दशमेऽहनि । सपिण्डीकरणं तत्र कुर्य्यादेव सुतोऽग्निमान्' । अत्रापि पञ्चमी मर्य्यादायाम् । मृताहादूर्द्ध्वदिनमारभ्येत्यर्थः । गालवः । 'सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते । आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते' । भविष्यपुराणे । 'यजमानोऽग्निमान् राजन्प्रेतश्चानग्निमान्भवेत् । द्वादशाहे तदा कार्य्यं सपिण्डीकरणं सुतैः' । यजमानः कर्ता । कर्त्तर्यनग्नौ प्रेते चाहिताग्नौ सुमन्तुः । 'प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानाग्निर्यदा भवेत् । सपिण्डीकरणं तस्य कुर्य्यात्पक्षे तृतीयके' । अनग्नीनां तु द्वादशाहाद्याः सप्तकाला भवन्ति । यत्त्वब्दोपरीतरे इत्युक्तम् तन्मुख्यकालाभिप्रायेण । व्याघ्रपादः । 'आनन्त्यात्कुलधर्म्माणां नराणामायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वा-

दशाहः प्रशस्यते'। तत्रासम्भवे त्रिपक्षादीन् कालत्वेनाह भविष्योत्तरे। 'सपिण्डीकरणं कुर्य्याद् यजमानस्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ। द्वादशेहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा। एकादशेपि वा मासि मङ्गल्ये स्यादुपस्थिते' । षष्ठे मासीत्यन्वयः। गोभिलः । 'द्वादशाहादिकालेषु प्रमादादनुतिष्ठतम् । सपिण्डीकरणं कुर्य्यात्कालेषूत्तरभाविषु'। साग्निकस्य कर्त्तुरेकादशाहद्वादशाहरूपकालनियम उक्तः। साग्नेः प्रेतस्य त्रिपक्षनियमः। यदा प्रमादात्तत्र न कृतं तदा सपिण्डीकरणमुत्तरभाविषु त्रिपक्षादिषु कार्य्यमित्यर्थः। येन सह यं सपिण्डयेत्तमाह विष्णुः।'संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान्देवपूर्वं भोजयेदिति। विशेषमाह ब्रह्मपुराणे। 'मृते पितरि यस्याथ विद्यते च पितामहः। तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः। तेभ्यस्तु पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत्'। त्रयाणां मध्ये एकेनापि सपिण्डने प्रेतस्य पितृत्वमाह सुमन्तुः। 'त्रयाणामपि पिण्डानामेकेनापि सपिण्डने । पितृत्वमश्नुते प्रेत इति धर्म्मो व्यवस्थितः'। स्कान्दे । 'अक्रमेण मृतानां न सपिण्डीकृतिरिष्यते। यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः'। एतन्निषेधकवाक्यं मातृपिताभर्तृव्यतिरिक्तविषयमित्यर्थः। कात्यायनः। 'असंस्कृतौ न संस्कार्य्यौ पूर्वौ पौत्रप्रपौत्रकैः। पितरन्तत्र संस्कुर्य्यादितिकात्यायनोऽब्रवीत्'। असंस्कृतौ दाहादिसंस्काररहितौ, पूर्वौ पितामहप्रपितामहौ। असंस्कृताभ्यामपि ताभ्यां सपिण्डनमाह स एव। 'पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा। पितामहेन पितरं संस्कुर्य्यादितिनिश्चयः'। पापिष्ठन्दाहादिसंस्कारहीनन्नतु पतितन्तेन समं सपिण्डनप्रतिषेधात्। यदाह गौतमः। 'पापकर्म्मणा न संसृजेरन् स्त्रिया च व्यभिचारिण्येति। असति पुत्रान्तरे पौत्रेणैव संस्कार्य्यं पितामहमाह का-

स्यायनः। 'पितामहः पितुः पश्चान्न निधनं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम्। नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः। पितुः सपिण्डनं कृत्वा कुर्य्यान्मासानुमासिकम्'। पितुः सन्निहितत्वात्पूर्वं सपिण्डनं कृत्वा पितामहप्रपितामहौ संस्कुर्य्यादित्यर्थः। मातुः सपिण्डने विशेषमाह शङ्खः। 'मातुः सपिण्डीकरणं कथं कार्य्यं भवेत्सुतैः। पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम्'। पितामह्यां जीवत्यां प्रपितामह्यादिभिः कुर्य्यात्। ब्रह्मपुराणे। 'मातर्य्यग्रे प्रमीतायां विद्यते च पितामही। प्रपितामहीपूर्वस्तु कार्य्यस्तत्राप्ययं विधिः'। अपुत्राया विशेषमाह पैठीनसिः 'अपुत्रायां मृतायान्तु पतिः कुर्यात्सपिण्डनम्। श्वश्र्वादिभिस्सहैवास्यास्सपिण्डीकरणं भवेत्'। अन्वारोहणेनैकादिनमरणे स्त्रियाः पृथक्सपिण्डीकरणं न कार्य्यं, भर्तुश्च कृते स्त्रिया अपि कृतं भवेदिति। दिनान्तरमृते पुत्रः स्वपितापितामहपिण्डमध्ये कुशानन्तर्द्धायैकेन मातुः सापिण्ड्यं कुर्य्यात्। सर्वत्र पत्न्याः सापिण्ड्यमेकेन श्वशुरेण निषिद्धमिति। यमः। 'पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। सा मृताहनि तेनैक्यं गता मन्त्राहुतिव्रतैः'। शातातपः। 'मृता यानुगता नाथं सा तेन सह पिण्डताम्। अर्हति स्वर्ग्गवासेपि यावदाभूतसंप्लवम्'। तथा। 'तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डता। आसुरादिविवाहेषु विन्नानां योषितां स्मृता'। तन्मात्रा तत्पितामह्येत्यत्र तस्या मातुर्मात्रा पितामह्या चेत्यर्थः। तच्छ्वश्र्वा तस्या मातृपितामह्याः श्वश्र्वा मातुः प्रपितामह्येत्यर्थः। मातामहेन वा कुर्यात्। तदाह सुमन्तुः। 'पिता पितामहे योज्यः संपूर्णे वत्सरे सुतैः। माता मातामहे तद्वदित्याह भगवान् शिवः'। सुतैरासुरादिविवाहोढापुत्रैः। आसुरादिविवाहेष्विति वचनात्। मार्कण्डेयः।

मातुः सापिण्डने विशेषः

'ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् । भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदककिया । आसुरादिविवाहेषु पितृगोत्रेण धर्म्मवित्' । पुत्रिकापुत्रे विशेषमाह कात्यायनः । 'मातुः सपिण्डीकरणं पितामह्या सहोदितम् । यथोक्तेनैव कालेन पुत्रिकाया नचेत्सुतः' । पुत्रिकासुतश्चेन्मातामहादिभिः सहेत्यर्थः । बौधायनः । 'आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः । द्वितीये पितरं तस्यास्तृतीये च पितामहम्' । एवं यैः सह माता सपिण्डिता वृद्ध्यष्टकादिषु तैरेव पार्वणं कुर्वीतेतिध्येयम् । इदं सपिण्डनं चिरादपि पुत्र एव कुर्य्यात् । तदुक्तं वायवीये । 'श्राद्धानि षोडशादत्वा कुर्य्यान्नतु सपिण्डताम् । प्रोषितावसिते पुत्रः कालादिह चिरादपि'। प्रोषितावसिते प्रवासावसाने। संन्यासिनां तु षोडशश्राद्धानि न सन्ति। तदाहोशनाः। 'एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। अहन्येकादशे तेषां पार्वणं तु विधीयते । सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः। त्रिदण्डग्रहणादेव प्रेतत्वं नैवजायते' । त्रिदण्डेत्येकदण्डस्याप्युपलक्षणं । चतुर्विंशतिमते 'चतुर्थमाश्रमङ्गत्वा ब्रह्मविद्यापरायणः। एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्ज्जितः' । शातातपः। 'एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसंस्क्रिया । न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे' । ब्रह्मचार्य्यादिविषये विशेष उक्तः स्मृत्यर्थसारे । 'ब्राह्मणादिहतानां पतितानां प्रायश्चित्ताकरणं मृतानां च सपिण्डीकरणं नास्ति, तेषां सदैकोद्दिष्टमेवेति। अत्रानग्निकानां द्वादशाहादयः सप्तकाला उक्ताः। द्वादशाह इति सूतकान्तोपलक्षणम् । तेन क्षत्रियवैश्ययोरपि सूतकान्त एव सपिण्डनं प्राप्तम्, तदाह कात्यायनः। 'सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम्' । सर्वेषामेववर्णानामिति सर्वपदं ब्राह्मणादिवर्णत्रयपरतया संकोच्यम्। 'मंत्रवर्जं हि शूद्राणां द्वादशाहे सपिण्डनमि

ति विष्णुवचनादिति सूर्य्यसेनीयादयः। वयं तु सर्वेषामिति श्रवणात् 'शूद्राणां द्वादशाह' इत्यत्र द्वादशाहमेव सूतकान्तोपलक्षकमस्तु। न च विनिगमनाविरहः। सपिण्डनस्य द्वादशाहादयः सप्त काला इत्यत्र द्वादशाहपदस्य वर्णत्रयाशौचान्तपरत्वे कल्पनीये लाघवाद्वर्णमात्राशौचान्तपरत्वं कल्प्यम्। नच मानाभावः। सर्वेषामेव वर्णानामित्यस्यैव मानत्वात्। नच-शूद्राणामिति विशेषाभिधानात् द्वादशाहपदं यथाश्रुतमेवास्त्विति वाच्यम्। शूद्राणामिति बहुवचनेन शूद्रपदस्य वर्णमात्रपरत्वोन्नयनात्। द्वादशाहपदस्य स्वस्वाशौचान्तपरत्वकल्पनात्। जातिपरत्वे बहुवचनवैयर्थ्यात्। अन्यथा ब्राह्मणादीनां त्रयाणां प्रशस्तवर्णानामाशौचान्ते सपिण्डनम्, शूद्रस्याशौचमध्य इति कथमुचितं। नच वचनबलादुचितम्। वचनस्यान्यतात्पर्य्यकत्वादिति। यद्वा द्वादशाहे अशौचान्ते सर्वेषां सपिण्डनं तदेव शूद्राणां मन्त्रवर्जमित्यर्थ इति युक्तमुत्पश्यामः। गालवः। 'सपिण्डीकरणश्राद्धमुक्तकाले न चेत्कृतम्। रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्'। रौद्रमार्द्रा, मैत्रमनुराधा। अकृतसपिण्डनस्यैकोद्दिष्टं कृतसपिण्डनस्य पार्वणरूपमाब्दिकं कार्य्यन्तत्रापि विशेषो गौतमेनोक्तः। 'अदैवं पार्वणश्राद्धं सोदकुम्भमधर्म्मकम्। कुर्यात्प्रत्याब्दिकाच्छ्राद्धात्सङ्कल्पविधिनान्वहम्'। अधर्म्मकं दातृभोक्त्रोः पुनर्भोजनादिधर्म्मरहितम्। कार्ष्णाजिनिः किञ्चिद्विशेषमाह। 'मौञ्जीबन्धाद्विवाहाच्च वर्षार्द्धं वर्षमेव च। पिण्डान् सपिण्डा नो दद्युस्सपिण्डीकरणादृते'। सपिण्डीकरणशब्दोऽत्र षोडशश्राद्धोपलक्षकः। स्मृतिसंग्रहे। 'विवाहोपनयादूर्द्ध्वं वर्षं वर्षार्द्धमेव च। न कुर्य्यात्पिण्डनिर्वापं न दद्यात्तिलतर्पणम्। महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि। कृतोद्वाहोपि कुर्वीत पिण्डनिर्वपणं सुतः'। इति सपिण्डीकरणम्॥

अथ सङ्कल्पश्राद्धम् । साङ्गपार्वणादिश्राद्धाकरणे आतुरत्वेनाशक्तस्त्यक्ताग्निश्च सङ्कल्पश्राद्धं कुर्य्यात् । स्मृतिसंग्रहे । 'अङ्गानि पितृयज्ञस्य यश्च कर्तुं न शक्नुयात् । सङ्कल्पश्राद्धमेवासौ कुर्य्यादर्घादिवर्ज्जितम्' । आदिशब्दादावाहनाद्युपग्रहः । तदाहापस्तम्बः । 'सङ्कल्पश्राद्धे आवाहनाग्नौ करणपिण्डस्वधावाचनानि वर्ज्जयेदिति । व्यासः । 'त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं सपिण्डनम् । अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात्सङ्कल्प्य भोजयेत्' । त्यक्ताग्नेर्नास्तिकादिना उत्सृष्टाग्नेः ॥

अथ प्रसङ्गतः श्राद्धे ग्राह्याणि निषिद्धानि च द्रव्याण्युच्यन्ते ।

श्राद्धेद्रव्याणि

तत्र विष्णुः । 'शाकैः श्यामाकैः प्रियङ्गुनीवारैर्मुद्गैर्गोधूमैश्च मासं प्रीयन्त'इति । अत्र मुद्गा हरिताः । तदुक्तं वायवीये । 'श्यामाका हस्तिनामानो वर्द्धितायज्ञनिस्सृताः । प्रसारिकाः प्रियङ्गुश्च मुद्गाश्च हरितास्तथा । एतान्यपि समानि स्युः श्यामाकानां गुणैर्द्विज । कृष्णा माषास्तिलाश्चैव श्रेष्ठाःस्युर्यवशालयः । महायवा व्रीहियवास्तथैव च मधूलिकाः । कृष्णाः श्वेता लोहिताश्च ग्राह्याः स्युः श्राद्धकर्मणि' । प्रसारिका नीवारः । यवशालयो हैमन्तिकधान्यानि । सितानि शालिभेदा इति केचित् । महायवाः वेणुफलानि । व्रीहयश्च यवाश्च व्रीहियवाः । मधूलिका यवनालविशेषः । मकै इति लोके प्रसिद्धः । कृष्णा श्वेता लोहिता इति मधूलिकाविशेषणानीति कल्पतरुः । मधूलिका षाष्टिकेतिस्मृतिमञ्जरी, तन्न तस्यास्त्रिविधत्वाभावात् । तथा 'बिल्वामलकमृद्वीकपनसाम्रातदाडिमम् । भव्यपारेवताक्षोटखर्ज्जूराणां फलानि च' । भव्यपारेवतं कृतमालभेदः । 'कशेरुः कोविदारश्च तालकन्दस्तथाबिसम् । तमालं शतकन्दं च तथा वै शीतकन्दकम्' । कोविदारः काञ्चनालसदृशः कन्दविशेषः । तालकन्दस्तालमूली । शतकन्दं शतावरी ।

शीतकन्दं शालूकम् । तथा च । 'कालेयं कालकाशं च श्रुतिपर्णी सुवर्चला । मांसं शाकन्दधि क्षीरं शस्तं वेत्रांकुरस्तथा' । कालेयादिकाः शाकभेदाः । 'कटूकसङ्कोचनी द्राक्षा लकुचं मोचमेव च । अलाबुं ग्रीवकं चारुकर्कन्धूर्मधुसाह्वयम्' । मोचं कदलीफलम् । चार्विति कर्कन्धूविशेषणम् । तथा 'वैकङ्कतं नालिकेरं शृङ्गाटकपरूषकं । पिप्पली मरिचश्चैव पटोलं बृहतीफलं । एवमादीनि चान्यानि स्वादूनि मधुराणि च । नागराम्रातकं देयं दीर्घमूलकमेव च' ।

अथ वर्ज्ज्यानि । तत्र शङ्खः । 'भूस्तृणं शिरसं शिग्रु पालक्यं मधुकं तथा । कूष्माण्डालाबुकोर्वारुकोविदारांश्च वर्ज्जयेत्' । ब्रह्माण्डपुराणे । 'द्विस्स्विन्नं परिदग्धं च तथैवास्नातृलोडितम् । शर्कराकीटपाषाणैः केशैर्यद्वाप्युपद्रुतम् । पिनाकमथितं चैव तथातिलव्रणं च यत् । सिद्धाःकृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः । राजमाषास्तथा चैव वर्ज्ज्याः सद्भिः प्रयत्नतः' । द्विस्स्विन्नं जीरकादिप्रक्षेपेण पुनः पक्कं शाकादि । येषु सिद्धेषु प्रत्यक्षलवणक्षेपः कृतस्ते तादृशः । तथा । 'आविकं मार्ग्गमौष्ट्रं च सर्वमैकशफं तथा । माहिषं चामरं चैव पयो वर्ज्ज्यं विजानता । पिप्पलीं मरिचं चैव तथावै पिण्डमूलकम् । कृतं च विरसं सर्वं वंशाग्रं च विवर्ज्जयेत् । आदित्यपुराणे । 'मधूकं रामठं चैव कर्पूरं मरिचं गुडम् । श्राद्धकर्मणि शस्तानि सैन्धवन्त्रपुसं तथा' । हिंगुनिषेधस्तु शाकद्रव्यविषयकः । हिंगुद्रव्येषु शाकेष्विति वर्ज्ज्यप्रकरणे व्यासोक्तेः । पिप्पलीमरीचयोः संस्कारद्रव्यत्वाच्छादिनिःक्षिप्तयोर्न निषेधः प्रत्यक्षयोस्तु निषेध इत्यविरोधः ॥

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।

श्राद्धविनिर्णयनामा समाप्तिमगात्सप्तमोद्धारः ॥ ७ ॥

## अथ शुद्धिसमुद्धारोऽष्टमः प्रस्तूयतेऽधुना ।

तत्र शुद्धेरशौचाभावरूपत्वेनाशौचस्य विहितकर्मप्रति-
आशौचनिर्णयः बन्धकाधर्मरूपतया तत्प्रतियोगित्वेनाशौचं निरूप्यते ।

सूतकं मृतकं चेत्यशौचं द्विविधम् । प्रसवनिमित्तं सूतकं मिरणनिमित्तं मृतकम् । जननाशौचमपि स्रावपातप्रसवरूपनिमित्तत्रयभेदात्त्रिविधम् । मासचतुष्टयाभ्यन्तरे गर्भच्युतिः स्रावः । पञ्चमषष्ठयोः पातः । सप्तमादिषु प्रसवः । तदुक्तं स्मृतिसङ्ग्रहे । 'आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अतऊर्द्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्'। तत्र मरीचिः । 'स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्ज्जनम् । पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्' । मातुरिति विशेषोक्तेः स्रावे पितुर्नाशौचं । यथामासं यावन्तो गर्भमासा व्यतीतास्तावन्ति दिनानि। स्रावे स्नानमात्रं पितुः।स्नानमात्रमेव पुरुषस्येति वृद्धवसिष्ठवचनात् । गौतमः । संस्रावे गर्भस्य त्र्यहमिति । याज्ञवल्क्यः । 'गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम्' । अत्र स्रावः पातः । यमः 'अजातदन्ते तनये मृते गर्भच्युते तथा । सपिण्डानान्तु सर्वेषामेकरात्रमशौचकम्' । एतच्चागुणपित्रादिपरम् । 'सद्यः शौचं सपिण्डानां गर्भस्य पतने सति' इत्यपि पुराणवाक्यं मासचतुष्टयाभ्यन्तरे द्रवरूपगर्भपाते वेदितव्यम् । अत्र पारिजातकृतः—गर्भस्रावाशौचं सर्ववर्णसाधारणम् 'गर्भस्रावे यथामासमचिरे तूत्तमे त्रयः । राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु । अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता' । उत्तमे विप्रे, अचिरे मासत्रयाभ्यन्तरे । राजन्ये तु चतूरात्रमित्याद्यविवक्षितार्थम्, 'पाते मातुर्यथा

मासम्' इति तेनैवाभिधानात्, अन्यथा स्ववचनविरोधापत्तिरिति । नच वाच्यं पाताशौचं सर्ववर्णसाधारणं स्रावाशौचे विशेषोऽस्त्विति । शूद्रस्य पाताशौचात्स्रावाशौचाधिक्यापत्तेः । तथाहि 'गर्भपाते पञ्चमे मासि मासतुल्यनिशागणनया शूद्रस्यापि पञ्चाहमाशौचं प्राप्तं स्रावेत्वष्टाहेन शुद्धिरुक्तेति शूद्रस्य स्रावाशौचाधिक्यमापतितम् । अतो राजन्ये चतूरात्रमित्यादेरविवक्षितार्थतैवोचिता । यद्वा गुणवदगुणवद्विषयत्वेन वा न्यूनाधिककालव्यवस्था कल्पनीयेत्याहुस्तत्तुच्छम् निर्णयामृतकृतो मन्यन्ते । तथाहि अचिरेत्वृत्तमे त्रय इति ब्राह्मणविषये मासत्रयाभ्यन्तरे गर्भस्रावे दिनत्रयमशौचमुक्तं तत्प्रसङ्गात् 'आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः । तस्य त्रिरात्रमाशौचमित्यादिविषये यत्र ब्राह्मणस्य त्रिरात्राशौचं तत्र क्षत्रियादेश्चतूरात्रादिकमिति वाक्यशेषेण परिभाषाकृता । इयं परिभाषा गर्भस्रावेपि मा प्रसाङ्क्षीदिति 'स्रावेमातुस्त्रिरात्रं स्यात्' इति मरीचेरेव वाक्यान्तरप्रारम्भः।अन्यथा पुनरुक्तत्वेन व्यर्थत्वात् वाक्यान्तरमनारम्भणीयमेव स्यादिति । ऋष्यशृङ्गः 'यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते । तत्र शूद्रोद्वादशाहं षण्णव क्षत्रवैश्ययोः' । इदमनापद्विषयमगुणविषयं वा, मरीचिना यच्चतुः पञ्चाष्टाहमुक्तं तद्गुणवद्विषयमापद्विषयं वा वेदितव्यमिति । सप्तममासादौ दशाहादिकं यथावर्णं संपूर्णमाशौचमिति परिच्छेदः । विशेषमाह सम्बर्त्तः । 'जाते पुत्रे पितुः स्नानं सचैलस्य विधीयते । माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः' । अङ्गिराः । 'सूतके सूतिकावर्जमङ्गस्पर्शो न दुष्यति । पैठीनसिः । 'सूतिकां पुत्रजननीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेत मासेन स्त्रीजननीमिति' । जननाशौचे प्रथमषष्ठदशमादिवसेषु दानप्रतिग्रहाधिकारोऽस्ति । तदाह व्यासः । 'सूतिकावासनिलया जन्मदा नामदेवता । तासां यागनिमित्तातु शुद्धिर्जन्म-

नि कीर्त्तिता। प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि'। वृद्धयाज्ञवल्क्यः। 'तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत्। भक्षयित्वा तु तन् मोहाद्द्विजश्चान्द्रायणं चरेत्'। मार्कण्डेयः 'रक्षणीया तथा षष्ठी निशा तत्र प्रयत्नतः। रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः। पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः। रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतकम् ।

मरणाशौच-निर्णयः

अथ मृते शावाशौचम् । वृहन्मनुः । 'दशाहाभ्यन्तरेबाले प्रमीते तस्य बान्धवैः । शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते'। अत्र मृतजाते जातस्य नाभिच्छेदादूर्द्ध्वं मरणे च सपिण्डानां मरणाशौचं सद्योऽप्यपैति, जन्माशौचं संपूर्णमित्यर्थः। स्मृत्यर्थसारे नाभिच्छेदादूर्द्ध्वं शिशुमरणे निष्प्राणनिष्क्रमणेच जननिमित्ताशौचं कृत्स्नं यथावर्णं सर्वेषां सपिण्डानामस्त्येव मरणनिमित्ते सद्यः शुद्धिरिति। 'गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत्'। अत्र सर्वत्र दशाहपदन्तत्तद्वर्णाशौचोपलक्षकम्। तदुक्तं स्मृतिसंग्रहे। अन्तर्दशाहोपरतस्य सूतकाहोभिरेवाशौचमिति। जातमृते मृतजाते वा सपिण्डानां दशाहमाशौचमिति । जातमृते नाभिच्छेदादूर्द्ध्वं मृते। तदाह जैमिनिः। 'यावन्नछिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते'। वृहस्पतिः 'जातमृते मृतजाते कुलस्य सद्यः शौचमिति, इदं मरणनिमित्ताशौचविषयम्। वृहन्मनुः 'जीवन् जातो यदि ततो मृतः सूतक एव तु। सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्'। यदि मृतो नाभिच्छेदात्पूर्वं यदि मृत इत्यर्थः। सूतकं जननिमित्तकमाशौचम्। स्मृत्यन्तरेपि 'जीवन् जातोयदि प्रेयात् सद्य एव विशुद्ध्यति'। एतच्छावाशौचाभिप्रायम्। शङ्खः। प्राङ्नामकरणात्सद्यः शुद्धिरिति। एतत्पितृमातृव्यतिरिक्तविषयम्। तयोस्तुत्रिरात्रम्। तदाह कश्यपः। 'बालानामजा-

तदन्तानां त्रिरात्रेण शुद्धिरिति। तथा 'बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम्'। मातापित्रोरुपनयनपर्य्यन्तं त्रिरात्रमेवेति। 'अजातदन्ते तनये शिशौ गर्भच्युते तथा। सपिण्डानां तु सर्वेषामेकरात्रमशौचकम्'। सपिण्डानां तु नामकरणानन्तरमग्निदानादिसंस्कारे कृते एकरात्रम्, अकृते सद्यः शुद्धिरिति भावः। तदाह याज्ञवल्क्यः। 'आदन्तजननात्सद्य आचूडान्नैशिकी स्मृता। त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्'। अत्र दन्तजननादयस्तत्तत्कालोपलक्षका इति। 'नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्य्यान्नाम्नि वापि कृते सति'। अत्रोदकक्रियेत्यग्निदानस्याप्युपलक्षकम्। उदकक्रियाया अग्निदानपूर्वकत्वात्। अत्र संस्काराः पश्चापि तूष्णीमेव। तदाह लौगाक्षिः। 'तूष्णीमेवोदकं कुर्य्यात्तूष्णीं संस्कारमेव च'। संस्काराकरणपक्षे निखननमेव। तदुक्तम्। 'ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि। यमगाथां गायमानो यमसूक्तमनुस्मरन्'। प्रथमवर्षे अकृतचूडस्याप्यग्निसंस्कारे कृते अहोरात्रम्। तदाह विष्णुः 'दन्तजातेऽप्यकृतचूडेत्वहोरात्रेण शुद्धिरिति। वसिष्ठः। 'ऊनद्विवार्षिके प्रेते गर्भपतनेवा सपिण्डानां त्रिरात्रमेवेति। प्रथमवर्षे कृतचूडस्य त्रिरात्रमेवेत्यर्थः, चूडानन्तरमग्निसंस्कारस्यावश्यकत्वात्। वर्षत्रयादूर्ध्वमकृतचूडस्यापि त्रिरात्रमाशौचम्। 'नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया' इति मनुस्मरणात्। मनुना न्यूनत्रिवर्षसंस्कारानिषेधेन त्रिवर्षादूर्द्ध्वं तदभ्यनुज्ञानादिति। कन्याया विशेषमाहापस्तम्बः। 'अकृतचूडायाङ्कन्यायां सद्यःशुद्धिरिति। कृतचूडानामपि वाग्दानात्पूर्वमेकाहेन शुद्धिरिति। तदाह याज्ञवल्क्यः। 'अहस्त्वदत्तकन्यासु बालेषु च विशोधनम्'। अदत्ता वाग्दानरहिता। कन्यानामाशौचे त्रैपुरुषमेवसापिण्ड्यम्। तदाहवसिष्ठः। 'अदत्तानां तु स्त्रीणान्त्रिपुरुषीविज्ञायते' इति। मरीचिः। 'वारिपूर्वं मदत्ता तु यानैव प्रतिपा-

दिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम्' । उभयोः पितृमातृकुलयोः । विवाहानन्तरं विशेषमाह विष्णुः । 'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रन्त्रिरात्रं च' इति । एकरात्रं प्रसवे त्रिरात्रं मरणे चेत्यर्थः । अङ्गिराः 'अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः । त्रिरात्रात् तु भवेच्छुद्धिः कन्यास्वह्नोविधीयते' । इदं वयोऽवस्थाशौचं सर्ववर्णसाधारणम् । कन्यासु अह्नः शुद्धिः चूडातो वाग्दानपर्यन्तमेकाहाशौचमित्यर्थः । 'आजन्मनस्तु चूडान्तं यदि कन्या विपद्यते । सद्यःशौचं भवेत्तत्र सर्ववर्णेष्वयं विधिः । ततोवाग्दानपर्यन्तं यावदेकाहमेव तु' इति वचनात् । इति वयोऽवस्थाशौचम् ॥

संस्कारानन्तरम्

अथ कृतसंस्काराणां पूर्णाशौचमुच्यते । हारीतः । 'आमौञ्जीबन्धनाद्विप्रः क्षत्रियस्त्वाधनुर्ग्रहात् । आप्रतोदग्रहाद्वैश्यः शूद्रस्त्वावस्त्रयुग्ग्रहात्' । अत्रमौञ्जीबन्धनादिपर्य्यन्तं विप्रादिरसंस्कृतो भवतीत्यर्थः । तदनन्तरं संस्कृतः । संस्कारानन्तरं सर्वेषां पूर्णाशौचमिति भावः । निर्हरणमाहमनुः । 'दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् । पश्चिमोत्तरपूर्वैस्तु यथायोग्यं द्विजन्मनः' । याज्ञवल्क्यः । 'आचार्य्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती । सकटान्नं नचाश्नीयान्नच तैः सह संवसेत्'। सब्रह्मचारी, सकटान्नमशौचान्नम् । व्रती व्रत्येव ब्रह्मचर्यव्रतान्न भ्रस्यत इत्यर्थः । मातापितृव्यतिरिक्तविषये स एवाह 'न ब्रह्मचारिणः कुर्युरुदकं पतिता नच' । उदकमिति पिण्डदानाद्युपलक्षणम् । मनुः । 'आदिष्टी नोदकं कुर्यादाव्रतस्यसमापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्'। आदिष्टी ब्रह्मचारी । वृद्धमनुः ।'क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः। गर्भभर्तृद्रुहश्चैव सुराप्यश्चापि योषितः'। अज्ञातिसंस्कारे शौनकेन विशेषउक्तः। 'अज्ञातिदाहे प्रथमे तृतीये षट्षट्प्रदद्यादुदकादि-

पिण्डान् ॥ अष्टौ द्वितीयेऽहनि पञ्च पञ्च श्राद्धं चतुर्थे दिवसे च कुर्य्यात्" इति ॥ याज्ञवल्क्यः— "पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः । सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः" ॥ आसामशौचोदकपिण्डादि न विधेयमित्यर्थः ॥ यद्वा पाखण्डिनो वेदबाह्या, अनाश्रिता अनाश्रमिणः, स्तेनाः स्वर्णहारिणः ॥ अत्र स्तेनपदं पतितमात्रोपलक्षकमिति ॥ अङ्गिराः– "चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिण्डदानं च यदेतेभ्यः प्रदीयते । नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति" ॥ मनुः– "वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम् । आत्मनस्त्यागिनां चैव निवापो न विधीयते" ॥ निवापः श्राद्धतर्पणम् । गौतमः– "प्रायो[1]ऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति" ॥ इच्छतां कामत आत्मत्यागिनामित्यर्थः ॥ मिताक्षरा "आत्मनस्त्यागिनां नास्ति पतितानां नच क्रिया । तेषामपि तथा गङ्गातोये संस्थापनं मतम्" ॥ षट्त्रिंशन्मते "गोब्राह्मणहतानां च पतितानां तथैवच । ऊर्द्ध्वं संवत्सरात्कार्य्यं सर्वमेवौर्द्ध्वदेहिकम्" ॥ वृद्धयाज्ञवल्क्यः–'नारायणबलिः कार्यो लोकगर्हाभयान्नरैः । तेन तेषां भवेच्छौचं नान्यथेत्यब्रवीन्मनुः' ॥ साग्नेर्दुर्मरणे विशेषमाहाङ्गिराः– "वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नौ यजमाने वृथामृते" ॥ पराशरः– "चाण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि । आहिताग्निस्तु यो विप्रो विशेषादात्मघातकः । दहेत ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ।

१ प्रायो महाप्रस्थानम् । अनाशकमनशनम् । उद्बन्धनं गलपाशादि, गिरिशिखराद्युच्चप्रदेशादवपातः प्रपतनं । अत्र चेच्छतामिति विशेषणोपादानात्प्रमादकृते दोषो नास्तीत्यवगन्तव्यम् ॥

दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः। स्वेनाग्निना स्वमन्त्रेण पृथगेनम्पुनर्दहेत् " ॥ आम्नाये- " कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कटम्। रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुद्ध्यति "। अकृतप्रायश्चित्तानां स्नेहेनौर्ध्वदेहिकं कृत्वा प्रायश्चितीभवतीत्यर्थः ॥ संवर्त्तः- " एषामन्यतमं प्रेतं यो दहेत वहेत वा। कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥ यदि कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः। तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया "॥ 'वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्'। सर्पहते तु विशेषः स्मृत्यर्थसारे प्रोक्तः—तस्य नागव्रतं कार्यम्। नागपञ्चम्यामुपवासः कर्तव्यः। यद्वा चतुर्थ्यामेकभक्तं पञ्चम्यां नक्तं कुर्यात्। दारुमयं मृण्मयं वा नागं पञ्चफणं कृत्वा गन्धैः करवीरैःसितपत्रैर्जातीकुसुमैरनन्तं वासुकिं शेषपद्मं कर्कोटकं अश्वतरं धृतराष्ट्रं शङ्खपालं कालिकं कापिलं च पञ्चम्यां संपूज्य पश्चाद्ब्राह्मणान् घृतपायसमोदकैर्भोजयेत्। संवत्सरान्ते चैव हि महाब्राह्मणभोजनम्। सौवर्णनागदानं च कुर्यादिति। भविष्यपुराणे " सुवर्णतारनिष्पन्नं नागं कृत्वा तथैव गाम्। व्यासाय दत्वा विधिवत्पितुरानन्त्यमाप्नुयात्। नारायणबलिश्च स्मृत्यर्थसार एवं प्रोक्तः। कस्यां चिच्छुक्लैकादश्यां विष्णुं वैवस्वतं च यथावदभ्यर्च्य तत्समीपे मधुघृताप्लुतान् दधिपिण्डान् विष्णुरूपेण प्रेतमनुस्मरन् प्रेतस्य नामगोत्रे उच्चार्य्य दक्षिणाग्रेषु दर्भेषु दक्षिणामुखो दत्वा गन्धाद्यैरभ्यर्च्य पिण्डप्रवहणान्तं कृत्वा नद्यादौ प्रक्षिपेत् न पत्न्यादिभ्यो दद्यात्। ततस्तस्यामेव रात्र्यामयुग्मान्ब्राह्मणानामन्त्र्योपोषितः श्वोभूते मध्यान्हे विष्णुमभ्यर्च्यैकोद्दिष्टविधिना

ब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा पिण्डपितृयज्ञवदुल्लेखनाद्यवनेजनान्तं कृत्वा विष्णवे ब्राह्मणसमाय ? यमाय सपरिवाराय चतुरः पिण्डान् दत्वा नामगोत्रसहितं प्रेतं संस्मृत्य विष्णोर्नामसङ्कीर्त्य पञ्चमं पिण्डं दद्यात्। ततोविप्रानाचान्तान् दक्षिणाभिस्तोषयित्वा तन्मध्ये चैकं ब्राह्मणं प्रेतबुद्ध्या संस्मरन् गोभूहिरण्यादिभिरतिशयेन सन्तोष्य पवित्रपाणिभिर्विप्रैः प्रेताय तिलसहितमुदकं दापयित्वा स्वजनैः सह भुञ्जीतेति ॥

स्त्रियाःपतिनासहगमनम्। अन्वारोहणे विशेषमाह स्मृत्यर्थसारः। सहदहने तु पिण्डश्राद्धादौ पाकैक्यं कालैक्यं च भवतीति। विकल्पमाह विष्णुः। ब्रह्मचर्यं तदन्वारोहणं वेति। हारीतः "मातृकं पैत्रिकं चैव यत्र कन्या प्रदीयते। कुलत्रयं सा पुनाति भर्त्तारं यानुगच्छति'। शङ्खाङ्गिरसौ 'तिस्रः कोट्यर्द्धकोटी च यानि लोमानि मानवे। तावत्कालं वसेत्स्वर्गे भर्त्तारं यानुगच्छति। व्यालग्राही यथा व्यालं विलादुद्धरते बलात्। तद्वद्भर्त्तारमुद्धृत्य तेनैव सह मोदते। तत्र सा भर्त्तृपरमा स्तूयमानाप्सरोगणैः। क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्द्दशेति। हारीतः "मृते भर्त्तरि या नारी समारोहेद्धुताशनम्। सारुन्धतीसमाचारा स्वर्गलोके महीयते। यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्। तावन्न मुच्यते साहि स्त्री शरीरात् कथञ्चन'। तथा 'ब्रह्मघ्नो वा कृतघ्नोवा गुरुघ्नो वा भवेत्पतिः। पुनात्यविधवा नारी तमादाय मृता तु या'। उशनाः "पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति। अन्यासां चैव नारीणां स्त्रीधर्मोयं परःस्मृतः"। ब्राह्मण्याः पृथक्चित्यारोहणनिषेधो नत्वन्वारोहणनिषेध इतिविभाव्यम्। यत्तु 'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्। न स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्। सा स्वर्गमात्मघातेन नात्मानं न पतिं

नयेव " इति वचनं तदपिपृथक् चित्यारोहणपरम् । यदपि—देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् । निधायोरसि संशुद्धा प्रविशेज्जातवेदसम्, इत्यादिवचनं पृथक्चित्यारोहणविधायकं तदपि क्षत्रियादिविषयमवसेयम् । अन्वारोहणं तु सर्वासां स्त्रीणामगर्भिणीनामबालापत्यानामाचाण्डालं साधारणोधर्मः । 'कुर्यादनुमृतिं साध्वी सर्ववर्णस्य सुन्दरि । स्तनन्धयशिशुर्भद्रे नानुयायाच्च गर्भिणी, इति गौरीं प्रति शङ्करवचनात् । " चितिभ्रष्टा च या नारी मोहाद्विचलिता तु या । प्राजापत्यं चरेत्कृच्छ्रमन्यथा निन्दिता भवेदिति ॥

अथ सपिण्डनिर्हरणे विशेषमाह मनुः " असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् । विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् । यद्यन्नमत्ति तेषां वै दशाहेनैव शुद्ध्यति । अनदन्नन्नमह्नैव नचैतस्मिन् गृहे वसेत्' । एतत्सजातीयविषयं । विजातीये विशेषमाह गौतमः " अवरश्चेद्वरं वर्णमुपस्पृशेत् वरोवाप्यवरं तच्छावोक्तं तस्याशौचम्' इति । ब्राह्मे "ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन । कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेत् । पुत्राः कुर्वन्ति विप्राय क्षत्रविट्शूद्रयोनयः । पुरोहितोऽनपत्ये च मृते मन्त्रीच राजनि । मृते राज्ञः सपिण्डे तु निरपत्ये पुरोहितः । मन्त्री वा तदशौचन्तु तीर्त्वा पश्चात्करोति सः' । अनाथप्रेतनिर्हरणे पराशरः " अनाथं ब्राह्मणं प्रेतं ये दहन्ति वहन्ति च । पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते । न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् । जलावगाहनात् तेषां सद्यःशौचं विधीयते" । विधवापुत्रे विशेषमाह मरीचिः "स्वगोत्रे वान्यगोत्रे वा योभवेद्विधवासुतः । पिण्डश्राद्धविधानं च क्षेत्रिणे प्राक् स निर्वपेत् । वीजिने तु ततः पश्चात् क्षेत्री जीवति चेत्कचित् । वीजिने द-

घुरादौ च मृते पश्चात्प्रदीयते'। एतत्तु नियोगोत्पन्नविषयम्। अनियोगोत्पन्ने नारदः "जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा। अरिक्थभाजस्ते सर्वे वीजिनामेव ते सुताः। दद्युस्ते वीजिने पिण्डं माताचेच्छुल्कतो धृता। अशुल्कोपनतायां तु पिण्डदा वोढुरेव ते'। शुल्कपणः प्रथमौर्द्ध्वदेहिकं ज्येष्ठपुत्र एव कुर्यात्। इत्याहमरीचिः 'सर्वैरनुमतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्। द्रव्येन चाविभक्तेन सर्वैरेव कृतम्भवेत्'। विभक्तद्रव्येष्वपिज्येष्ठेनैव कार्यमित्याह मिताक्षरा "नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैवतु कार्याणि संविभक्तधनेष्वपि'। एकेन मुख्येन ज्येष्ठेनेति यावत्। स्मृत्यर्थसारेपि "अनेकपुत्रत्वे इतरानुमतो ज्येष्ठ एव दद्यात्। द्रव्येन विभक्तो वा अविभक्तोवेति। संस्कारविधिस्तु शाखाभेदेन भिन्नत्वान्नोक्तः। स्वस्वगृह्य एव ग्राह्य इति। दाहमन्त्रस्तु "कृत्वा सुदुष्करं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम्। कामक्रोधसमायुक्तं लोभमोहसमावृतम्। दहेयं सर्वगात्रेषु दिव्यान् लोकान् स गच्छतु" रात्रिमृतस्य रात्रावेवदाहः कार्यो वपनन्तु प्रातरित्युक्तं स्मृतिसंग्रहे। 'रात्रौ दग्ध्वातु पिण्डान्तं कृत्वा वपनवर्जितम्। वपनं नेष्यते रात्रौ श्वस्तदा वपनक्रिया'। निगमवचनम्। "सन्ध्यायां च तथा रात्रौ दाहं पाथेयकर्मच। नवश्राद्धं च नोकुर्यात्कृतं निष्फलतां व्रजेदिति'। इदं तु दिनमृतस्यालस्यादिना रात्रौ दाहो न कार्य इत्येवं परम्। 'द्वितीये ऽहनि कर्त्तव्यं क्षुरकर्म प्रयत्नतः। तृतीये पञ्चमे वापि सप्तमे वाप्रदानतः'। द्वितीयाहादिविकल्पाः पूर्वत्रासम्भवे उत्तरत्र कर्तव्यमित्येवंपरा इति।

सूतकान्ते तु सूतकनिवृत्त्यर्थकं वपनं कुर्यात्। तदाह-
वपन-विचारः देवलः "दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिश्चरेत्। तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च'। द-

शमेऽहनीति सूतकान्तोपलक्षणम् । केशश्मश्र्वादित्यागस्य सूतकान्तकर्त्तव्यवस्त्रत्यागसाहचर्यात्सूतकान्त एव कर्त्तव्यत्वं प्रतीयते । वाससां च सूतकान्ते त्यागः स्मृत्यन्तरे प्रोक्तः "अन्तेच वाससां त्याग' इति। वपनं केषामित्याकाङ्क्षायामाहापस्तम्बः " अनुभाविनां परिवापनमिति । अनु पश्चाद्भवन्तीत्यनुभाविनः कनिष्ठाः। नच लक्षणया अनुभाविपदं पुत्रपरमेवास्तु पुत्रस्यैव वपनेऽधिकारात्। तदुक्तम् " गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते । आधाने सोमपाने च वपनं सप्तसु स्मृतम् "। सप्तस्वेव वपनमुक्तमतः कथम् ज्येष्ठमात्रे मृते कनिष्ठस्य वपनमुचितमितिवाच्यम् । सप्तस्वपि वपनं नतु सप्तस्वेव वपनमित्यर्थो हि सम्भवति । नच सप्तस्वित्यधिकसंख्याव्यवच्छेदपरं विरोधात्। सन्ति हि संन्यासे प्रायश्चित्तविशेषे प्रयागादौ च वपनविधायकवाक्यानि तान्यप्रमाणानि स्युः। तथाहि " शिखासूत्ररहितस्य प्रव्रज्या श्रुतावुक्ता । मिताक्षरायां च महापातकिनो गोवधिनोऽवकीर्णिनश्च प्रायश्चित्ते वपनमुक्तम्। उदाहृतं च " विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् । ऋते महापातकिनो गोहन्तुश्चावकीर्णिन' इति। प्रयागवपनविधायकं वचनम्।"किङ्गयापिण्डदानेन काश्यां वा मरणेन किम्। किङ्कुरुक्षेत्रदानेन प्रयागवपनं यदि"इति। नच भास्करक्षेत्रे प्रयाग इत्यर्थस्तेन प्रयागवपनमपि सप्तान्तर्गतमेवेति वाच्यम्। भास्करक्षेत्रे सूर्यक्षेत्र इत्यर्थः । अत एव पुरुषोत्तमक्षेत्रस्थमार्कण्डेयहृदे सूर्यक्षेत्रतया कोणार्के च शिष्टा वपनं कारयन्ति । अतिप्रसङ्गभिया भास्करक्षेत्रपदं योगरूढमस्तु यथा तव प्रजापतिक्षेत्रपदम् । किञ्च-प्रयागस्य भास्करक्षेत्रत्वे मानाभावः।नहि प्रयागस्य भास्करक्षेत्रत्वप्रतिपादकं पुराणादिकं श्रूयते। श्रूयते च प्रजापतिक्षेत्रत्वप्रतिपादकं ब्रह्मपुराणादिकं 'एतत्प्रजापति-

क्षेत्रं सर्वकामफलप्रदम्' इति। अपिच कुरुक्षेत्रादिव्यतिरिक्तेषु सर्वेषु तीर्थेषु वपनविधानान्न सप्तस्वितिनियमः। नच तत्रापि सर्वतीर्थपदं प्रयागपरम् 'एवं कुरुष्वकौन्तेय सर्वतीर्थाभिषेचनम्' इति वचनमत्र प्रमाणमितिचेद् भ्रान्तोसि। नह्यनेन वचनेन सर्वतीर्थपदस्य प्रयागमात्रवाचकत्वं प्रतिपाद्यते शक्तिग्राहकत्वाभावादस्य, नच प्रकरणात्तथा बुद्ध्यामहे। अत्रहीदं तात्पर्यं पुराणस्य, अत्र प्रयागे सर्वाणि तीर्थानि सन्तीत्युक्तं। तेषां तीर्थानां नामानि चोक्तानि। तत्र तत्र स्नानं कुरुष्वेति पृथक्पृथगुक्तं पश्चादुपसंहृतम् 'एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनमिति। किञ्च। सर्वतीर्थपदस्य प्रयागे शक्तिर्योगो वा। नाद्यः मानाभावात्। नहि कोषव्याकरणं तादृगस्तीति। नद्वितीयः गङ्गादावपि सर्वतीर्थत्वसम्भवात्। सर्वतीर्थमयी गङ्गेत्यादिवचनात्। नच सर्वतीर्थमुण्डनविधायकवाक्यस्यानुष्ठानलक्षणमप्रामाण्यमापतितम्। नहि स्वदेशीयनद्यादौ शिवालयादौ तुलसीमूलादौ तीर्थेपि वपनं कारयन्ति शिष्टा इति वाच्यम्। यदेव प्रधानतीर्थमयोऽध्यादिकमुद्दिश्य यात्रा विहिता तत्रैव वपनौचित्यादन्यथा तीर्थमात्रश्राद्धविधायकवचनस्याप्यननुष्ठानलक्षणाप्रामाण्यापत्तिरिति ध्येयम्। अपिच सर्वतीर्थपदस्य प्रयागपरत्वे बहुवचनवैयर्थ्यम्। नच ग्रहं संमार्ष्टीतिवदविवक्षितार्थम्। तत्र ग्रहत्वेन सामान्येन बहूनां सङ्ग्रहौचित्यात्। अत्रह्येकस्मिन्वहुवचनवैयर्थ्यादेवग्रहदृष्टान्तवैषम्यम्। सर्वाणि तीर्थान्यस्मिन्निति व्युत्पत्त्या बहुव्रीहिकरणे निषादस्थपत्यधिकरणविरोधश्च। सर्वतीर्थपदस्य प्रयागमात्रपरत्वेतीर्थान्तरे प्रसक्त्यभावः। नचेष्टापत्तिः 'मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयंविधिः। वर्जयित्वाकुरुक्षेत्रं नैमिषं पुष्करङ्गयामिति वचनेन कुरुक्षेत्रादिवर्जनानुपपत्तेः प्रसक्त्यभावा-

१ मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयं विधिरित्यग्रिमश्लोकाशयः

दिति, न चाप्रसक्तमप्यत्यन्ताप्राशस्त्याय निषिध्यते अयज्ञियामाषा इति श्रुत्यामाषवदिति वाच्यम् । वैषम्यात् । तत्रहि मौद्गश्चरुर्भवतीति श्रुत्या मुद्गानां विशेषविधानेपि प्रतिनिधित्वेन माषे प्रशक्तेः तदुक्तम् 'यथोक्तवस्त्वसम्पत्तौ ग्राह्यन्तदनुकारिचेत्यादि। प्रकृते न तथेति वैषम्यम्। गङ्गामुण्डनस्य प्रयागावच्छिन्नगङ्गापरत्वकल्पनमपि कल्पनमेव। वर्जयित्वा गयां गङ्गामिति वाक्यस्य मैथिलनिबन्धं विहाय निबन्धान्तरेष्वदर्शनादिति। समावर्त्तनानन्तरं गृहस्थस्य केशवपनं नियप्राप्तमेव निषिद्धतिथिनक्षत्रादि विहाय। तदाहमनुः 'क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरश्शुचिः। न जीर्णमलवद्वासा भवेच्च विभवे सतीति। याज्ञवल्क्योपि 'शुक्लाम्बरधरोनीचकेशश्मश्रुनखः शुचिः। न भार्यादर्शनेऽश्नीयान्नैकवासा नचास्थित' इति। नच क्लृप्तेतिपदेन केशानां कर्त्तनं नीचीकरणमेव तदोचितमिति वाच्यम् । श्मश्रुणोप्यवपनापत्तेः। नहीदृशं वाक्यमस्ति केशान्कर्त्तयेत् श्मश्रूणि वापयेत् इति । नच 'गङ्गायां भास्करक्षेत्रे पितृमातृवियोगतः। कचानां वपनं कार्यं वृथा न विकचोभवेदिति वाचस्पतिमिश्रोदाहृतवचनेन विरोध इति। वृथा ज्ञानं विना न विकचोभवेत् न संन्यासीभवेदित्यर्थात् । 'वृथाजटी वृथामुण्डी वृथानग्नश्च योद्विजः। ते वै नग्नादयः श्राद्धे निषिद्धाः'। ज्ञानं विना जटाधारी वृथाजटीत्यादिस्त्वयमूह्यम् । नच गङ्गायां भास्करक्षेत्रे पितृमातृवियोगत इति स्थानचतुष्टये मुण्डनं योन कारयति स एव वृथाविकच इति वाच्यम् । आधानसोमपानमुण्डनेपि वृथाविकचत्वापत्तेः । एतस्य वाक्यस्योपलक्षणपरत्वे स्नातकोक्तमुण्डनेपि न वृथामुण्डित्वापत्तिरिति प्रकृतमनुसरामः ।

अशौचे सपिण्डानां नियमानाहमनुः 'अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् । मांसाशनञ्च नाश्नीयुः शयीरँश्च पृथक् क्षितौ । गौतमः 'अधः शय्यासनिनो ब्रह्मचारिणः सर्वे ।

याज्ञवल्क्यः 'क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्' क्रीतलब्धाशननियमोदिनत्रयमेवेति । तदाहवाशिष्ठः 'ऽयहमनश्नन्तआसीरन् क्रीतोत्पन्नेनवा वर्त्तेरन्' ऽयहमनश्नन्त इति क्रीतलब्धान्नाभावे बोध्यम् । रजस्वलायाः सूतिकायाश्च मृतायाःशुद्धिं कृत्वा दाहादि कुर्य्यात् । शुद्धिमाहमिताक्षरा 'सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिका' इति प्रश्ने उत्तरम् । कुम्भे सलिलमादाय पञ्चगव्यं तथैव च । पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः । तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि । पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रेणान्तरितां कृत्वा दाहयेद्विधिपूर्वकम्' । वाचा ब्राह्मणवचनेन । उशनाः 'ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा । चतुर्थेऽहनि सम्प्राप्ते स्पृशेत्साऽनातुरां स्त्रियम् । सा सचैलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् । दशद्वादशकृत्वो वा आचामेच्च पुनः पुनः । अन्ते च वाससां त्यागात्ततः शुद्धा भवेत्तु सा । दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति' । मनुः 'शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति । पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणम् । यदाहात्रिः 'रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न गच्छति । एकोनविंशतेरर्वागेकाहं स्यात्ततोद्व्यहम् । विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् । यत्तु क्वचित् 'चतुर्दशदिनादर्वागशुचित्वं न विद्यत' । इति तत्स्नानदिनप्रभृतिदिनगणनाभिप्रायम् ।

अथर्क्षपञ्चकमृतदाहविधिः गारुडे 'आदौकृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम् । रेवत्यन्तं सदा दूष्यमशुभं मरणे भवेत् । दाहस्तत्र न कर्त्तव्यः कृतेऽन्यमरणं भवेत् । न जलं दीयते तेषु अशुभं सर्वदा भवेत् । पञ्चकानन्तरं कार्यं कर्त्तव्यं सर्वमन्यथा । पुत्राणां गोत्रिणां तस्य

सन्तापोह्युपजायते । गृहहानिर्भवेत्तस्य ऋक्षेष्वेषु मृतस्तु यः । अथवा ऋक्षमध्येपि दाहस्तु विधिपूर्वकः । क्रियते मानुषाणां तु सद्य आहुतिकारणात् । विप्रैर्नियमतः कार्यो मन्त्रैस्तु विधिपूर्वकम् । शवस्य तु समीपेषु क्षेप्तव्याः पुत्तलास्ततः । दर्भमय्याश्च चत्वार ऋक्षमन्त्राभिमन्त्रिताः । ततोदाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सह । सूतकान्ते तदा पुत्रैः कार्यं शान्तिकपौष्टिकम् । पञ्चकेषु मृतो योसौ न गतिं लभते नरः । तिलानि च हिरण्यं च तदुद्देश्ये घृतं क्षिपेत् । विप्राणां दीयते दानं सर्वविघ्नविनाशनम् ।

अथ स्वाशौचान्तिमभागे गते अशौचिनोऽङ्गस्पर्शो भवति । तदाह देवलः । 'दशाहादित्रिभागेन कृते सञ्चयने क्रमात् । अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्वदर्शिनः । स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः । शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदनादिति ।

अथ वर्णभेदाशौचम् । ब्राह्मे ' शुद्ध्येद्विप्रोदशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रोमासेन शुद्ध्यति ' । ब्राह्मणविषये मनुः ' दशाहं शावमाशौचं सपिण्डेषु विधीयते । जननेप्येवमेवं स्यान्निपुणां शुद्धिमिच्छताम् । महागुरौ विशेषमाहाश्वलायनः 'द्वादशरात्रं वा महागुरुषु दानाध्ययने न कुर्वीरन्निति । महागुरुस्वरूपं स एवाह 'पुत्रानुत्पाद्यार्थं ग्राहयित्वा वृत्तिं यो विदधाति स महागुरुरिति । क्षत्रादिविषये याज्ञवल्क्यः 'क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु । त्रिंशद्दिनानि शूद्रस्य तदर्द्धंन्यायवर्त्तिनः । स्वधर्मरतस्य क्षत्रस्य विशः शूद्रस्य चेत्यर्थः न्यायवर्त्तित्वं सर्वेषामर्द्धाशौचनिमित्तं नतु सन्निहितत्वाच्छूद्रस्यैवेति भ्रमः कार्यः । निर्णयामृतकृतस्तु भ्रमाच्छूद्रमात्रपरतया व्याचक्षिरे । मनुः 'विप्रः शुद्ध्यसपः स्पृष्ट्वाक्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मिं वा यष्टिं शूद्रः कृतक्रियः । कृतक्रियः शौचानन्तरं कृतस्ना

नादिः। कश्यपः 'रात्रावेव समुत्पन्ने मृते रजसि सूतके। पूर्वमेवदिनं ग्राह्यं यावन्नोदयते रविः। उदिते तु यदा सूर्ये नारीणां दृश्यते रजः। जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी। अर्द्धरात्रावधिः कालः सूतके तु विधीयते'। अर्द्धरात्रपदं प्रथमभागद्वयपरम्। तदुत्तरमुत्तरदिनगणनेत्यर्थः। सूतके अशौचे। 'नक्तं कुर्यात्त्रिभागं तु द्वौभागौ पूर्व एवतु। उत्तरोंऽशः प्रभातेन युज्यते मृतसूतके। तथा 'निशाभागत्रयं कुर्याद्द्वौभागौ पूर्ववासरे। शेषं परदिनं ज्ञेयं स्थालीपाकमृते क्रतौ'। यावन्नोदयते रविरित्यपि निशातृतीयभागाभिप्रायम्। दशप्रकारमशौचमाह दक्षः 'सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा। षड्दशद्वादशाहश्च पक्षो मासस्तथैव च। मरणान्तं तथा चान्यद्दशपक्षास्तु सूतकम्'॥तत्र सद्यः-

अशौचापवादः।

शौचिनो दर्शयति। याज्ञवल्क्यः 'ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्। सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा। दाने विवाहे यज्ञे च संग्रामे राष्ट्रविप्लवे। आपद्यपि च कष्टायां सद्यःशौचं विधीयते'। दीक्षितानां यज्ञप्रवृत्तानामेव सद्यःशुद्धिः। तदुक्तं यज्ञियं कर्म कुर्वतामिति। सत्रिपदेनान्नसत्रिणो ग्राह्याः। तदन्येषां याज्ञिकानां दीक्षितपदेन च प्राप्तेः।व्रतिनः कृच्छ्रचान्द्रायणादिप्रवृत्ताः, संग्रामे सग्रामोद्यतकरस्य राज्ञः सन्नाहविधौ प्रास्थानिकहोमादौ,कष्टायामापदि व्याध्याद्यभिभूतस्य दुरितसमनार्थे कर्मणि, संकुचितवृत्तेः क्षुत्परिम्लानमातापित्राद्यवश्यपोष्यवर्गस्य भरणोपयोगिनि प्रतिग्रहे वा। अश्वस्तानिकस्य वा प्रतिग्रहे।न विद्यते श्वस्तनं भक्ष्यं यस्य स अश्वस्तनिक इति। यस्त्वेकाहपर्याप्तधनसञ्चयवांस्तस्यैकाहः, यस्त्र्यहोपभोग्यधनसञ्चयी तस्य त्र्यहः, यश्चतुरहार्थसञ्चितधनकुम्भीधान्यस्तस्य चतुरहः। कुसूलधान्यस्य दशाह इति स्मृत्यन्तरे 'निक्षमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु। प्रवृत्ते

कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने। गृहीतनियमस्यापि न स्याद-न्यस्य कस्य चित्'। सद्यःशुद्धिरिति शेषः। तथा "निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि। निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्वि-रतस्यच। अग्रे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्'। मरणा-न्तिकमशौचमाहदक्षः। "अस्नात्वा चाप्यहुत्वा चादत्वा जप्त्वा च खादति। एवं विधस्य विप्रस्य सर्वदा सूतकं भवेत्। व्याधि-तस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा। क्रियाहीनस्य मूर्खस्य स्त्री-जितस्य विशेषतः। व्यशनासक्तचित्तस्य पराधीनस्य नित्यशः। श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत्'। व्याधितस्य असाध्य-व्याधिमतः। कदर्यलक्षणमाह स एव। "आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन्। लोभाद्यः प्रचिनोत्यर्थान् स कदर्य उदाहृतः'। क्रियाहीनस्य नित्यकर्मत्यागिनः। न पठति न शृणोति स मूर्ख स्तस्य। स्त्रीजितस्य स्त्रीवशतया मात्रादित्यागिनः। व्यशनासक्त-चित्तस्य द्यूतमृगयाद्यासङ्गेन सत्कर्मत्यागिनः। पराधीनस्य परसे-वया नित्यकर्मकरणे निरवकाशस्य। साग्नेर्निरग्नेश्चाशौचाव-धिमाह। पैठीनसिः 'अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु। दाहादग्निमतो विद्याद्विदेशस्थे मृते तथा'। तथा 'दाहादूर्द्धमशौचं स्याद्यस्य वैतानिकोविधिः। मरणादेव कर्त्तव्यं संयोगो यस्य ना-ग्निना'। अनुलोमक्षत्राद्यशौचे विप्रस्य विशेषमाह बौधायनः 'क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः। तेषामशौचं विप्रस्य दशाहान्न विशिष्यते'। हारीतः 'दशाहाच्छुद्ध्यते विप्रो जन्महान्योः[1] स्वयोनिषु। षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु'। एतदापद्विषयम्। क्षत्रियस्य विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरा-त्राभ्यां, वैश्यस्य शूद्रे सपिण्डे षड्रात्रेण शुद्धिरित्यपि प्राग्वत्।

---

१ जन्ममरणयोरित्यर्थः। २ हारीतवचनमितिभावः।

विलोमजेषु विशेषमाहापस्तम्बः। "क्षत्रविट्शूद्रजातीनां जाते मृतकसूतके। तेषां च पैतृकं शौचं विभक्तानां तु मातृकम्"। हीनवर्णानामुत्कृष्टेषु सपिण्डेषु जातेषु मृतेषु चाविभक्तेषु स्वतो विभक्तेषु च मातृतोऽशौचकल्पनेत्यर्थः। यदपि 'शौचाशौचे प्रकुर्वीरन् शूद्रवद्वर्णसङ्करा' इति मैथिलनिबन्धीयं वाक्यं तदपि शूद्रजेषूत्कृष्टेष्वपि विभक्तेषु बोध्यम्। विजातीयानां सापिण्ड्यं तु त्रैपुरुषमेव। तदुक्तम् 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः भवन्त्येते पिण्डस्त्वावर्त्तते त्रिषु'। पृथग्जना भिन्नजातीयाः। इति सङ्कराशौचम्। मनुः 'उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च। सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः'। यज्ञः पिण्डदानादिरूपः सन्तिष्ठते समाप्तोभवति। तथा 'पिण्डाहवहतानां च विद्युता पार्थिवेन च। गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः'। सद्य-इत्यनुवर्त्तते। पिण्डोऽशस्त्रकलहः। ननु पार्थिवेच्छया कथं शौचाशौचे, इत्थं यतोमनुरेवाह। 'सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च। अष्टानां लोकपालानां वपुर्धारयते नृपः'। स्मृत्यर्थसारेपि 'स्त्रीविप्रार्थे गवार्थे च संग्रामे विद्युताच्च हतानां सपिण्डानां नाशौचमिति। यत्तु 'ब्राह्मणार्थे विपन्नानां योषितां ग्रहणेपि वा। आहवेपि हतानां च एकरात्रमशौचकम्"। तद्युद्धक्षतेन कालान्तरमृतविषयम्। तदाह स्मृत्यर्थसारः 'युद्धक्षतेन कालान्तरमरणे ग्रामेश्वरे कुलपतौ च मृतेत्वेकाहमिति। याज्ञवल्क्यः। "हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्'। अन्वक्षं सद्यः शौचम्। आत्मघातिनां शास्त्राद्यनुमत्येति शेषः।

अथ सपिण्डाद्याशौचम्। मनुः 'दशाहं शावमाशौचं सपिण्डेषु विधीयते। जननेप्येवमेवेति। अत्र दशाहपदं तत्तद्वर्णाशौचमुपलक्ष-

---

१ वित्तस्य अपाञ्च पतिस्तयोः, कुबेरवरुणयोरित्यर्थः।

यति। 'जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते'। अत्र जन्मनीत्युपलक्षणं मरणेपि बोध्यम्। एकोदकाः समानोदकाः। मनुः 'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने"। जन्मनाम्नोरवेदने समानोदकभावोनिवर्त्तते। तयोरवेदने गोत्रजा भवन्ति। ते च स्नानमात्रेण शुद्ध्यन्ति। तदुक्तम् 'दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नानमात्रेण गोत्रजा' इति। सकुल्याः समानोदकाः। असगोत्राणां तूच्यते। तत्र वृहस्पतिः 'त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्'। श्रोत्रियोत्र सन्निहितोगुणवान्विवक्षितः। तदुक्तम् 'श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्। मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च'। असान्निहिते त्वेकाहमाहाश्वलायनः। 'एकाहं सब्रह्मचारिणि समानग्रामवासिनि श्रोत्रिये च'। एकाचार्योपनीतः सब्रह्मचारी, उपनीय योऽध्यापयति स आचार्यः। मनुः 'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति। तस्य पुत्रे च पत्न्यां च दिवारात्रमितिस्थितिः। याज्ञवल्क्यः 'गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च'। त्र्यहमित्यनुवर्त्तते। वृद्धप्रचेताः 'संस्थिते पक्षिणी रात्रिर्दौहित्रे भगिनीसुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मोव्यवस्थितः। पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्। त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः। भगिन्यांच श्वशुरयोर्मातुलान्यां च मातुले। पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्'। श्वशुरयोः पित्रोरिति विरूपैकशेषः। तथा 'मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च। आशौचं पक्षिणी रात्रिं मृता मातामही यदि। वृद्धवशिष्ठः 'भगिन्यां संस्कृतायां च भ्रातर्यपि च संस्कृते। मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते। श्यालके तत्सुते चैव सर्वः स्नानेन शुद्ध्यति।एतद्ग्रामान्तरमृतागुणविषयम्। तदुक्तं स्मृत्यर्थसारे 'गुणव-

स्तु एकग्रामे एकाहं ग्रामान्तरे स्नानमिति। विष्णुः 'संस्कृतासु-स्त्रीषु नाशौचं पितृपक्षके तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं चेति। एतन्मूलकमेववचनं कल्पयन्ति। 'पितुर्गेहे यदा कन्या सूयते म्रियतेऽथवा। तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिरिति। सएवाह 'असपिण्डे गृहे मृते त्रिरात्रं सपिण्डानामेकाहमिति। गृहपतेस्त्रिरात्रं तत्सपिण्डानामेकरात्रमित्यर्थः। वृद्धविष्णुः 'ग्राममध्यगतोयावच्छवस्तिष्ठति कस्यचित्। ग्रामस्य तावदाशौचं निर्गते शुचितामियात्॥ याज्ञवल्क्यः 'अनौरसेषु-पुत्रेषु भार्यास्वन्यगतासुच'। अहोरात्रमित्यनुवर्त्तते। एतदसंनिधानविषयम्। सन्निधौ तु विष्णुः। 'अनौरसेषु पुत्रेषु जातेषु च मृतेषु च। परपूर्वासु भार्यासु प्रसूतासु मृतासु च' अत्रत्रिरात्रमित्यनुवर्त्तते। परः पूर्वं पतिर्यासान्ताः परपूर्वाः। प्रजापतिः 'अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धास्स्युः त्रिरात्रेणैव तत्पिता। मरीचिः 'सूतके मृतके चैव त्रिरात्रं परपूर्वयोः। एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुरिति। अथराजाशौचम्। मनुः 'प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः'। सज्योतिरिति-दिनमृते दिनमेव रात्रिमृते रात्रिरेवेति। सूर्यसेनीयेप्रचेताः 'कारवः शिल्पिनोवैद्या दासीदासास्तथैव च। राजानो राजभृत्याश्च सद्यः शौचाःप्रकीर्त्तिताः'। राज्ञः प्रजापालननिमित्तकशान्तिकपौष्टिकादिकर्मणि परसेनाद्युपजातानावृष्ट्याद्युपद्रवनिवृत्त्यर्थे च कर्मणि कारुशिल्पिप्रभृतीनां स्वस्वामिकर्मणि च सद्यःशुद्धिः। नित्य-नैमित्तिकादिस्वकर्मसु च स्वाशौचमस्त्येवेत्यर्थः। अङ्गिराः 'दासीदासश्च सर्वो वै यस्य वर्णस्य योभवेत। तद्वर्णस्य भवेच्छौचं दास्या मासं तु सूतकम्। दास्याः प्रसूतायाः। विष्णुः 'न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणि।

अशौचमितिशेषः । शातातपः 'मूल्यकर्मकराः शूद्राः दासीदासा-स्तथैवच । स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः' । तथा "सद्यः स्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः । चिकित्सको यत् कुरुते तदन्येन न शक्यते । तस्माच्चिकित्सकः स्पर्शे शुद्धोभवति नित्यशः । तथा 'दासा दास्यश्च यत्किञ्चित् कर्म कुर्वन्ति लीलया । तदन्यो न क्षमः कर्त्तुमतस्ते शुचयः स्मृता' इति ॥

अथविदेशस्थाशौचम् । मनुः 'विगतं तु विदेशस्थं शृणुयाद्योह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् । विगतं मृतम् । इदं जननस्याप्युपलक्षणम् । दशरात्रपदं स्वाशौचोपलक्षकम् । याज्ञवल्क्योपि 'प्रोषिते कालशेषः स्यादिति । मनुः 'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः' । अत्र पुत्र इति श्रवणात्पितुरेव स्नानं, नत्वतिक्रान्तं जननाशौचं ज्ञातीनाम् । ज्ञातिमरणश्रोतुः सचैलस्नानं विधीयते, नत्वशौचाभावः प्रतिपाद्यते अनेन वचनेन । मासत्रयादिषु त्रिरात्राद्यशौचस्य वक्ष्यमाणत्वादिति । वृद्धवशिष्ठः 'मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्द्ध्वं स्नानेन शुद्ध्यति । अहः अहोरात्रं, ऊर्द्ध्वं नवममासात् द्वादशमासपर्यन्तम् । अत्र स्नानं स्वसहचरितमुदकदानमप्याक्षिपति । मनुः 'सव्वँत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति । अथदेशान्तराशौचम् । मिताक्षरायाम् । 'देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ । मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः । देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्यन्ये त्रिंशद्वान्ये तथैव च । वृद्धमनुः 'वाचो यत्र विभिद्यन्ते गिरिर्वाव्यवधायकः । महानद्यन्तरं यत्र तद्देशान्तरमुच्यते' । यत्र त्रयमन्तरं तत्र त्रिंशद्योजनम् यत्र द्वयमन्तरं तत्र चत्वारिंशद्योजनं

यत्रैकमन्तरं तत्र षष्टियोजनं देशान्तरमिति केचित्। देशपदेन व्यवस्थापयन्त्यपरे ?। योजनमानं तु स्मृत्यर्थसारे प्रोक्तम्। 'तिर्यग्यवोदराण्यष्टावूर्द्ध्वा वा व्रीहयस्त्रयः। प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला। वितस्तिर्द्विगुणारत्निस्ततः किष्कुस्ततोधनुः। क्रोशो धनुःसहस्रे द्वे चतुःक्रोशं तु योजनमिति। एतेन विदेशस्थाशौचदेशान्तरशौचे पितृमातृव्यतिरिक्तसापिण्डादिविषये बोद्धव्ये। यदाह पैठीनसिः 'पितरौ चेन्मृतौ स्यातां दूरस्थोपि हि पुत्रकः। श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्'। दशाहमिति स्वाशौचोपलक्षकम्। सूतकी शौची। दूरस्थ इत्यनेन विदेशदेशान्तरयोः सङ्ग्रहः। विदेशमात्रसङ्ग्रहे। 'महागुरुनिपाते तु आर्द्रवस्त्रोपवीतिना। अतीतेऽब्देऽपि कर्त्तव्यं प्रेतकार्यं यथाविधि'। इत्यनेन विरोधः स्यात्। नहि निकटे विदेशेऽब्दाद्यत्ययः सम्भवति दूरपदविरोधश्च। दूरत्वं च शतसहस्रादिक्रोशसाधारणमिति। स्मृत्यर्थसारे विशेषः 'मातापितृमरणं दशाहादेरूर्द्ध्वं दूरदेशे संवत्सरादूर्द्ध्वमपि पुत्रः श्रुत्वा मरणश्रवणदिनमारभ्य दशाहादिकं यथावर्णम् पूर्णमाशौचं कुर्यात्। उदकम् पिण्डदानं च। महागुरुमरणे च 'दूरदेशे व्यतीतेऽब्दे आर्द्धवस्त्रोपवासिना। तथैवाशौचादिकं कार्यं स्त्रीपुरुषयोः परस्परम्। सवर्णोत्तमसपत्नीषु चैवम्। देशान्तरे कालान्तरे च हीनवर्णाया मातुः सपत्न्या मरणे तु पुत्रास्त्रिरात्रमिति। दक्षः 'पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः। संवत्सरे व्यतीतेपि त्रिरात्रमशुचिर्भवेत्'। इत्येतदपि हीनवर्णविमातृविषयम्। वयोवस्थाशौचे विदेशस्थाशौचे च सर्ववर्णसाधारण्यमाह व्याघ्रपादः 'तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च। उपनीते तु विषमं तस्मिन्नेवातिकालजम्' इति। वयसि वयोवस्थाशौचे आदन्तजननात्सद्य इत्यादिनोक्ते अतिक्रान्ते

विदेशस्थाशौचे च यदशौचमुक्तं तत्सर्वेषां वर्णानां तुल्यम्। उपनीते द्विजानामुपनयने स्त्रीशूद्राणां विवाहे च जाते विषमं दशाहद्वादशाहादिरूपम्। तस्मिन्नेवोपनीते एव अतिकालजमतिक्रान्ताशौचं नत्वनुपनीतस्येत्यर्थः। अतो यानि शूद्रस्य वयोवस्थाशौचे विशेषवचनानि मैथिलैर्लिखितानि तानि निर्मूलानि मिताक्षरादिभिरनादरात्। तानि यथा 'शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः। अत ऊर्द्ध्वं मृते शूद्रे द्वादशाहो विधीयते। अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम्। मृत्युं समधिगच्छेच्चेन्मासं तस्याप्यशौचकमित्यादीनि। अङ्गिराः 'अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही। त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित्'। अतिक्रान्ताशौचं गृहिणो भवति न गृहद्रव्यस्येत्यर्थः॥

अस्थ्नामप्यलाभे पर्णशरः कर्त्तव्यः। तत्र प्रकारः षष्ट्यधिकपलाशपत्रशतत्रयेण पुरुषं विरचयेत्। 'अशीत्यर्द्धं च शिरसि ग्रीवायां च दशैव वा। बाह्वोश्चैव शतं दद्यादङ्गुलीषु तथा दश। उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा। द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च। ऊर्वोश्चैव शतं दद्यात् त्रिंशतं जानुजङ्घयोः। पादाङ्गुलीषु दश वै एतत्प्रेतस्य कल्पनम्। अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः। तदभावे पलाशोत्थैः पत्रैः कार्यः पुमानपि। शतैस्त्रिभिस्तथा षष्ट्या शरत्रातैर्विधानतः। वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण बद्धातु प्रलेप्तव्यस्तथा यवैः। सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः। एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्'। इदमनाहिताग्निपरम्। वशिष्ठः "आहिताग्निश्चेत्प्रवासे म्रियेत पुनः संस्कारं कृत्वा शववदाशौचम्"। अनाहिताग्नेस्त्रिरात्रं पूर्वगृहीताशौचस्य बोध्यम्। तदुक्तं स्मृत्त्यर्थसारे। 'अतीते सूतके तु पूर्व-

मगृहीताशौचस्य पुत्रस्य पत्न्याश्च दशाहादिकं संपूर्णं अशौचम् । गृहीताशौचस्य पुत्रस्य पत्न्याश्च त्रिरात्रमिति । सपिण्डे विशेषस्तत्रैवोक्तः । अगृहीताशौचानां सपिण्डानां त्रिरात्रम् । गृहीताशौचानां पुनराशौचं नास्तीति। प्रोषितस्य वृत्तान्तानाकर्णने विशेषमाह बृहस्पतिः ‘ यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरम् । कुशपुत्रकदाहेन तस्य स्यादवधारणम्’। पितरि विशेषोजातूकर्ण्येनोक्तः । ‘पितरि प्रोषिते तस्य न वार्त्ता नैव वागतिः । ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम् । कुर्यात्तस्य तु संस्कारं यथोक्तविधिना ततः’ । स्मृत्यर्थसारे विशेषः । ‘दूरे देशान्तरगते पितरि वार्त्तां पुनः पुनः पुत्रः पर्यालोच्य जीवद्वार्त्तायामश्रूयमाणायां पूर्ववयस्के एकविंशत्यब्दादूर्द्धम् मध्यमवयस्के पञ्चदशादूर्द्ध्वं अन्तरवयस्के द्वादशादूर्द्धम् चान्द्रायणत्रयं त्रिंशत्कृच्छ्राणि वा कृत्वा पलाशपत्रैः कुशैर्वा प्रतिकृतिं कृत्वा दशाहाशौचोदकश्राद्धानि कार्याणीति । श्राद्धे कृते यदि जीवन् समागच्छेत्तदाह वृद्धमनुः ‘ जीवन् यदि समागच्छेत् घृतकुण्डे निधाय तम् । कारयेज्जातकर्मादि संस्कारानखिलानपि । द्वादशाहं व्रतचर्या त्रिरात्रमथ तस्य तु । स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः । आग्निमाधाय विधिना व्रात्यस्तोमेन वा यजेत् । अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु । इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूँस्ततः’ इति ।

शवसंसर्गाशौचम् ।

अथ शवानुगमने याज्ञवल्क्यः ‘ ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः कचित् । अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः’ । ब्राह्मणेनासपिण्डेन द्विजो विपदि शूद्रो वा नानुगन्तव्य इत्यर्थः । मनुः ‘अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा । स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य

विशुद्ध्यति'। ज्ञातिं मातृसपिण्डं पितृसपिण्डानुगमनस्य विहितत्वादिति। हीनवर्णविषये स्मृत्यर्थसारः। 'ब्राह्मणस्य क्षत्रियानुगमने एकाहम्। वैश्यानुगमने पक्षिणीं। शूद्रानुगमने त्रिरात्रम्। अशौचं कृत्वा समुद्रगायां नद्यां स्नात्वा प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति' इति। क्षत्रियस्य वैश्यानुगमने त्वेकाहम्। शूद्रानुगमने पक्षिणी। वैश्यस्य शूद्रानुगमने त्वेकाहम्। रोदने चैवमिति। वशिष्ठः 'मनुष्यास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचम्। अस्निग्धे त्वहोरात्रं, शवानुगमने चैवमिति। इदमपि पूर्वेणाविरुद्धं व्याख्येयम्। पराशरः 'प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः। अनुगच्छेन्नीयमानं स त्रिरात्रेण शुद्ध्यति। त्रिरात्रे तु ततस्तीर्णे नदीं गत्वा समुद्रगाम्। प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति'। अङ्गिराः 'आशौचं यस्य संसर्गाज्जायते गृहमेधिनः। क्रियास्तस्य न लुप्यन्ति गृह्याणां च न तद्भवेत्'। अनुगमनसंसर्गाशौचं न सन्ध्यादिलोपकम्। नच गृहे भवानां तत्पुत्रादीनां भवतीत्यर्थः। शङ्खः 'कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते। अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते'। पारस्करः 'मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम्। वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म चेति॥

अथाशौचसन्निपातः। तत्र सजातीयसंनिपाते विष्णुः 'अथ यदि दशरात्राः सन्निपतेयुराद्यं दशरात्रमशौचमानवमाद्दिवसात्'। गौतमः 'रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः'। याज्ञवल्क्यः 'अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति'। जननाशौचमध्ये जननाशौचस्य शावाशौचमध्ये शावाशौचस्य चोपनिपाते पूर्वाशौचेनैव व्यपगमेन शुद्धिर्नत्वग्रिमाशौचेनेत्यर्थः। शेषाहोभिः पूर्वाशौचावशिष्टदिनैः। तदाह पराशरः 'पूर्वेणैव विशुध्येत जाते जातं मृते मृतम्'। 'अन्तर्दशाहे चेत्स्यातां पुनर्मरणजन्मनी। पूर्वेणैव

विशुद्धिः स्याद्यावदन्त्यदिनं भवेत्'। शातातपः 'रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्'। एषां वचनानां समुदितार्थस्तु अन्त्यदिनपर्य्यन्तं सजातीयाशौचपाते पूर्व्वस्माच्छुद्धिः। अशौचान्त्यदिनस्य रात्राववशिष्टायामपरसजातीयाशौचसन्निपाते दिनद्वयेन परेण शुद्धिः। अशौचान्त्यदिवसीयरात्रेश्चतुर्थयामे यद्यशौचान्तरमापतति तदा रात्रित्रयेणपरेणशुद्धिः। ब्रह्मपुराणे 'आद्यं भागद्वयं यावत् सूतकस्य तु सूतके। द्वितीये पतिते चाद्यात्सूतकाच्छुद्धिरिष्यते। अत ऊर्द्ध्वं द्वितीयाच्चु सूतकान्ताच्छुचिर्भवेत्। एवमेव विधेयं स्यान्मृतके मृतकान्तरे'। इदं तु पुराणवचनं धर्मशास्त्रवचनादुपेक्षणीयम्। यद्यपि पुराणमपि धर्मशास्त्रं तथापि पुराणेषु सर्गप्रतिसर्गादिविचारप्रवृत्तेषु प्रासङ्गिको धर्मविचारः स्मृतिषु साक्षादिति बलवत्त्वं स्मृतीनाम्। अतएव मिताक्षराकारैः संहितावचनान्येवोदाहारिषतेति। यद्वा आद्यं भागद्वयमित्यत्र सूतकमृतकपदे जननमरणाशौचयोश्चरमदिनपरे। तेनायमर्थः सम्पद्यते। अशौचान्त्यदिनस्य आद्यं भागद्वयं चतुर्द्धाविभक्तेऽहोरात्रे अहोरूपमेव, तस्मिन्नशौचान्त्येऽहनि आद्याच्छुद्धिः। अतऊर्द्ध्वं अस्तमयानन्तरं रात्रिरूपभागद्वये द्वितीयाच्छुद्धिः। तत्रापि रात्रेर्भागत्रये द्व्यहात्, तुर्य्यभागे त्र्यहादिति। अन्यथानेकवचनविरोधः स्यादिति। किञ्चानवमात् विष्णूक्तं दशमे दिने तु पुराणोक्तं पूर्व्वापनोद्यत्वम्। एवं च 'परतः परतः शुद्धिरघवृद्धौ विधीयते। स्याच्चेत् पञ्चमादह्नः पूर्व्वेणाप्यनुशिष्यते'। इत्यादेरप्यर्थः कल्पनीयस्तथाहि—अघवृद्धौ समानाशौचोपनिपाते पञ्चमात्परतोपि परतः पूर्व्वाशौचशेषतः शुद्धिः पूर्व्वेण मन्वादिना अनुशिष्यते उपदिश्यते अपि यत इति नासोमञ्जस्यलेशोपि। विजातीयाशौचसन्निपाते त्वाङ्गिराः 'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम्। तत्राधिकृत्य मृतकं शावं कुर्यान्न

सूतकम्' । तथा 'अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा । मरणोत्पत्तियोगेन गरीयोमरणं भवेत्' । तथा 'शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी' । अत्र मरणाशौचत्वेन बाधकत्वमतोऽल्पकालव्यापकेनापि शावेनाधिकसमयव्यापकमपि सूतकं बाध्यते । उशनाः 'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्यति' । इदं तु सजातीयसन्निपातपरम् । मातापित्रोरशौचसङ्करे विशेषमाहाङ्गिराः 'मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्' । अयमर्थः—मात्रशौचमध्ये पित्रशौचे सति पित्रशौचेन शुद्धिः, पित्रशौचमध्ये मात्रशौचे सति मातुः पक्षिणीमधिकां कुर्यादिति । जननस्य प्रेतपिण्डबाधकत्वं नास्तीत्याह शातातपः 'अन्तर्दशाहे मरणात्पश्चात्स्याज्जननं यदि । प्रेतमुद्दिश्य कर्त्तव्यं पिण्डदानं स्वबन्धुभिः । प्रारब्धे शवपिण्डे तु मध्ये चेज्जननं भवेत् । तथैवाशौचपिण्डाँस्तु शेषान् दद्याद्यथाविधि' । प्रजापतिः 'शावाशौचे समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति' । पूर्वाशौचेन शावाशौचेन गतेनेत्यर्थः । सूतिकामग्निदं च हित्वेति स्मृतिसंग्रहः ।

अथाशौचेऽप्यवर्ज्यमाहपुलस्त्यः 'सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् । न त्यजेत्सूतके चापि यज्ञं नोच्छेदयेत्कचित्' । तथा 'वैतानौपासनाः कार्याः क्रियास्तु श्रुतिनोदनात्' । वैतानास्त्रेताग्निसाध्याः अग्निहोत्रादयः, औपासना[1] आवसथ्याग्निसाध्याः सायम्प्रातर्होमस्थालीपाकादयः । वैष्णवे 'सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः' । तथा 'सन्ध्यापञ्चमहायज्ञान्नैत्यिकं

१ प्रतिदिनमुपास्यत इत्युपासनोगृह्याग्निस्तत्रभवाः ।

स्मृतिकर्म च । तन्मध्ये हापयत्तेषां दशाहान्ते पुनः क्रिया’ । इति वचनं तु प्राणायाममन्त्रोच्चारणपूर्वकसन्ध्यानिषेधपरम् । ‘सूतके मृतके चैव सन्ध्याकर्म समाचरेत् । मनसोच्चारयेन्मन्त्रान्प्राणायाममृते नरः’ इतिपुलस्त्यवचनादेव । पैठीनसिः ‘ सूतके सावित्र्या चांजलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यादिति । स्मृत्यर्थसारे स्मार्तत्त्वेपि सन्ध्याया गायत्र्याञ्जलिदानं कार्यं मार्जनं कार्यं न वा । यथा ‘प्राणानायम्य मनसा मन्त्रमुच्चारयेन्मार्जनादि कृत्वा वाचा गायत्रीमुच्चार्य्यार्ञ्जलिन्दद्यादिति । जातूकर्ण्यः ‘सूतके तु समुत्पन्ने स्मार्त्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् । पिण्डयज्ञं पिण्डपितृयज्ञम् । बृहस्पतिः ‘सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्’ । पारस्करः ‘नित्यानि विनिवर्त्तेरन् वैतानवर्जम् शालाग्नौ चैतानि कुर्यादिति । स्मृत्यर्थसारे ‘उपासनाः सायंप्रातर्होमपार्वणस्थालीपाकाद्या नित्यनैमित्तिकाः श्रुतिनोदितत्वात्कार्या एव । अत्रापि इदमिन्द्राय नम एतदपि देवतोद्देश्यकद्रव्यत्यागात्मकं यागं प्रधानं स्वयमेव कुर्यादित्यर्थः । स्मृत्यर्थसारे ‘अशौचे त्रेताग्निसाध्याग्निहोत्रदर्शपौर्णमासादि नित्यनैमित्तिकाः श्रुत्युक्तत्त्वात्कार्य्या एवेति । अतएव नित्याग्निहोत्रव्यतिरिक्तानामपि नित्यनैमित्तिकानां श्रौतानां स्मार्त्तानां च न सर्वथा त्यागः किंत्वन्येन कारयेत् । काम्यं सर्वमपि वर्ज्यमेव । वैश्वदेवपञ्चमहायज्ञादीनि स्मार्त्तानि वर्जयेदेव । तदाहसम्बर्त्तः ‘विप्रोदशाहमासीत वैश्वदेवविवर्ज्जितः । पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः’ । तथा ‘काम्यानि चैव कर्माणि नित्यानि च विशेषतः । न कुर्याद्विहितं किञ्चित्स्वाध्यायं मनसापि चेति । यत्तु ‘दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तत’ इत्यादिवचनं तत्काम्यहोमविषयम् । नित्यस्नानादि कार्य्यमेव ।

तदुक्तं स्मृत्यर्थसारे। निखस्नानशौचाद्ययत्रभोजननियमास्पृश्यस्पर्शस्नानं च कुर्यादित्रेति। अशौचज्ञानमेवापात्र्यहेतुर्नाशौचं स्वरूपसत्। तदुक्तं ब्राह्मे। 'अपि दातृगृहीत्रोश्च सूतके मृतके तथा। अविज्ञाने न दोषः स्याच्छ्राद्धादिषु कदाचन॥ विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमादिति। विज्ञातइति दातृभोक्तृभाभ्यां विज्ञाते भोक्तुरेव दोष इत्यर्थः। तदुक्तं षट्त्रिंशन्मते 'उभाभ्यामपरिज्ञातमशौचं नैव दोषभाक्। एकेनापि परिज्ञातं भोक्तुर्दोषमुपावहेदिति। अशौचान्नस्याभोज्यत्वमाह यमः 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते'। उभयत्र सूतके मृतके च। कुलस्य अशौचिकुलस्य। षट्त्रिंशन्मते 'भुञ्जानेषु च विप्रेषु त्वन्तरा मृतसूतके। अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः। बृहस्पतिः। 'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके। पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्त्तितः। षट्त्रिंशन्मते विशेषः 'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके। परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः'। परैरशौचरहितैः। अतएव स्मृत्यर्थसारे 'दातॄन्भोक्तॄंश्च न स्पृशेदिति विशेष उक्तः। अशौचे ग्राह्यान्याह मरीचिः "लवणे मधुमांसे च पुष्पमूलफलेष्वपि। शाककाष्ठतृणेष्वेव दधिसर्पिष्पयस्सु च। तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः। पण्येषु चैव सर्वेषु नाशौचं मृतसूतके'। एतत्पक्वापक्वाभ्यनुज्ञानमन्नसत्रप्रवृत्तविषयम्। तदाहाङ्गिराः 'अन्नसत्रप्रवृत्तानामाममन्नं न गर्हितम्। भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत्'। विष्णुः 'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्'। प्रारम्भलक्षणं तत्तत्कर्मणि स एवाह 'प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया'इति। प्रारम्भाभावेप्यधार्यकन्याविवाहादौ विशेषमाह विष्णुः 'अनारब्धविशुद्ध्यर्थं

कूष्माण्डैर्जुहुयाद्घृतम् । गां दद्यात्पञ्चगव्याशी ततः शुद्ध्यति सूतकी' । कूष्माण्डैर्यद्देवा देवहेडनमित्यादिभिः ॥

भूमिशुद्धिः। अथ द्रव्यशुद्धिः । तत्रादौ सर्वाधारतया भूशुद्धिः । तत्र भूशुद्धिः सप्तधेति । यदाह यमः 'खननात्पूरणाद्दाहादद्भिः सेकेन लेपनात् । गोभिराक्रमणात्कालाद्भूमिः शुद्ध्यति सप्तभिः' । कालात् यावता कालेन गन्धलेपापगमः स्यात् । याज्ञवल्क्यः 'भूशुद्धिर्मार्जनाद्दाहात्कालात् गोक्रमणात्तथा । सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात्' । अत्रोपहतिहेतूनां सामस्त्ये सप्तभिर्ह्रासे न्यूनैरिति-ध्येयम् । उपहतिहेतूनाह देवलः 'यत्र प्रसूयते नारी म्रियते दह्यतेऽथवा । चाण्डालाध्युषितं यच्च यत्र मूत्रादिसंगतिः । एवं कश्मलभूयिष्ठा भूरमेध्येति कीर्तिता । श्वसूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत् । अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेत्' । अत्राशुद्धा भूस्त्रिविधा अमेध्या दुष्टा मलिना चेति । शुद्धिमाह स एव ' पञ्चधा वा चतुर्धा वा भूरमेध्या विशुद्ध्यति । दुष्टा चैव त्रिधा द्वेधा शुद्ध्यते मलिनैकधा' । पञ्चधा दहनकालगोक्रमणसेकोल्लेखैः पञ्चभिः । चतुर्द्धा तैरेव दाहवर्जितैश्चतुर्भिः । त्रिधेति गोक्रमणसेकोल्लेखैस्त्रिभिः । द्वाभ्यां सेकोल्लेखाभ्याम् । एकधा उल्लेखनेनैकेनेति । अपरोपि विशेषः । 'गोचर्ममात्रमब्बिन्दुर्गोः शोधयति पातितः । समूढमसमूढं वा यत्र लेपो न दृश्यते' । स-

---

१ अग्निवायुसूर्यदेवत्यास्तिस्रोनुष्टुभः कूष्माण्डीसंज्ञाः । यथा "यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः' । यजुः २० । १४ ॥ दीव्यन्ति देवाः दीव्यमानाः, हे देवतासो देवाः वयं यद्देवानां हेडनं अपराधं चकृम कृतवन्तः अग्निस्तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्करोतु, विश्वात् विश्वस्मात् सर्वस्मात् अंहसः विघ्नाच्च मुञ्चतु इत्यर्थः ॥ अपरयोर्द्वयोर्मन्त्रयोः " वायुर्मा " " सूर्यो मा " इत्यानेव विशेषः ॥

मृढं कृतसंमार्जनम्। गोरब्बिन्दुर्गोपुच्छजलम्। यत्रैकादश गाव उप-विशन्ति स भूभागो गोचर्म। गृहशुद्धिमाहसम्वर्त्तः 'गृहशुद्धिं प्रव-क्ष्यामि अन्तस्थशवदूषणे। प्रोत्सृज्य मृन्मयं भाण्डं गृहमध्यात् तथैव च। गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत्। गोमयेनोप-लिप्याथ छागेनाघ्रापयेद्बुधः। ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवा-रिणा। सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्येदसंशयम्'। बौधायनः 'घ-नाया भूमेरुपवीत उपलेपनम्। शुषिरायाः कर्षणम्। क्लिन्नाया अमेध्यमाहृत्य मृदा प्रच्छादनम्'। उपवीते अस्पृश्यस्पर्शे। शुषिरायाः सच्छिद्रायाः॥

अथ पात्रशुद्धिः। तत्र हारीतः 'अद्भिः काञ्चनराजतताम्र-शङ्खशुक्तीनां तद्गुणवर्जनं स्नेहवैवर्ण्योपहतानां यवगोधूमकलायमा-षमसूरमुद्गगोमयचूर्णैर्धावनम्। अम्ललवणाभ्यां ताम्राणां भ-स्मना कांस्यानां शाणतैलसिकताघर्षणैः कार्ष्णायसानां शैलानां घर्षणं मार्जनं मणिमयानाम्' इति। तद्गुणवर्जनं तद्गन्धापकर्षणम्। स्नेहवैवर्ण्योपहता इति उच्छिष्टादिस्नेहेन विवर्णं यथास्यात्तथोप-हता इत्यर्थः। याज्ञवल्क्यः 'सौवर्णराजताब्जानामूर्द्ध्वपात्रग्रहाश्म-नाम्। शाकरज्जुमूलफलवासोविदलचर्मणाम्। पात्राणां च-मसानां च वारिणा शुद्धिरिष्यते'। अब्जं शङ्खशुक्तिमुक्तादि। ऊर्द्ध्वपात्रं यज्ञीयोलूखलादि, ग्रहा ऐन्द्रादयः। अश्मा दृषदादिः। मूलमार्द्रकादि। विदलं वेणुदलादि तद्विकारः छत्रादिः। च-मसा होतृचमसादयः। एतल्लेपरहितस्पर्शमात्रविषयम्। 'निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति। अब्जमश्ममयं चैव राजतं चा-नुपस्कृतम्'। अनुपस्कृतम् अनुपलिप्तम्। सस्नेहपात्रेषु विशेषमाह याज्ञवल्क्यः 'चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा'। चरुर्मृन्मयी चरुस्थाली। 'स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम्। स्फ्यः

खादिरक्षुरिका, अनः शकटम्। आपस्तम्बः 'गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च। शुद्ध्यन्ति भस्मक्षारैश्च श्वकाकोपहतानि च'। शङ्खः 'कृष्णशकुनिमुखावघृष्टं निर्लिखेत्, श्वापदमुखावमृष्टं न प्रयुंजीतेति। कृष्णशकुनिः काकः, निर्लेखनं तक्षणम्, इदमधिकोपहतिविषयम्। बौधायनः 'तैजसानां मूत्रपुरीषशुक्रासृक्कुणपमद्यैरसन्तत्रासितानां आवर्त्तनम्, अग्निसंयोगेन द्रवीकरणमावर्त्तनम्। अधिकोपहतौ तु विशेषः स्मृत्यन्तरे 'सूतिकाशवविण्मूत्ररजस्वलहतानि च। प्रक्षेप्तव्यानि तान्यग्नौ यद्यद्यावत्सहेदपि'। बौधायनः 'तैजसानां शूद्राद्युपघाते पुनरकरणं गोमूत्रे वा सप्तरात्रं परिवासनमिति। आदित्यपुराणे 'सुवर्णरूप्यशङ्खाश्ममुक्तारत्नमयानि च। कांस्यायस्ताम्ररौप्यादित्रपुसीसमयानि च। निर्लेपानि तु शुद्ध्यन्ति केवलेन जलेन तु। शूद्रोच्छिष्टानि शोध्यानि त्रिभिः क्षाराम्लवारिभिः'। अत्र क्षाराम्लवारिभिर्दशकृत्वो मार्जयेत्। शुद्ध्यन्ति दशभिः क्षारैरिति शातातपोक्तेः। द्विजोच्छिष्टे विशेषमाह शङ्खः 'ब्रह्मक्षत्रविशां चैव सकृत्संमार्जनाच्छुचिः। चतुर्थेन तु यद्भुक्तं चतुर्भिस्तत्र मार्जनम्। अग्नौ प्रक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः। गोशृङ्गेण तु संस्पृष्टे तत्पात्रं शुचितामियात्। गण्डूषं पादशौचं च यः कुर्यात्कांस्यभाजने। भूमौ निक्षिप्य षण्मासं पुनराकरमादिशेत्'। तथा 'लौहानां दहनाच्छुद्धिर्भस्मना गोमयेन च। दहनात्खननाद्वापि शैलानामम्भसापि वा। काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि'। याज्ञवल्क्यः 'तक्षणं दारुशृङ्गास्थ्नामिति। संहतापात्रे हारीतशातातपौ 'संहतानां तु पात्राणां यद्येकमुपहन्यते। तस्यैव शोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत्'। याज्ञवल्क्यः 'पुनःपाकेन मृन्मयम्'। अल्पोपहतिविषयमिदम्। यदाह मनुः

'मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः पूयशोणितैः। संस्पृष्टं नैव शुद्ध्येत पुनः पाकेन मृन्मयमिति।

अथ धान्यादिशुद्धिः, तत्र विष्णुः 'असिद्धान्नस्य तन्मात्रापहाराद्वा निस्तुषीकरणेन वेति। इदमल्पद्रव्यविषयं बहुद्रव्यविषये तु विशेषमाह कश्यपः' प्रोक्षणपर्य्यग्निकरणावगाहनैर्ब्रीहियवगोधूमानां विमर्शनप्रोक्षणैः फलीकृतानां निघर्षणदलनप्रोक्षणैः शमीधान्यानाम्' इति। पर्य्यग्निकरणमग्न्यभिमर्शनम्। अवगाहनं प्रक्षालनम्, फलीकृतानां कण्डितानाम्, अल्पानां विमर्शनं पाणिभ्यां निर्मलीकरणम्[१]। बहूनां प्रोक्षणं। शमीधान्यानि मुद्गादीनि। तण्डुलांस्तु परित्यजेदित्यल्पमानविषयम्। आदित्यपुराणे 'गृहदाहे समुत्पन्ने दग्धे च पशुमानुषे। अभोज्यस्तु ततो ब्रीहिर्धातुद्रव्यस्य संग्रहः। मृन्मयेनावरुद्धानामधोभुवि च तिष्ठताम्। यवमाषतिलादीनां न दोषो मनुरब्रवीत्। ततः संक्रमणेऽग्नौ च स्थाने स्थाने च दह्यते। नच प्राणिबधो यत्र केवलं गृहदीपनम्। तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन्'। सिद्धान्ने विशेषमाह मनुः 'पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्। दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति'। अवधूतं यस्योपरि वासोधूननं कृतम्। मृद्ग्रहणमुदकस्याप्युपलक्षणम्। यदाह याज्ञवल्क्यः' सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये। गौतमः' नित्यमभक्ष्यं केशकीटावपन्नमिति'। पाकानन्तरं केशकीटादिस्पृष्टमदुष्टम्। तैः सह पक्वं त्याज्यमेवेत्यभिप्रायः। वशिष्ठः 'देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च। काकैः श्वभिश्च संस्पृष्टं

---

१ प्रोक्षणं उत्तानेन पाणिना जलसेकः। 'तिरश्चाभ्युक्षणं प्रोक्तं न्यञ्चता वोक्षणं मतम्। उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम्' इति गौतमीतन्त्रवचनात्।

सर्वं तत्र विवर्जयेत् । तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति'। देवद्रोणी देवयात्रा। संख्यामाह पराशरः 'पक्वं द्रोणादिकं त्वन्नं काकश्वाद्युपघातितम्। ग्रासमुद्धृत्य तन्मात्रं यच्च लालाकृतं भवेत्। होमोदकेन वाभ्युक्ष्येद्राजतेनाम्बुनापि वा । अग्निज्वालेपमस्पर्शिसुवर्णमधुसर्पिषा । विप्राणां वेदघोषेण पूतं भोज्यं च तद्भवेत्'। द्रोणः षट्पञ्चाशदधिकपलशतद्वयम्। 'अन्नमेकाहिकं पक्वं श्वकाकाद्युपघातितम् । केशकीटावपन्नं च तदप्येवं विशुध्यति। क्रीतस्यापि सदुष्टस्य दृष्ट एवं मनीषिभिः'। इदमल्पधनविषयम्। 'द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन च। छागेन मुखसंस्पृष्टं तदन्नं शुचितामियात्'। घनाः पर्पटवटकापूपादयः, द्रवाणामिति गोरसविषयम्। 'अर्पणं घृततैलानां प्लावनं गोरसस्य च। भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च। द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं[1] स्मृतम्। प्रोक्षणं संहतानां च दारवाणां च तक्षणम्। अत्र मेधातिथिः 'प्रस्थमात्रपरिमाणानामुत्पवनम्, कस्यचिदंशस्यापनयनमिति। ततोऽधिकपरिमाणानां

गोरसादिशुद्धिः। प्लावनं ततोन्यूनपरिमाणानां त्याग इति गम्यते। आकरभाण्डस्थस्य गोरसादेर्न दोषः। तदुक्तं 'दुष्टमाधारदोषेण नयेत्पात्रान्तरं द्रवम्। घृतं च पायसं क्षीरं तथैवेक्षुरसो गुडः। शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति' । पायसं पयोविकारमामिक्षादि। 'आममांसं कृतं क्षौद्रं स्नेहाश्च फलसम्भवाः। म्लेच्छभाण्डस्थिता दुष्टाः निष्क्रान्ताः शुचयः स्मृताः'। एतद्द्रोणाधिकान्नोपसेचनघृतादिविषयम्। देशकालाद्यपेक्षया न्यूनाधिकशौचकल्पनामभिसन्धायाह बौधायनः'देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्'। शा-

---

१ उत्पवनं चात्र वस्त्रान्तरिते पात्रे प्रक्षेपः। इतिमिताक्षरा।

तातपः' गोकुले कुण्डशालायां तिलचक्रेक्षुयन्त्रयोः । अनाशास्यानि शौचानि स्त्रीषु बालातुरेषु च'। कुण्डशाला यज्ञशाला। 'निर्य्यासानां गुडानां च ऊर्णाकार्पासयोस्तथा। शोषात्तु कथिता शुद्धिरित्याह भगवान् यमः'। निर्य्यासा हिङ्गुप्रभृतयः। इदं स्वल्पपरिमाणविषयम् । बहुपरिमाणे तु बौधायनः 'बहूनां कुसुम्भकार्प्पासगुडलवणसर्प्पिषां कठिनीभूतानां चाण्डालादिस्पर्शे प्रोक्षणेनैव शुद्धिः। अत्यल्पत्त्वे परित्याग एव'। मृत्पर्णादिषु विशेषमाह 'मृत्पर्णतृणकाष्ठानां श्वास्थिचाण्डालवायसैः । स्पर्शने विहितं शौचं सोमसूर्याग्निमारुतैः । प्रोक्षणेन तु पुस्तकमिति'। शङ्खोपि 'पुष्पफलानां विकिरावधूतानां प्रक्षालनमभ्युक्षणमित्येके। पर्णानामद्भिः प्रक्षालनं सकृदुपयुक्तानामुत्सर्ग' इति। विकिरैः अवधूतं चञ्चुपादावकीर्णम्। बौधायनः 'असंस्कृतायां भूमौ स्नानं प्रक्षालनं परोक्षाहृतानामभ्युक्षणमेव। क्षुद्रसमिधा संस्कृतानाममेध्याद्युपहतानामेकपुरुषोद्धार्य्याणामिति। व्यासः 'रथ्याकर्दमतोयानि नानापथतृणानि च। मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च'। द्रव्यहस्तस्योच्छिष्टस्पर्शे मनुः 'उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन। अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्'॥

अथ जलशुद्धिः। तत्र देवलः 'अविगन्धा रसोपेता निर्मलाः पृथिवीगताः। अक्षीणाश्चैव गोपानादापः शुद्धिकराः स्मृताः'। अत्र गोपानयोग्यपरिमाणा इत्यर्थः। तदाहतुर्व्यासबृहस्पती 'भुमिष्ठमुदकं मेध्यं वैतृष्ण्यं यत्र गोर्भवेत् ॥ अत्याज्यं चैव मेध्येन तद्वदेव शिलागतम्। उद्धृता वा प्रशस्ताःस्युः शुद्धैः पात्रैर्यथाविधि। एकरात्रोषितास्ताश्च त्यजेदापः समुद्धृताः। अक्षोभ्याणि तडागानि नदीवापीसरांसि च। चाण्डालाद्यशुचिस्पर्शे तीर्थतः परिवर्जयेत्' । तीर्थमुदकावतरणमार्गः। वापीकूपादिविषये

हारीतः 'वापीकूपतडागेषु मानुषो यदि शीर्यते। अस्थिचर्मविनिर्मुक्तैर्दूषितं श्वखरादिभिः। उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम्'। चर्मभिर्विनिर्मुक्तैश्चिरकालवासाद्विशीर्णैरित्यर्थः। देवलः 'उद्धरेदुदकं सर्वं पञ्चपिण्डान्मृदस्तथा। बृहस्पतिः 'मृतपञ्चनखात्कूपादत्यन्तोपहतात्तथा। अपः समुद्धरेत्सर्वाः शेषे वस्त्रेण शोधयेत्। वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते। पञ्चगव्यं न्यसेत्पश्चान्नवतोयं समुद्धरेत्'। हारीतः 'घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः। श्वभिः श्वपाकचाण्डालैर्दूषितेषु विशोधनम्'। आपस्तम्बः 'उपानच्छ्लेष्मविण्मूत्रस्त्रीरजोमद्यमेव च। एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत्। जलाशयेष्वप्यल्पेषु स्थावरेषु महीतले। कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम्'। शातातपः 'अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा। तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते'। यमः 'चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम्। गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यति'। नदीनां चाण्डालभाण्डस्पर्शेऽप्यदोषः। नदी वेगेन शुद्ध्यतीत्युक्तेः। दृतिशोधने कश्यपः 'दृतीनां रञ्जनं शुद्धिरिति। यमः 'प्रपारण्ये घटकस्य कूपे द्रोण्यां जलं कोशगतास्तथापः। ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतः काङ्क्षितवत्पिबेत्तत्'। अत्र शूद्रभिन्नब्राह्मणादिसम्बन्धिप्रपादिगतमपिजलमपेयम्। आपदि पेयमित्यर्थः। द्रोणी नौकाकृतिः पाषाणादिपात्रम्। कोशो दृतिः। जलादिपात्रं स्वकीयमेव शुद्धमित्याह बौधायनः 'आसनं वसनं शय्या जायापत्यं कमण्डलुः। शुचीन्यात्मन एतानि न परेषां कदाचन'॥ हारीतः 'स्वानुपपत्तौ शुद्धेनान्तर्द्धायोपादेयम्। अस्पृश्यशय्यादिस्पर्शे सचैलस्नानमेव हीति। अस्यार्थः 'स्वकीयशय्याद्यसम्भवे परकीयं शुद्धेनान्तर्द्धायोपादेयं न तु पतितादेः। पतिता-

दिवस्त्रादिस्पर्शे सचैलस्नानमेव यत' इति ॥

अथ वस्त्रादिशुद्धिः 'वस्त्रं मृदम्भसा शुद्ध्येद्रज्जुर्वैदलमेव च । रज्वादिकं चातिदृढं त्याज्यं तन्मात्रमेव च' । वैदलं शूर्पादि । 'यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा । चैलं समुपहन्येत त्वद्भिः प्रक्षालयेत्तु तत् । यदम्भसा न शुद्ध्येत्तु वस्त्रं चोपहतं दृढम् । छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते' । याज्ञवल्क्यः 'प्रोक्षणं संहातानां च बहूनां धान्यवाससाम्' । स्मृत्यन्तरे 'वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे । तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति' । मनुः—अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् । प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते' । राशेर्बहुत्वं पुरुषग्राह्यभारादिकत्वम् । बौधायनः 'अनेकोद्धार्ये दारुशिले भूमिसमे' । अत्र बौधायनेनानेकोद्धार्ययोः दारुशिलयोः स्वल्पाशौचत्वमुक्तं । तथानेकोद्धार्यधान्यादीनामपि बोद्धव्यम् । 'सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् । सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा । सगौरसर्षपैः क्षौममिति' । सोषैः सक्षारमृत्तिकाभिः । अंशुपट्टं भ्राजिष्णुपट्टाम्बरम् । देवलः 'ऊर्णाकौशेयकुतपपट्टक्षौमदुकूलजाः । अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः । तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः । तूलिकामुपधानं च पुष्परक्ताम्बरं तथा । शोषयित्वातपे किञ्चित्करैः संमार्ज्जयेन्मुहुः । पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि । अत्यन्तमलदुष्टानि यथावत्परिशोधयेत्' । पुष्परक्तं कौसुम्भादिरञ्जितं, प्रक्षालनासहरागरञ्जितोपलक्षणमेतत् । माञ्जिष्ठादिरञ्जितं क्षालयेदेवेत्यभिप्रायः । आपस्तम्बः 'शुनोपहतं चैलमवगाहनप्रक्षालनादेरिति । अत्र वस्त्रसहितस्यैव नाभेरूर्द्ध्वं श्वस्पर्शेऽवगाहनमधस्तात्प्रक्षालनमित्यर्थः । शङ्खलिखितौ 'अहतानां प्रोक्षणमिति । अहतं यन्त्रादुत्तीर्णम् । प्रचे-

ताः 'चेलानामुपहतानां गन्धलेपापनयनं तन्मात्रच्छेदनं वा। नवानां वाससामभ्युक्षणादीनि । अङ्गिराः 'शयनासनयानानिरोमत्वाचानि यानि च । वस्त्राण्येतानि सर्वाणि संहतानि प्रचक्षते । यदाहापस्तम्बः ' शयनासनानां संहतवच्छौचमिति । संहतवद्राशीभूतद्रव्यवत्प्रोक्षणेन शुद्धिरित्यर्थः । 'चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च । शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते' । स्मृत्यन्तरेपि 'पक्षपवित्रचर्मचामरतृणवैत्रवल्कानां च चेलवच्छुद्धिरिति । अत्र पवित्रं दर्भमयमिति ॥

अथ देहशुद्धिः । मनुः ' ज्ञानं तपोऽग्न्यंनाहारौ मृन्मनोवासनाजलम् । वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् । सर्वेषामेव शौचानामन्तःशौचं परं स्मृतम् ॥ योऽन्तःशुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः । क्षान्त्या शुद्ध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः । प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः । मृत्तोयैः शुद्ध्यते शोद्ध्यं नदी वेगेन शुद्ध्यति । रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमाः । अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति' ॥

अथसहजशुद्धिः । बृहस्पतिः 'पादौ शुची ब्राह्मणानामजाश्वानां मुखं शुचि । गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम्' । ब्राह्मणचरणादिस्पृष्टं वस्तु शुद्धमित्यर्थः । तथा 'अदुष्टाः सन्तताधारा वातोद्धूताश्च रेणवः । स्त्रियोबालाश्च वृद्धाश्च न दुष्यन्ति कदाचन । द्राक्षेक्षुयन्त्राकरकारुहस्तगोदोहनीयन्त्रविनिःसृतानि । बालैरथ स्त्रीभिरनु-

---

१ आद्ययोः पद्ययोरुमलभ्यमानमनुपुस्तके 'ज्ञानं तपोग्निराहारो मृन्मनोवार्य्युपाञ्जनम्' 'अर्थशौचं परं स्मृतम्' इति पाठः टीकाकृद्भिर्व्याख्यातो दृश्यते, परमस्मिन् मूलपुस्तके यथोपलब्धम् तथैवोपन्यस्तम् ॥

ष्ठितानि प्रत्यक्षदृष्टानि शुचीनि तानि' ।मनुः' नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् । ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः' । ब्रह्मचारिपदं भिक्षुकोपलक्षणम् । तथा 'अपूपाः सक्तवो धानास्तक्रं दधि घृतं पयः । एतत्पण्यगतं भोज्यं चाण्डालीयं न चेद्भवेत् । शङ्खः 'नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् । रतौ प्रस्रवणे वृक्षे मृगयायां सदा शुचि' । पैठीनसिः' आकराः शुचयः सर्वे वर्जयित्वा सुराकरम्' । तथा 'आकराः शुचयः सर्वे शकुनिः फलपातने । श्वा मृगग्रहणे मेध्यः स्त्रीमुखेषु च वारुणी' । पीतमद्याया अपि ब्राह्मणभार्य्याया रतिसंसर्गे शुद्धमेव मुखमित्यर्थ इति निर्णयामृतकृतः । शूद्रापरमिति वयम् । 'अदूष्यं काञ्चनं गावः स्त्रीमुखं कुतपं[1] क्षुरम् । न दूषयन्ति विद्वांसो यज्ञेषु चमसं यथा । गावस्तु पृष्ठतो मेध्याः अश्वाजौमुखतस्तथा । पृष्ठभागे गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा । तथा 'मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः । रजो[2] भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् । तथा 'श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् । क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः' । दस्यवो व्याधाः । अत्रिरपि 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टस्य भवेद्दोषो यथात्रेर्वचनं तथा' । अप्सु भोजनान्ते अमृतापिधानमसीति मन्त्रेण जलग्रहणे । षट्त्रिंशन्मते 'ताम्बूले च फले चैव भुक्ते स्नेहावशिष्टके । दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः । त्वग्भिः पत्रैर्मूलपुष्पै-

---

१ कुतपं पार्वतीयच्छागरोमनिर्मितकम्बलः । इति मिताक्षरा ।

२ रजसां च कचिदशुद्धित्वमपि 'रथाश्वगजधान्यानां गवां चैव रजः शुभम् । अप्रशस्तं समूहन्याः श्वाजाविखरवाससाम्' इति बौधायनोक्तेः ॥

स्तृणकाष्ठमयैस्तथा। सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः'। याज्ञवल्क्यः "मुखजा विप्रुषोमेध्यास्तथाचमनबिन्दवः। श्मश्रु चास्यगतं दन्तसक्तं सक्तमतः शुचिः। मनुः 'उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन। अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्। स्पृशन्ति बिन्दवः पादौ य आचामयतः परान्। भौमिकैस्ते समा ज्ञेया नतैराप्रयतो भवेत्। गौतमः 'न मुख-विप्रुषः उच्छिष्टं कुर्वन्ति नचेदङ्गे निपतन्ति। तथा 'दधिसर्पिः-पयःक्षौद्रभाण्डे दोषो न विद्यते। मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः'। तथा 'अजाश्वं मुखतो मेध्यं गावो मेध्या मुखादृते। मार्जारनकुलौ स्पृष्टौ शुभाश्च मृगपक्षिणः। उपघातसन्देहे मनुः 'त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भि-र्निर्णिक्तं यच्च वाचा प्रशस्यते'॥

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे॥

शुद्धिविनिर्णयनामागादुद्धारोऽष्टमः पूर्तिम्॥ ८॥

गर्भाधानादिकालानां कालशुद्धेश्च निर्णयम् ।
प्रकीर्णकं प्रवक्ष्यामो नवमे नवमेधया ॥ १ ॥

अथ गर्भाधानादिकालनिर्णयः । तत्र प्रथमरजोदर्शने 'चतुर्थी षष्ठ्यष्टमी च नवमी द्वादशी तथा । चतुर्दश्यप्यमावास्या निन्दितास्तिथयस्त्विमाः । पौर्णमास्यामसन्तोषो ह्यमायां विधवा भवेत्' । तथा 'अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि । परिघस्य च पूर्वार्द्धे व्यतीपाते च वैधृतौ । सन्ध्यासूपप्लवे विष्टयामशुभं प्रथमार्त्तवम्' । तथा क्रूरवारा निन्दिताः । नक्षत्रेषु भरणीकृत्तिकार्द्राश्लेषामघापूर्वाविशाखाज्येष्ठामूलपूर्वाषाढापूर्वभाद्रपदा निषिद्धाः । मेषवृषकर्कधनुःपूर्वार्द्धमकरकुम्भा निषिद्धाः । पट्टाम्बरश्वेतनूतनवस्रा दृष्टे रजसि सम्यक् फलम् । जीर्णरक्तनीलमलिनाम्बराया मन्दफलम् । 'वस्त्रेस्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् । समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्त्तवे' । नारदः 'निन्द्यर्क्षतिथिवारेषु यत्र पुष्पं प्रदृश्यते । तत्र शान्तिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः । प्रत्येकाष्टशतं चैव गायत्र्या जुहुयात्तिलैः । स्वर्णगोभूतिलान् दद्यात्सर्वदोषापनुत्तये । ऋषिपुत्रसंहितायाम् 'प्रथमार्त्तवदोषाणां शान्तिं कुर्यादनन्तरम् । तिथिनक्षत्रवारादिदेवानां पूजनं पृथक् । शान्तिं स्थले प्रकुर्वीत विधिना देवनिर्मिते । उद्याने वा नदीतीरे तडागे चत्वरेऽपि वा । मण्डलं कारयेत्तत्र गोमयेन द्विहस्तकम् । स्थण्डिलं कारयेत्तत्र चतुराढकशालिभिः । आढकं तण्डुलं चैव आढकौ तिलयावकौ' । आढकः प्रस्थचतुष्टयः । 'पलं च कुडवः प्रस्थ आढकोद्रोण एव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः' । उपर्युपरि संस्तीर्णं तन्मध्ये नलिनं लिखेत् । दर्भैराच्छाद्य तन्मध्ये कर्णिकायां न्यसेद्घटम् । ससूत्रं सपिधानं च सकूर्चं वस्त्रवेष्टितम् । पुण्यो-

रजोदर्शनदोषशान्तिः ।

दकेन सम्पूर्णमौषधादिसमन्वितम् । औषधं सर्वौषधयः, आदिपदेन गजशालामृदादिः । सहदेव्यैकपत्रा च विष्णुक्रान्ता सभद्रिका । विल्वपत्रैः सहैतानि चूर्णयित्वा न्यसेद्घटे । कुष्ठमांसी हरिद्रे द्वे मुराशैलेयचन्दनम् । वचाकच्चोरमुस्ताद्याः सर्वौषध्यः प्रकीर्त्तिताः । गजाश्वरथवल्मीकसङ्गमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निःक्षिपेत् । पञ्चगव्यं च कुसुदं तथा मुक्ताफलानि च। वज्रवैदूर्यमाणिक्यविद्रुमानि विनिःक्षिपेत् । एवं कुम्भं समासाद्यार्चयेद्गन्धादिभिः शुभैः । अनुष्ठानपरो विप्रः प्राङ्मुखो वाप्युदङ्मुखः । आसीनः सुप्रसन्नात्मा प्राणसंयमनान्वितः । सावित्र्या च जपेत्कुम्भं स्पृशन्दशशतं द्विजः । एवं प्रदोषकाले तु कारयेदपरेऽहनि । उदये समनुप्राप्ते स्नानं गन्धाद्यलंकृतम् । स्नापयेच्छान्तिमन्विच्छन् पूर्वाह्णे प्राङ्मुखस्थिताम् । अधिवासितकुम्भस्य तोयैश्चापि समन्त्रकम् । पश्चाच्छेषोदकेनैव स्नात्वा देवं प्रणम्य च । स्वगृह्योक्तविधानेन होमं कुर्यात्प्रयत्नतः । दूर्वाज्येन तिलैर्हुत्वा सावित्र्या चैव मन्त्रतः। अष्टोत्तरसहस्रं वा शतमष्टाधिकं तथा । तत्संख्यया त्रिधा हुत्वा दूर्वाज्येन तिलैः समम्। ब्राह्मणान्भोजयित्वा तु दैवतं पूजयेत्ततः। एवं समासतः प्रोक्तं नारीणां प्रथमार्त्तवे । गुणदोषौ परिज्ञाय शान्तिकर्म समाचरेत् । अनेन विधिना नारी सर्वदोषात्प्रमुच्यते ॥

अथ पुंसवनादिकालनिर्णयः । 'अथ पुंसवनं कुर्यात्तृतीये मासि पुंस्त्वदम् । शुक्लपक्षे च पूर्वाह्णे चन्द्रताराबलान्विते' ॥ षष्ठेऽष्टमे वा सीमन्तः ॥ आपस्तम्बः 'सीमन्तोन्नयनं प्रथमगर्भे चतुर्थे मासीति । 'मृते देशान्तरगते पत्यौ स्त्रीसंस्कृतेः पुरा । देवरः श्वशुरो वापि वंश्यो वापि समाचरेत् । जन्मनोऽनन्तरं स्नात्वा जातकर्म विधीयते। दैवादतीतकालं चेदतीते सूतके भवेत्॥ 'सूत-

कान्ते नामकर्म विधेयं स्वकुलोचितम्’। पिता कुर्य्यादन्यो वा कुलवृद्धः॥ भविष्यपुराणे ‘द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात्।चतुर्थे मासि कर्त्तव्यं तथान्येषां मतं विभो।गर्गः‘षष्ठेऽन्नप्राशनं मासे अष्टमे द्वादशेपि वा। प्रथमे सप्तमे मासि अष्टमे दशमेपि वा।द्वादशेऽपि तथा कुर्य्यात्कर्णवेधं शुभावहम्।सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः।शूद्रस्य चायसी शूची मध्यमाष्टाङ्गुलात्मिका’। तृतीये चाब्दे मुण्डनम्, ‘चूडा कार्या यथाकुलमित्युक्तेः। ‘सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्। पञ्चाब्दात्प्रागथोर्द्धं तु गर्भिण्यामपि कारयेत्’। परिशिष्टे ‘गर्भिणी यस्य वै माता मासादूर्द्धं तु पञ्चमात्। तस्य चूडोपनयने गर्भिण्या वा शिशोर्मृतिः’। तथा ‘पुंसो भार्या गर्भिणी यस्य नासौ सूनोश्चौलं क्षौरकर्मात्मनश्च। गेहारम्भं स्तम्भसंस्थापनं च बाह्यस्नानं तीर्थयात्रां न कुर्यात्। वशिष्ठः ‘उपनीतौ शिशोर्माता गर्भिणी यदि जायते। तयोरेकस्तु नष्टः स्याद्दम्पत्त्योर्वा शिशोर्मृतिः। प्राप्ते च पञ्चमे वर्षे अप्रसुप्ते जनार्दने। उत्तरायणगे सूर्ये विद्यारम्भं तु कारयेत्। प्राङ्मुखो गुरुरासीनो गुरुणा सम्मुखं शिशुम्। अध्यापयीत प्रथमं द्विजाशीर्भिः प्रपूजितम्। माघादिमासषट्के तु मेखलाबन्धनं मतम्। चूडाकरणमन्नं च श्रावणादौ विवर्जयेत्। धनुर्मीनकुलीरस्थो जीवो जन्मान्तमृत्युगः। अतिसौख्यं वटोः कुर्यादङ्गिरो वचनं यथा। नारदः ‘बालस्य बलहीनोपि शान्त्या जीवोबलप्रदः। यथोक्तवत्सरे कार्य्यमनुक्ते चोपनायनम्। शान्त्या बृहस्पतिप्रीतये दानादिकया। यथोक्तवत्सरे गर्भाष्टमाद्युक्तकाले। अनुक्ते ब्राह्मणस्य नवमाब्दादौ। ‘गुरुर्द्विपञ्चसप्तमनवमस्थः शुभः सदा। पूजया दिक्त्रिषष्ठायद्योनाष्टादिगतः शुभः। ‘जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मदिने न तेन। विप्रोभवेच्चैव बहुश्रुतोपि प्रज्ञाविशेषैः

उपनयनम्।

प्रथितः पृथिव्याम्। ज्येष्ठे मासि विशेषेण सर्वज्येष्ठस्य चैव हि। उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव च। गर्गः 'मौञ्जीबन्धे विवाहे च प्रतिष्ठायां विशेषतः। गोचरेणैव कर्त्तव्यं वेधाबलमकारणम्। वेधाबलं वामवेधबलम्। नारदः 'विनर्त्तुना वसन्तेन कृष्णपक्षे गलग्रहे। अपराह्णे चोपनीतः पुनः संस्कारमर्हति। व्रताह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति। तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत्। ग्रहे रवीन्द्वोरवनीप्रकम्पे केतूद्गमोल्कापतनादिदोषे। व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्तिकेचित्।

अथ क्षत्रियस्य छुरिकाबन्धनकालः। 'छुरिकाबन्धनं वक्ष्ये क्षत्रस्य प्राकरग्रहात्। विवाहोक्तेषु मासेषु शुक्लपक्षे त्वनस्तगे। जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते॥

अथ विवाहकालः। 'युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम्। एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः। यत्तु 'सार्व कालिकमिच्छन्ति विवाहं गौतमादयः' इति तदासुरधर्म्मविवाहविषयम्। धर्म्येष्वेव विवाहेषु कालपरीक्षणम्। नाधर्म्येष्विति वचनात्। 'मुख्यं गुरुबलं बध्वाः वरस्येष्टं रवेर्बलम्'। जन्ममासे विवाहकर्त्तव्यताबोधनं द्वितीयगर्भोत्पन्नाविषयम्। निषेधस्तु प्रथमगर्भोत्पन्नविषयः। जन्ममासलक्षणमाह गार्ग्यः। आरभ्य जन्मदिवसाद्यावत्त्रिंशद्दिनं भवेत्। जन्ममासः स विज्ञेयः सर्वकर्मसु गर्हितः।

विवाहादौ कालशुद्धिः कालशुद्धिर्निरूप्यते 'जीवक्षेत्रगते भानौ भानुक्षेत्रगते गुरौ। वर्जयेत्सर्वकर्माणि व्रतं स्वस्त्ययनानि च'। स्कन्दपुराणे 'सिंहसंस्थे गुरौ राजन् विवाहादि न कारयेत्। मकरस्थे न कर्त्तव्यं यदीच्छेदात्मनः शुभम्। लल्लः 'नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा। संन्यासोदेवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा। मौञ्जीबन्धोथ चूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा

वर्ज्याः सद्भिः प्रयत्नात्रिदशपतिगुरौ सिंहराशिस्थिते च । सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् । ग्रन्थान्तरे 'सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् । अन्यत्र सिंहभागे तु विवाहादि विधीयते । अत्र विशेषमाह लल्लः । 'नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे । गण्डक्याः पश्चिमे तीरे मकरस्थो न दोषभाक् । सिंहस्थितः सुरगुरुर्यदि नर्मदायास्तं वर्जयेत्सकलकर्मसु सौम्यभागे । विन्ध्यस्य दक्षिणदिशि प्रवदन्ति चार्य्याः सिंहांशके मृगपतावपि वर्जनीयम्' । तथा 'सिंहे गुरौ सिंहलवे विवाहो नेष्टस्तु गोदोत्तरतस्तु यावत् । भागीरथीयाम्यतटं च दोषो नान्यत्र देशे तपने तु मेषे' । गोदा गोदावरी, तपने मेषस्थे सिंहस्थगुरुदोषो नास्तीत्यर्थः । एतदधार्य्यकन्यादिविषयम् । यदाह वशिष्ठः । 'गोदावर्य्युत्तरे कूले भागीरथ्यास्तु दक्षिणे । सिंहस्थेऽपि गुरौ कार्य्यमधार्य्योपयमादिकम्' । अधार्य्या सरजस्का कन्या । तथा 'गोदावर्य्युत्तरतो यावद्भागीरथीतटं याम्यं । तत्र विवाहोनेष्टः सिंहस्थे सुरपतेः पूज्य । नारदः 'समदृष्टिगुरोः शुक्रस्तन्मासं तु प्रयत्नतः । विवाहादि न कुर्व्वीत नर्मदातीर उत्तरे । नर्मदायाम्यभागे तु समदृष्टिर्न दोषकृत् । वशिष्ठः 'अतीचारगतो जीवस्तं राशिं नैति चेत्पुनः । लुप्तः संवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः' । लल्लः 'यदातिचारं सुरराजमन्त्री करोति गोवृश्चिकमीनसंस्थः । नायात्यसौ यद्यपि पूर्वराशिं तथापि पाणिग्रहणे न दोषः । अतीचारगते जीवे धनुष्कर्कटमीनगे । लुप्तसम्वँत्सरेऽप्यत्र सर्वकर्माणि कारयेत् । वृषे मेषे झषे कुम्भे यदातीचारगो गुरुः । न तत्र काललोपः स्यादित्याह मुनिगालवः । त्रयोदशदिनः पक्षः प्रजासंहारकारकः । अपि वर्षसहस्रेण कालयोगः प्रकीर्त्तितः' । अत्रापि पक्षे विवाहादि न कार्य्यमित्यर्थः । द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं

शुभावहम् । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम्' । गार्ग्यः
'एकोदरप्रसूतानां विवाहो नैव वत्सरे' ।पुत्रीपरिणयादूर्द्ध्वं याव-
द्दिनचतुष्टयम् । पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः । पुत्रो-
पनयनादूर्द्ध्वं षण्मासाभ्यन्तरे तथा । पुत्र्युद्वाहं न कुर्वीत नोद्वाहाद्
व्रतबन्धनम् । वराहः ' न पुंविवाहोर्द्ध्वमृतुत्रयेपि विवाहकार्यं
दुहितुः प्रकल्प्यम् । न मण्डनाच्चापि हि मुण्डनं च स्यान्मण्डना-
न्मुण्डनमन्वगेव च' । मण्डनं विवाहादि, मुण्डनमुपनयनादि, 'एक-
मातृकयोरेकवत्सरे पुरुषस्त्रियोः । न समानाक्रियां कुर्यान्मातृभेदे
समाचरेत् । कन्यायुगे भ्रातृयुगे कन्याभ्रातृयुगे तथा । न जातु
मङ्गलं कुर्य्यादेकस्मिन्मण्डपेऽहनि । ऋतुत्रयस्य मध्ये चेदन्याब्दस्य
प्रवेशनम् । तदा ह्येकोदरस्यापि विवाहादि प्रशस्यते । विवाहश्चै-
कजन्यानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका वि-
धवा भवेत् । न वेदिकायां न गृहे न शाले न मण्डपे युग्मकरग्रहौ
तु । यथा पथि प्रत्यभिदर्शने च तथा तयोरेकतरं जहाति । न चैक-
जन्ययोः पुंसोरेकजन्ये तु कन्यके । प्रत्युद्वाहो नैव कार्य्यो नैकस्मै
दुहितृद्वयम्' । त्वया चेन्ममपुत्रार्थं कन्या देया तर्हि मयापि त्व-
त्पुत्राय कन्या देयेति व्यवस्थायां विवाहः प्रत्युद्वाहः । 'अप्येकज-
न्ययोः पुंसोरेकजन्ये तु कन्यके । नैव कदाचिदुद्वाहो नैकदा
मुण्डनद्वयम् । द्विशोभनं चैकगृहेपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैः
स्यात् । आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाचार्यविभेदतो वा ।
अत्रिः ' कुले ऋतुत्रयादर्वाङ्मण्डनादपि मुण्डनम् । प्रवेशान्निर्गमं
चैव न कुर्य्यान्मुण्डनत्रयम्' । मण्डनाद्विवाहानन्तरं ऋतुत्रयादर्वाक्
मुण्डनं न कुर्यात् । तथा स्नुषाप्रवेशानन्तरं पुत्रीनिर्गमनं न कु-
र्य्यात् । मुण्डनत्रयं ऋतुत्रयमध्ये न कुर्यात् इत्यर्थः । 'पुत्रीपरिण-
यादूर्द्ध्वं पुत्रस्योद्वहनक्रिया । न दुष्टा स्यान्मातृभेदे गृहभेदेऽपि

चैव हि। एकः कर्त्ता शुभं कुर्यान्न पुत्र्योः पुत्रयोरपि। षण्मासेऽथ चतुर्मासि पूर्णे वर्षे शुभावहमिति।

अथ प्रकीर्णकम् 'अव्रते केशधरणमसङ्कल्पे व्रते क्रिया। अब्रह्मचर्ये चर्या च त्रयं स्याद्दम्भसंज्ञितम्। अनाचारात्तथाऽन्यायादकाले क्षौरकर्मणः। अमङ्गलात्तथालस्यान्मृत्युर्मर्त्त्यांजिघांसति। निषिद्धेषु च कालेषु क्षुरकर्म यदा भवेत्। तद्दोषशान्तये भूयः कुर्यात्क्षिप्रं शुभे दिने। प्रमादेन तु केशानामग्निस्पर्शेन दाहिनाम्। दग्धान्केशान् पञ्चगव्यमधुधौतान्प्रवापयेत्। संक्रान्त्यां पञ्चदश्यां च द्वादश्यां श्राद्धवासरे। वस्त्रं निष्पीड्यते नैव क्षुरेणापि न हिंस्यते'। पञ्चदश्याममावास्यायाम्। दन्तकाष्ठममावास्या मैथुने च चतुर्दशी। हन्ति सप्तकुलं तस्य तैलग्रहणमष्टमी। उदन्वतोऽम्भसि स्नानं तथा श्मश्रुविमोचनम्। अन्तर्वत्न्याः पतिः कुर्वन् नरके व्रजति ध्रुवम्। व्यक्तगर्भेऽपि सीमन्ते विवाहे क्षुरमाचरेत्। क्षौरमप्रसवान्नोक्तमन्यत्र वचनादिह॥

अथ कलियुगमहिमा श्रीभागवते 'कलिं सभाजयन्त्यार्य्या गुणज्ञाः सारभागिनः। यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽपि लभ्यते। नह्यतः परमोलाभो देहिनां भ्राम्यतामिह। यतोविन्देत परमां शान्तिं नश्यति संसृतिः। कलौ खलु भविष्यन्ति नारायणपरायणाः। क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः। कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः। कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्। विष्णुपुराणे 'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम्। अतएव युगेषु वर्णेषु स्त्रीपुंसयोश्च कोधन्य इति नारदादिप्रश्ने व्यासस्योत्तरम् 'कलिर्धन्यः शूद्रोधन्यः स्त्रियो धन्या' इति विष्णुपुराणकथा। पराशरः 'त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्।

द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे । कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु । द्वापरे अन्नमादाय कलौ कर्त्तैव लिप्यते । शपथः शकुनः स्वप्नः सामुद्रिकमुपश्रुतिः । उपयाचितमादेशाः सम्भवन्ति कलौ क्वचित् । तस्मात्तन्मात्रलाभेन कलौ कार्य्यन्न कारयेत्'। कलिवर्ज्ज्यानाह वृद्धयाज्ञवल्क्यः 'देवरेण सुतोत्पत्ति-

कलिवर्ज्यानि । वानप्रस्थाश्रमग्रहः । दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य वै । समुद्रयानस्वीकारः कमण्डलुविधारणम् । कमण्डलुविधारणं नैष्ठिकं ब्रह्मचर्यम् । महाप्रस्थानगमनं गोमेधश्च सुराग्रहः । अ-ग्निहोत्रे हवन्याश्च लेहो लीढापरिग्रहः' । लीढाया अग्निहोत्रे हवन्याश्च स्वीकारः । असवर्णासु कन्यासु विवाहश्च द्विजाति-भिः । वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा । वृत्तं यायावरगृह-स्थाचारः । स्वाध्यायोवेदः । अघसङ्कोचनं सूतकाद्यशौचसङ्कोचः 'प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् । संसर्गदोषः पा-पेभ्योमधुपर्के च गोर्वधः । दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः । दत्तो दत्तकः । शामित्रं चैव विप्राणां सोमविक्रयणं तथा । दीर्घ-कालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ । कलौ युगे त्विमान्धर्मान् वर्ज्ज्यानाहुर्मनीषिणः । पराशरः 'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' ॥

अथ गोपीचन्दनमाहात्म्यम् । तत्र तिलकप्रमाणम् । 'ललाटे ज्योतिषाकारं हृदयेऽश्वत्थपत्रवत् । बाहुभ्यां वंशपत्राभ्यां शेषे तु तुलसीदलम् । अतिदीर्घमनायुष्यमतिक्षीणं दरिद्रता । न नेत्रान्तरयोः कुर्यान्न कुर्याद्धि बहिः क्वचित् । गारुडे 'यो मृ-त्तिकां द्वारवतीसमुद्भवां करे समादाय ललाटपट्टे । करोति नित्यं वपुशुद्धिहेतुः क्रियाफलं कोटिगुणं सदाभवेत् । क्रिया-विहीनं यदि मन्त्रवर्जितं श्रद्धाविहीनं यदि कालवर्जितम् ।

कृत्वा ललाटे यदि गोपिचन्दनं प्राप्नोति तत्कर्मफलं सदाक्षयम् । यस्यान्तकाले किल गोपिचन्दनं बाह्वोर्ललाटे हृदि मस्तके च । प्रयाति लोकं कमलालयाप्रभोर्गोबालघाती यदि विप्रहा नरः । स्कान्दे 'शङ्खचक्राङ्किततनुः शिरसा मञ्जरीधरः । गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः । हरिनामाक्षरमुखं ललाटे गोपिचन्दनम् । तुलसीमालिकोरस्कं स्पृशेयुर्न यमोद्भटाः । गोपीमृत्तुलसी शङ्खः शालग्रामः सचक्रकः । गृहेपि यस्य पञ्चैते तस्य पापभयं कुतः । कृष्णायुधाङ्कितो देही गोपीचन्दनमृत्स्नया । प्रयागादिषु तीर्थेषु स स्नातः किङ्करिष्यति । नारायणायुधधरं कृत्वात्मानं कलौ युगे । कुरुते यानि कर्माणि मेरुतुल्यानि तानि वै । धात्रीमाला हरेः शङ्खं पद्मं कौमोदकी तथा । रथाङ्गं यस्य देहे वै दृश्यते स जनार्दनम् । कृष्णायुधाङ्कितोमर्त्यः श्मशाने म्रियते यदि । प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद । यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः । अपराधसहस्रं तु नित्यं हरति केशवः । ललाटे तु गदा धार्य्या मूर्द्ध्नि चापशरास्तथा । नन्दकं चैव हृन्मध्ये शङ्खचक्रे भुजद्वये । अगस्त्यसंहितायाम् 'येनायुधानि बाह्वोश्च धृतानि द्विजसत्तम । पापिष्ठो वाप्यपापिष्ठः सर्वज्ञोऽप्यज्ञ एव वा । भवेदेवाधिकार्यत्र पूजाकर्मण्यसंशयम् । तथा 'तुलसीकाष्ठघटितै रुद्राक्षाकारधारितैः । शङ्खचक्रगदापद्मपादुकाकारकारितैः । निर्मितां मालिकां कण्ठे निधायार्चनमाचरेत् । तथा कमलमालां च सम्यक् पुष्करमालिकाम् । यः कुर्यात्तुलसीकाष्ठैरक्षमालास्वरूपिणीम् । कण्ठमालां च यत्नेन कृतं तस्याक्षयं भवेत् । संघृष्य तुलसीकाष्ठं यो दद्याद्ग्रामस्तके । कर्पूरागुरुकस्तुरीचन्दनेन च तत्समम्' ॥

अथ तुलसीमहिमा अगस्त्यसंहितायाम् 'तुलसीविपिनस्यापि समन्तात्पावनं स्थलम् । क्रोशमात्रं भवत्येव गाङ्गेयस्येव

पापहः। तुलसीरोपिता स्पृष्टा दृष्टा सिक्ता च पावयेत्। आराधिता प्रयत्नेन सर्वकामफलप्रदा। चतुर्णामपि वर्णानामाश्रमाणां विशेषतः। स्त्रीणां च पुरुषाणां च पूजितेष्टं ददाति सा। प्रदक्षिणं भ्रमित्वा ये नमन्ति तुलसीं नराः। न तेषां दुरितं किञ्चित्प्रक्षीणमवशिष्यते। अनन्यदर्शनाः प्रातः पश्यन्ति तुलसीं नराः। अहोरात्रकृतं पापं तत्क्षणात्प्रहणन्ति ते। तुलसीसंनिधाने तु ये त्यजन्ति कलेवरम्। न तेषां नरके वासस्ते यान्ति परमं पदम्। पाद्मे ' न पश्यति यमं वैश्य तुलसीवनरोपणात्। सर्वपापहरं सर्वकामदं तुलसीवनम्। तुलसीकाननं वैश्य गृहे यस्मिंस्तु तिष्ठति। तद्गृहं तीर्थभूतं हि न यान्ति यमकिङ्कराः। तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः। प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः। दर्शनं नर्मदायास्तु गङ्गास्नानं विशांवर। तुलसीवनसंस्पर्शः सममेतत्त्रयं स्मृतम्। रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनात्तथा। तुलसी दहते पापं वाङ्मनःकायसम्भवम्। पक्षे पक्षे तु सम्प्राप्ते द्वादश्यां वैश्यसत्तम। ब्रह्मादयोपि कुर्वन्ति तुलसीदलपूजनम्। मणिकाञ्चनपुष्पाणि तथा मुक्तामयानि च। तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम्। तुलसीमञ्जरीभिर्यः कुरुते विष्णुपूजनम्। न स गर्भगृहं याति मुक्तिभागी भवेन्नरः। पक्षान्ते रविसंक्रान्तौ द्वादश्यां सन्ध्ययोर्निशि। तुलसीं ये विचिन्वन्ति ते च्छिन्दन्ति हरेः शिरः। वामनपुराणे 'तावद्गर्जन्ति पक्षीन्द्र मृदस्तीर्थसमुद्भवाः। यावन्न दृश्यते भाले तुलसीमूलमृत्तिका॥

अथ धात्रीमाहात्म्यम्। स्कान्दे ' यः कश्चिद्वैष्णवे लोके धत्ते धात्रीफलं मुने। प्रियो भवति देवानां मनुष्याणां तु का कथा। धात्रीफलविलिप्ताङ्गो धात्रीफलसमन्वितः। धात्रीफलकृताहारो नरो नारायणो भवेत्। धात्रीफलानि यो नित्यं वहते

करसम्पुटे। तस्य नारायणो देवो वरमिष्टं प्रयच्छति'। व्यासः 'श्रीकामः सर्वदा स्नानं कुर्यादामलकैर्नरः। तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः। नवम्यां दर्शसंक्रान्त्योः सप्तम्यां रविवासरे। चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत्'। रत्नमालायाम् 'स्नातुर्जनस्य दशमी तनयं त्रयोदश्यर्थं निहन्त्युभयमेतदपि द्वितीया। सप्तम्यनिन्दुनवमीषु च सम्पदिष्णुः स्नायात्कदाचिदपि नामलकैर्मनुष्यः। अथ शङ्खमाहात्म्यम्। स्कन्दपुराणे 'त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया। शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं

शङ्ख महिमा। समर्चयेत्। शङ्खस्थितं च यत्तोयं भ्रामितं केशवोपरि। वन्दते शिरसा यस्तु गङ्गास्नानेन तस्य किम्। नाद्यं तडागजं वापि वापीकूपह्रदादिजम्। सर्वं भवति शङ्खस्थं गङ्गातोयसमं जलम्। गृहीत्वा शङ्खपादोदं शङ्खे कृत्वा तु वैष्णवः। यो वहेच्छिरसा नित्यं स मुनिस्तापसोत्तमः। त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे। पूजितः सर्वदेवैस्तु पाञ्चजन्य नमोस्तु ते। शङ्खं करतले कृत्वा मन्त्रेणानेन वैष्णवः। यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम्'। अनेन मन्त्रेण करतले कृत्वेत्यन्वयः। 'दर्शनेनैव शङ्खस्य किं पुनः स्पर्शने कृते। विलयं यान्ति पापानि हिमवद्भास्करोदये। वाराहे 'दक्षिणावर्त्तशङ्खेन तिलमिश्रोदकेन च। उदके नाभिमात्रे च यः कुर्य्यादभिषेचनम्। प्राक्स्रोतसि च वै नद्यां नरोह्येकाग्रमानसः। यावज्जीवकृतं पापं तत्क्षणादेव नश्यति।

अथ द्वात्रिंशदपराधाः। यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे। देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः। पादप्रसारणं चाग्रे तथा पर्य्यङ्कबन्धनम्। शयनं भक्षणं चापि मिथ्याभाषणमेव च। उच्चैर्भाषा मिथो जल्पो रोदनानि च विग्रहः। निग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम्। कम्बलावरणं चैव परनिन्दा परा स्तुतिः। अश्लीलभाष-

णं चैव अधोवायुविसर्जनम्। शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम्। पृष्ठीकृत्यासनं चैव परेषामभिवादनम्। गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा। निष्ठीवनं परीहासः सुरतं शपथक्रिया। अपराधास्त्विमे विष्णोर्द्वात्रिंशत्परिकीर्त्तिताः। अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दासोऽयमिति मां मत्वा क्षमस्व मधुसूदन। इति मंत्रं जपन् यस्तु दण्डवत्प्रणमेद्धरिम्। द्वात्रिंशदपराधांस्तु क्षमते तस्य केशवः। अथ यदर्थं सर्वधर्मोपासनं सा भगवद्भक्तिरेव। यदुक्तं श्रीभागवते 'दानव्रततपोहोमजपस्वाध्यायसंयमैः। श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते। तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते। ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः। भगवद्गीता 'नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा। भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप। मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे'। मन्मनाः मच्चिन्तकः, मद्भक्तो मन्मन्त्रोपासकः, मद्याजी मद्याजकः। 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'। अत्र सर्वधर्मत्यागे सति नित्यकर्मणोऽप्यकरणे प्रत्यवायः स्यादिति शोचन्तमर्जुनं भगवानाश्वासयति, माशुचस्त्वम् अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामीति। भगवत्कीर्त्तनस्मरणादौ शौचाद्यपेक्षा नास्ति। तदुक्तं विष्णुधर्मोत्तरे 'चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्। नाशौचं विद्यते तत्र स पवित्रकरो यतः। पाद्मे' अपवित्रः पवित्रोवेत्यादि। शेषं भक्तभक्त्यादिसामान्यविशेषलक्षणमाहिमादि श्रीविष्णुपुराणे श्री-

भक्तिनिरूपणम्।

भागवतादौ च भूयर्यनुसन्धेयम् ॥

अथ भागवतधर्माश्चन्द्रशर्मणो वाक्येनोक्ताः । स्कान्दे 'अद्य प्रभृति कर्त्तव्यं यन्मया कृष्ण तच्छृणु । एकादश्यां न भोक्तव्यं कर्त्तव्यो जागरः सदा । महापूजा च कर्त्तव्या प्रत्यहं पूजनं तव । पलार्द्धेनापि विद्धं तु न कार्य्यं वासरं तव । नित्यं नामसहस्रं तु पठनीयं तव प्रियम् । पूजा च तुलसीपत्रैर्मया कार्य्या सदैव हि । तुलसीकाष्ठसम्भूतचन्दनेन विलेपनम् । त्वत्कथाश्रवणं कार्य्यं नित्यं पुस्तकवाचनम् । नित्यं पादोदकं मूर्द्धा मया धार्य्यं प्रयत्नतः । नैवेद्यभक्षणं चैव करिष्यामि यतव्रतः । निर्माल्यं शिरसा धार्य्यं त्वदीयं सादरं मया । त्वया यदवशिष्टं तु भक्षणीयं सदा मया । तथातथा प्रकर्त्तव्यं तव तुष्टिर्यथा यथा । सत्यमेतन्मया कृष्ण तवाग्रे परिकीर्त्तनम्' । नारदपञ्चरात्रे 'संयमांश्च प्रवक्ष्यामि संक्षेपात्पञ्चरात्रिणाम् । न मत्स्यान्भक्षयेन्मांसं कूर्म्मसूकरयोस्तथा । कांस्यपात्रे न भुञ्जीत न पद्मवटपत्रयोः । देवागारे न निष्ठीवेत क्षुरं चात्र विवर्जयेत् । न सोपानत्करचरणः प्रविशेदत्र तु क्वचित् । एकादश्यां न चाश्नीयात् पक्षयोरुभयोरपि । जागरं निशि कुर्व्वीत विशेषाच्चार्च्चयेद्विभुमिति । नरकभोगानन्तरं जन्मक्रम उक्तो वैष्णवे । 'स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः । धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् । सहस्रभागप्रथमा द्वितीयाद्या अनुक्रमात् । ' सर्वे ह्येते महाभाग यावन्मुक्ति समाश्रिताः । अब्जा मत्स्यादयः । सहस्रभागः प्रथमो येषान्ते तथा द्वितीयाद्या अनुक्रमात् कृम्याद्यनुक्रमात् । अयमर्थः— कृमिभ्यः सहस्रभागाधिकाः स्थावराः, अब्जेभ्यः सहस्रभागाधिकाः कृमयः, पक्षिभ्यः सहस्रभागाधिका अब्जा' इत्यादिक्रमेणोन्नेयानि ॥

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।
कालप्रकीर्णविनिर्णयनामा गान्नवम उद्धारः ॥ ९ ॥

## आह्निकं परिभाषा च दशमेऽथ निरूप्यते ॥ १० ॥

मनुः 'ब्राह्मे मुहूर्त्ते उत्थाय धर्मार्थौ चानुचिन्तयेत्। कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च'। तन्मूलानितिपुंस्त्वमार्षम् ?। विष्णुः 'ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदिष्टदेवताः'। तथा 'शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम्। तत्क्षणात्तस्य नश्यन्ति सर्वपापान्यशेषतः।

मूत्रपुरीषोत्सर्गः। याज्ञवल्क्यः 'दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः। कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः'। देवलः 'सन्ध्यासु परिवर्जयेत्' मूत्रपुरीषे इति शेषः। इदमुपरुद्धेतराविषयम्। न वेगं धारयेन्नोपरुद्धः क्रियां कुर्यादिति माधवधृतस्मरणात्। मनुः 'छायायामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च'। दिङ्मोहादिविषयमेतत्। प्राणबाधाविषयं च। अङ्गिराः 'कृत्वा यज्ञोपवीतं च पृष्ठतः कण्ठलम्बितम्। विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः'। कर्णे निधानमेकवस्त्रविषयम्। तदुक्तं सांख्यायनगृह्ये 'यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्यादिति। याज्ञवल्क्यः 'गृहीतशिश्न उत्थाय मृद्भिरभ्युद्धृतैर्जलैः। गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः'॥ अत्र गन्धलेपक्षयार्थकमेव शौचं मृत्संख्यानियमस्त्वदृष्टार्थः। गन्धलेपक्षयस्य मृत्संख्यादिविशेषं विनाप्युपपत्तेः। न च 'एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणमिति मृत्संख्यादिनियतशौचस्यैव द्वैगुण्यादिकथनमुपपद्यत इति वाच्यम्। शौचं हि द्विविधम्, दृष्टमदृष्टं च। तत्र गन्धलेपक्षयकारकरूपं दृष्टं मृत्संख्यानियमजन्यं नियमादृष्टरूपमदृष्टम्। तथा चैतच्छौचमिति शौचपदेन नियमादृष्टमेव परामृश्य-

ते। नच गन्धलेपक्षयकरं शौचं स्त्रीशूद्रपरम्। ब्राह्मणादेरपि गन्धलेपक्षयस्यापेक्षितत्वात्। नच संख्याविशेषविशिष्टमृदैव ब्राह्मणादेर्गन्धादिक्षयोऽपेक्षितः। गन्धादिक्षये संख्यानियमस्याप्रयोजकत्वात्। तस्माददृष्टविशेषार्थिनामेव नियमो न दृष्टार्थिनामिति ध्येयम्। वैष्णवे 'वल्मीकमूषिकोत्खातां मृदमन्तर्जलात्तथा। शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम्'। सिद्धान्तशुद्धोद्धारे–मनुः 'नमार्गान्न श्मशानाच्च नादद्यात्कुड्यतः क्वचित्'। मृत्संख्यानियममाह शातातपः 'एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः। मूत्रे शौचं समाख्यातं शुक्रे तु द्विगुणं स्मृतम्। मूत्रे मूत्रमात्रे। दक्षः'एका लिङ्गे गुदे तिस्रो दश वामकरे तथा। उभयोः सप्त दातव्या पादयोः षट् तथैव च। एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम्। मनुः 'एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश। उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता'। शुद्धिमदृष्टविशेषं न तु गन्धादिक्षयम्। तस्य संख्यानियमं विनापि निर्वाहादित्युक्तम्। यदाह स एव 'यावन्नापैत्यमेध्याक्ताद् गन्धोलेपश्च तत्कृतः। तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु'। पादशौचे शङ्खः 'तिस्रस्तु पादयोर्देया शौचकामस्य सर्वदा। यमदक्षौ 'द्वे लिङ्गे मृत्तिके देये पश्चापाने तथैव चेति। लेपाविशेषसंख्यायां गुदे तिस्र इति न्यूनसंख्याव्यवच्छेदपरम्। लिङ्गशौचे मृत्प्रमाणमाह दक्षः। 'लिङ्गेतु मृत्समाख्याता त्रिपर्वी पूर्यते यया। विट्शौचे स एव 'अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता। द्वितीया च तृतीया च तदर्धार्धा प्रकीर्त्तिता'। यद्दिवा विहितं शौचं तदर्द्धन्तु निशि स्मृतम्। तदर्द्धमातुरे प्रोक्तमातुरस्यार्द्धमध्वनि'। दिवोदितस्य शौचस्य रात्रावर्द्धं विधीयते। आतुरे तु अर्द्धभागादिकरणं नियमशौचस्यैव बोध्यं दृष्टशौचस्य साधारणत्वादि समर्त्तव्यम्।

अथाचमनम्। वृद्धपराशरः 'कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः। निबद्धशिखकक्षस्तु द्विज आचमनं चरेत्'। याज्ञवल्क्यः 'त्रिःप्राश्यापोद्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्। अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः। हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः। शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः'। अन्ततः ओष्ठप्रान्तेन। हारीतः 'वामहस्ते कुशान्कृत्वा समाचामति यो द्विजः। उपस्पृष्टं भवेत्तेन रुधिरेण मलेन वा'। एतच्च वामहस्तमात्रधृतकुशपरम्। 'उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः। सोमपानफलं तस्य भुक्त्वा च द्विगुणं फलमिति गोभिलोक्तेः। हारीतः 'सव्यापसव्यौ कुर्वीत सपवित्रौ करौ द्विजः। ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत्। सोपानत्को नचोष्णीषी पर्यङ्कासनयानगः। दुर्देशप्रपदश्चैव नाचामन् शुद्धिमाप्नुयात्'। सांख्यायनः 'स्पृशन्ति बिन्दवः पादौ य आचामयतः परान्। भौमिकैस्ते समा ज्ञेया न तैरप्रयतोभवेत्॥

अथ दन्तधावनम्। तत्र दक्षः 'उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथाविधि। ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्। महाभारते 'प्रक्षाल्य हस्तौ पादौ च मुखं च सुसमाहितः। दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरं ततः। प्राङ्मुखेनोपविष्टस्तु भक्षयेद्दन्तधावनम्। छन्दोगपरिशिष्टे 'उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः। परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्। मन्त्रस्तु" आयुर्बलं यशोवर्चः प्रजाःपशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वन्नो धेहि वनस्पते'। अयं छन्दोगानां मन्त्रः कात्यायनमतोपजीविनां तु "अन्नाद्याय व्यूहध्वं सोमोराजाऽयमागमत्। स मे मुखं प्रमार्जतु यशसा च भगेन च"। प्रक्षाल्येत्थं शुचौ देशे दन्तधावनमुत्सृजेत्। पतितेऽभिमुखे सम्यग्भोज्यमाप्नोत्यसंशयम्। अलाभे दन्तकाष्ठानां

निषिद्धायां तिथौ तथा। अपां द्वादशगण्डूषैः पत्रैर्वा दन्तधावनम्। जिह्वोल्लेखः सदैव च' इति। 'प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः। दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्'। सिद्धान्तशुद्धोद्धारे 'चतुर्दश्यष्टमीदर्शपूर्णिमासंक्रमेषु च। नन्दासु च नवम्यां च दन्तकाष्ठं विवर्जयेत्। श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका'। तत्रैव विष्णुः 'प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च। नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत्। वृद्धयाज्ञवल्क्यः 'इष्टकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा। मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम्'। व्यासः 'योमोहात्स्नानवेलायां भक्षयेद्दन्तधावनम्। निराशास्तस्य गच्छन्ति देवताः पितृभिः सह'। इदं मध्याह्नस्नानविषयम्। 'मध्याह्ने स्नानवेलायां भक्षयेद्दन्तधावनम्। निराशास्तस्य गच्छन्ति देवताः पितरस्तथा' इत्युक्तेः। प्रातःस्नानस्य प्राग्दन्तधावनमुचितम्। 'प्रातःस्नानं प्रकुर्वीत दन्तधावनपूर्वकमिति वचनात्। इदं तु बोध्यम्। कृतप्रातःस्नानस्यैव मध्याह्ने दन्तधावनं निषिद्धम्। 'मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्। पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम्' इति मैथिलनिबन्धोदाहृतमनुवचनादिति। वैष्णवे 'आचान्तश्च ततः कुर्यात्पुमान्केशप्रसाधनम्। योगियाज्ञवल्क्यः 'स्मृत्वौंकारं च गायत्रीं निबध्नीयाच्छिखां ततः। पुनराचम्य हृदयं बाहू स्कन्धौ च संस्पृशेत्। ब्राह्मे 'स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम्। प्रातःस्नानं ततः कुर्यात्सङ्क्षेपेण यथोदितम्। तत्र मार्कण्डेयः 'अस्नातस्य क्रियाः सर्वा भवन्तीहाफला यतः। प्रातःस्नानम्। प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्त्तितम्'। एवं मध्याह्नस्नानमपि नित्यम्। यदाह पारस्करः 'अथातो नित्यस्नानं' न-

१ मित्रदेवताकत्वान्मैत्रः पायुः तद्भवत्वान्मैत्रं पुरीषोत्सर्गम्।

द्यादावित्युपक्रम्य स्नानविधिरेष इति । व्याख्यातं चैतद्भाष्यकृता नित्यस्नानं मध्याह्नस्नानमेवेति । अप्रायत्यनिमित्तके स्नाने तर्पणादेर्निवृत्तिः । अप्रायत्यनिमित्ते तु स्नानमात्रं विधीयत' इति वचनात् । कात्यायनः 'अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः । प्रातर्न तनुयात्स्नानं होमलोपोविगर्हितः । न तनुयान्न विस्तारयेत् । अत एव मन्त्रवर्ज इत्यस्य मन्त्राल्पत्वमर्थः ?। योगियाज्ञवल्क्यः 'पञ्च पञ्च उषः कालः सप्तपञ्चारुणोदयः।अष्ट पञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृतः । ब्राह्मं लक्षगुणं प्रोक्तं तदर्द्धमरुणोदयम् । तदर्द्धं गुप्तनक्षत्रं तदर्द्धं भास्करोदये । प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः । यतेस्त्रिषवणस्नानं सकृत्तु ब्रह्मचारिणः' । एतदशक्तब्रह्मचारिविषयम् । 'नार्त्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात्' । 'स्नायात्प्रातश्च मध्याह्ने ब्रह्मचारी गृही तथेति वचनाभ्याम् । वामनपुराणे 'निधाय तीरे कुशपिञ्जुलानि पूर्वोत्तराग्राणि मृदं न्यसेच्च । प्रक्षाल्य पादौ च मुखं च कण्ठे यज्ञोपवीतं च जलं पिबेत्त्रिः' । अत्र यज्ञोपवीतं कण्ठे निधायेत्यन्वयः । त्रिःपिबेदाचामेदित्यर्थः । आपस्तम्बः 'यज्ञोपवीतं कृत्वा क्षालयेत् । तथा 'कराभ्यां स्थापयेद्दर्भान् शिखाबन्धं विधाय च । प्राणायामं ततः कुर्यात्कालज्ञानं यथाविधि' । अत्र शिखाबन्धः प्राकृतो वेदितव्यः । तदानीं तदकरणे घृतावेक्षणादावनधिकारप्रसङ्गात् । 'विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् । इतिवचनात् । 'मृत्तिकां तु त्रिधा कुर्याद्भागेनैकेन लेपयेत् ।दक्षिणेन करेणैव अष्टावेताननुक्रमात्' । ललाटमंशद्वयं हृदयं पृष्ठमुदरं कुक्षिद्वयं चेत्यष्टौ । 'ततो वामकरेणैव नाभिवस्त्यूरुजङ्घकम् । दक्षिणादिक्रमेणैव चरणौ तु त्रिभिस्त्रिभिः । मृदस्तृतीयभागेन करौ च त्रिःप्रमार्जयेत् । इति तूष्णीं मृदा-

स्नानं कृत्वाचम्य जलं विशेत् । नाभिमात्रे जले गत्वा केशान्कृत्वा द्विधा द्विजः । निरुध्य कर्णौ नासां च त्रिःकृत्वोन्मज्जनं ततः । द्विराचम्याभिषेकं तु कुर्यादष्टाक्षरेण च' । अत्र सिद्धान्तकृतः—कात्यायनमतोपजीविनां तु बद्धजूटमेव स्नानम् । अत्र केशानिति बद्धजूटमिति च व्रतिपरम् । अव्रते केशधारणमिति वचनात् । अत्र प्रेतस्नानं प्रकृतिः, एकवस्त्राः प्राचीनावीतिनो दक्षिणामुखा मुक्तशिखाः सकृन्निमज्जेयुरिति । अत्र प्रकृतिवद्विकृतिन्यायेन प्राकृतधर्माणां विकृतौ प्राप्तानां मध्ये ये सूत्रकृता कण्ठरवेण वर्ज्जितास्ते निवर्त्तन्ते । यथा । बद्धशिखीति विमुक्तशिखित्वनिराशः, यज्ञोपवीतीति प्राचीनावीतित्वनिराशः । सूर्यस्याभिमुखो मज्जेदिति दक्षिणामुखत्वनिराशः । उत्तीर्य्य धौते वाससी परिधायेति एकवस्त्रतानिराश इत्यूचुः । तन्न । प्रकृतिविकृतिभावव्यत्यासात्, स्नातकस्य क्लृप्तकेशश्मश्रोर्जटाजूटाभावात् । न ह्यत्र शिखापदेन मूर्द्धजा अभिधीयन्ते । किन्तु मन्त्रविशेषबद्धा मूर्द्धजैकदेशा इति । 'आयङ्गौरिति सूक्तेन द्विज आवर्त्तयेदपः । जम्बुकायेति मन्त्रेण विदध्यादघमर्षणम् । जम्बुकायेति भाववृत्तसूक्तोपलक्षकम् । 'यथाश्वमेधः क्रतुराट् सर्वपापापनोदकः । तथाघमर्षणं सूक्तं सर्वपापापनोदकम्' इति मनुवचनात् । जपन् द्वादशवारांस्तु महापापापनुत्तये । अघमर्षणमन्त्रेण धूतपापः समाहितः । ततो निमज्य वारांस्त्रींस्ततस्तर्पणमाचरेत् । सङ्क्षेपतर्पणं तु 'देवास्तृप्यन्त्विति त्रिः, ऋषयस्तृप्यन्त्विति त्रिः, प्रजापतिस्तृप्यतु इति सकृत् । अतिसङ्क्षेपमाह । शङ्खः 'आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति क्रमात् । जलाञ्जलित्रयं दद्यादेतत्सङ्क्षेपतर्पणम्' । तर्पणं तु गायत्रीजपतः पूर्वमनुष्ठेयमिति यदाह गोभिलस्तत् छन्दोगपरम् । यजुर्वेदिनां

१ आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रयंत्स्वः ॥

तु कात्यायनेन गायत्रीजपानन्तरमेव तर्पणविधानादिति ।

अथ सन्ध्या । दक्षः 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् । संवर्त्तः 'प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् । तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः । आसीतोद्गमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन्' । सन्ध्यावन्दनानन्तरं याज्ञवल्क्यः 'हुत्वाग्नीन्सूर्य्यदैवत्यान् जपेन्मन्त्रान्समाहितः। वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च । नारसिंहे ' दिवसस्याद्यभागे तु सर्वमेतत्समाचरेत् । द्वितीये च तथा भागे वेदाभ्यासं समाचरेत्' । द्वितीये भागे पूर्वाह्णस्य ।

अथ पोष्यवर्गचिन्ता । तत्र दक्षः ' तृतीये च तथा भागे पोष्यवर्गस्य साधनम् । तृतीयोभागः पूर्वाह्णस्यैव । मैथिलग्रन्थे पोष्यवर्गानुशासनमितिपाठः । पोष्यवर्गस्तु—माता गुरुः पिता भार्य्या प्रजा दीनः समाश्रितः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः' । अभ्यागतः सम्बन्धी ग्रामान्तरादागतः । अतिथिरदृष्टचरोऽसम्बद्धो भोजनार्थमुपागतः । 'उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये' । ईश्वरमभिषेकादियुक्तं राजानम् । अलब्धलाभो योगः, लब्धरक्षणं क्षेम । महाभारते ' धर्मेणार्थः समाहार्य्यो धर्मेणार्थस्य रक्षणम् । एकेनांशेन धर्मस्तु कर्त्तव्यो भूतिमिच्छता ।

एकेनांशेन कामस्तु एकमंशं विवर्द्धयेत् । दक्षः 'चतुर्थे तु तथाभागे

मध्याह्निस्नानम् । स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले' । वसिष्ठः 'पारक्येषु निपानेषु न स्नायाद्धि कदाचन । निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते । अलाभे देवखातानां सरसां सरितां तथा । उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत्' । चतुर इति न्यूनसंख्याव्यवच्छेदनार्थम् । 'पञ्चपिण्डाननु-

दुधृत्य न स्नायात्परवारिणि' इति याज्ञवल्क्यस्मरणात्। 'मृदैकया शिरःक्षाल्यं द्वाभ्यां नाभेरथोपरि। अधश्च तिसृभिः कायात्षड्भिः पादौ तथैव च। प्रक्षाल्य सर्वकायं च द्विराचम्य यथाविधि। ततः संमार्ज्जनं कुर्यान्मृदा पूर्वं तु मन्त्रवित्। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्। उद्धृतासि वराहेण कृष्णेन शतबाहुना। आरुह्य मम गात्राणि सर्वपापं व्यपोहतु। मृत्तिके त्वानुगृह्णामि प्रजया च धनेन च। मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता। मृत्तिके जहि तत्सर्वं यन्मया दुष्कृतं कृतम्। मृत्तिके देहि मे तुष्टिं त्वयि सर्वं प्रतिष्ठितम्'। योगियाज्ञवल्क्यः 'मृदा स्नानं न कुर्वीत रात्रिसन्ध्याग्रहेषु च। विधिज्ञः स्नानकाले तु तथा भौमार्कवारयोः'। ततश्च गोमयेनैवमग्रमग्रमिति स्मरन्। अग्रमग्रं चरन्तीनामोषधीनां रसं वने। तासामृषभपत्नीनां पवित्रं कायशोधनम्। तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा'। ततो दूर्वाया: 'काण्डात्काण्डात्प्ररोहन्ति परुषः परुषस्परि। एवं नो दूर्वे प्रतनुसहस्रेण शतेन च। या शतेन प्रतनोषि सहस्रेणाधिरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम्। कृत्वैवं मार्जनं मन्त्रैरश्वक्रान्तादिभिस्ततः। ईहेत देवीरमृतं पारावतस्य रातिषु। देवीरपः पारावतस्य रात्रिष्वित्यादिमन्त्रैरमृतमीहेत। एभिर्मन्त्रैरभिमन्त्रिता आपोऽमृतं भवन्तीत्यर्थः। 'येतेशतामिति द्वाभ्यां तीर्थान्यावाहयेत्ततः। ततो महाव्याहृतिभिर्गायत्र्या चाभिमन्त्रयेत्। आपोहिष्ठेदमापश्च द्रुपदादिव इत्यपि। तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः। ततोऽर्कं वीक्ष्य सोंकारं निमज्यान्तर्जले नृपः। प्राणायामांश्च कुर्वीत गायत्रीं चाघमर्षणम्। यथोक्तैः क्षोभितस्तैस्तु मज्जेत्त्रि-

१ 'आपो हिष्ठा' इत्यादि 'इमदापः प्रवहत' इत्यादिभि ऋग्भिः॥

ईण्डवत्ततः' । यथोक्तैः प्राणायामादिभिः क्षोभितः सञ्चालितः पूर्वावस्थामतिक्रान्तो गतपाप इति यावत्। एतच्च स्नानं साधारणम्, विशेषस्तु स्वशाखाभ्यो विज्ञेयः ॥

अथ सङ्क्षेपस्नानम् । योगियाज्ञवल्क्यः 'एष विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः । असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते । स्नानमन्तर्जलं चैव मार्जनाचमने तथा । तीर्थस्यावाहनं चैव तीर्थस्य परिकल्पना । अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः । स्नानाचरणमेतत्तु समादिष्टं महात्मभिः' इति ॥ जाबालिः 'प्रवाहाभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै । स्थावरेषु च सर्वेषु भास्वतोऽभिमुखस्तथा' । कात्यायनमतोपजीविनां तु सूर्याभिमुखमेव मज्जनं सर्वत्रेत्युक्तम्। मनुः 'न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि । न वासोभिः सहाजस्रं नाविज्ञाते जलाशये' । शातातपः 'अत्रमृज्यान्न च स्नातो गात्राण्यम्बरपाणिभिः । न वा विधूनयेत्केशान्वाससी न विधूनयेत् । तिस्रः कोट्योऽर्द्धकोटी च यावद्रोमाणि मानवे । स्रवन्ति तावत्तीर्थानि तस्मान्न परिमार्जयेत् । देवलः 'देवाः पिबन्ति शिरसो मुखतः पितरस्तथा । वक्षसोपि च गन्धर्वा अधस्तः सर्वजन्तवः' । सन्ध्यादिकरणानन्तरं परिमार्जनं

वस्त्रपरिधानम्। दृष्टार्थम् । योगियाज्ञवल्क्यः 'स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च । प्रक्षाल्योरू मृदा चाद्भिर्हस्तौ प्रक्षालयेत्तथा' । भृगुः 'ब्राह्मणस्य सितं वस्त्रं नृपतेरक्तमुल्बणम् । पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते' । उल्बणं प्रव्यक्तं निविडमित्यन्ये । शातातपः 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात्सर्वकर्मसु पावनम्' । ईषद्धौतं क्षाराद्यसंयोगधौतम् । तथा 'अहतं यन्त्रनिर्मुक्तं प्रोक्तं वासः स्वयम्भुवा । प्रशस्तं तन्माङ्गलिके तावत्कालं न सर्वदा' । माङ्गलिके विवाहादौ । 'प्रागग्रमुदगग्रं वा धौतं

वासः प्रसारयेत् । पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचि।तथा ' अन्यदेव भवेद्वासः शयनीये नराधिप । अन्यद्रथ्यासु देवाना-मर्चायामन्यदेव तु । अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने' ॥

अथ तिलकविधिः । ब्रह्माण्डपुराणे ' अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् । अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी । एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् । वर्त्ति-दीपाकृतिं चापि वेणुपत्राकृतिं तथा । पद्मस्य मुकुलाकारं त-थैव कुमुदस्य च । मत्स्यकूर्माकृतिं वापि शङ्खाकारमतः परम् । दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते । नवाङ्गुलं मध्यमं स्याद-ष्टाङ्गुलमतः परम् । ललाटे केशवं विद्यान्नारायणमथोदरे । माधवं हृदये न्यस्य गोविन्दं कण्ठकूपके । विष्णुं च दक्षिणे कुक्षौ तद्भुजे मधुसूदनम् । त्रिविक्रमं कण्ठदेशे वामकुक्षौ च वामनम् ।श्रीधरं वामबाहौ च हृषीकेशं तु कन्धरे । पद्मनाभं पृष्ठदेशे ककुद्दामोदरं स्मरेत् ।ककुदीसर्थः। वासुदेवं स्मरेन्मूर्द्धिन तिलकं-द्वादशं त्विदम् । दक्षिणे तु करे विप्रो बिभृयाद्वै सुदर्शनम् । पद्मं मत्स्यं वामकरे शङ्खकूर्मं गदां तथा। ललाटे तु गदाधार्या मूर्द्धिन चापः शरस्तथा । नन्दकं चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये । श-ङ्खचक्राङ्कितो मर्त्यः श्मशाने म्रियते यदि । प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद" । व्यासः 'गङ्गातीरसमुद्भूतां मृदं मूर्द्ध्नि बिभर्ति यः । बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केव-लम् । शातातपः 'गोमतीतीरसम्भूतां गोपीदेहसमुद्भवाम् । मृदं मूर्द्ध्ना वहेद्यस्तु सर्वपापैः प्रमुच्यते । ब्रह्माण्डे 'श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत्। श्रीकरं पीतमित्याहुर्विष्णुभक्तिकरं सि-तम् । यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् । भस्मी-भवति तत्सर्वमूर्द्ध्वपुण्ड्रं विना कृतम्' । ऊर्द्ध्वपुण्ड्रमिति यथा-

धिकारतिलकोपलक्षणम् । 'ऊर्द्ध्वपुण्ड्रं द्विजः कुर्यात्त्रिपुण्ड्रं क्षत्रियस्तथा । अर्द्धचन्द्राकृतिं वैश्यो वर्त्तुलं शूद्रजातिषु ॥

अथ मध्याह्नस्नानसन्ध्यावन्दनानन्तरं ब्रह्मयज्ञः । तत्र योगियाज्ञवल्क्यः 'प्रदक्षिणं समावर्त्त्य नमस्कृत्वोपविश्य च । दर्भेषु दर्भपाणिः सन्प्राङ्मुखस्तु कृताञ्जलिः । स्वाध्यायं च यथाशक्ति ब्रह्मयज्ञं समाचरेत्' । गौतमः 'अथ यदि वातो वायात् स्तनयेद्वा विद्युत् पतेद्वा एकामृचमेकं वा यजुरेकं वा सामाभिव्याहरेत् । भूर्भुवः स्वः सत्यं तपः श्रद्धायां जुहोमीतिपठेत्' । स्तनयेदित्यादि सर्व्वानध्यायोपलक्षणम् । याज्ञवल्क्यः 'वेदाथर्व्वपुराणानि सेतिहासानि शक्तितः । जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्'। जपयज्ञो ब्रह्मयज्ञः। तस्याप्यज्ञाने गायत्रीमात्रजपः। बौधायनः 'अप आचम्य दर्भेष्वासीनो दर्भान् धारयमाणः सावित्रीं सहस्रकृत्व आवर्त्तयेत् शतकृत्वोऽपरिमितकृत्वोवा दशावरामिति । वृहस्पतिः 'स चार्वाक् तर्प्पणात्कार्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रेति विनिश्चयः' । स ब्रह्मयज्ञः, वैश्वदेवावसाने हन्तकारान्ते। यदाह श्रुतिः 'देवयज्ञो ब्रह्मयज्ञः पितृयज्ञो मनुष्ययज्ञो भूतयज्ञ इति । कौर्म्मे 'यदि स्यात्तर्प्पणादर्वाक् ब्रह्मयज्ञः कृतो नहि। कृत्वा मनुष्ययज्ञं च ततः स्वाध्यायमारभेत्' । मनुष्ययज्ञं सनकाद्युद्देश्यकं नत्वतियज्ञमितिसभ्याः । ग्राममध्ये मनस्येव ब्रह्मयज्ञं कुर्य्यात् । 'ग्रामे मनसा स्वाध्यायमधीयीत दिवानक्तं चेति श्रुतेः । इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः । ब्रह्मयज्ञार्च्चितो देवः प्रीयतां मे जनार्द्दनः ॥

तर्पण-निर्णयः अथ तर्पणम् । वृहस्पतिः 'ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् । जप्त्वाथ प्रणवं वापि ततस्तर्प्पणमाचरेत् । शातातपः 'तर्पणं तु शुचिः कुर्य्यात्प्रत्यहं स्नातको द्विजः । देवे-

भ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्'। अत्राञ्जलिनियममाह व्यासः 'एकैकमञ्जलिं देवा द्वौद्वौ च शनकादयः। अर्हन्ति पितरस्त्रींस्त्रींस्त्रियस्त्वेकैकमञ्जलिम्। वैष्णवे 'त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्। ऋषीणां च यथान्यायं सकृच्चापि प्रजापतेः। यथान्यायं त्रिः। योगियाज्ञवल्क्यः 'अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना'। अत्र सव्यान्वारब्धदक्षिणेन पाणिनेसञ्जलिरभिप्रेतः। 'एकहस्तेन तोयेन

तर्पणेहस्त-निर्णयः। न कुर्यात्पितृतर्प्पणम्। पितरो न प्रशंसन्ति देवतानां न शस्यते' इति वचनादेकहस्तेन तर्प्पणनिषेधात्। शङ्खः 'उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति। स मूढो नरकं याति कालसूत्रमवाक्शिराः। एतच्छ्राद्धविषयम्। 'श्राद्धे विवाहकाले च पाणिनैकेन दीयते। तर्प्पणं तूभयेनैव विधिरेष सनातन' इति कार्ष्णाजिनिवचनात्। कौर्म्मे 'अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। देवर्षीस्तर्प्पयेद्धीमानुदकाञ्जलिभिः पितॄन्'। एतदपि दक्षिणहस्तस्यैव मुख्यकरणत्वप्रतिपादनं, तच्च पितृतीर्थादिनियमबोधनाय। नत्वेकहस्ततर्प्पणपरम्। उदकाञ्जलिभिः पितॄनित्सनेन विरोधात्। न च देवर्षीनिति विशेषोपादानादेकहस्ततर्प्पणस्य तन्मात्रविषयतास्त्विति वाच्यम्। एकैकमञ्जलिं देवा इत्यादिवचनविरोधात्। कौर्मवचनं शाखाभेदव्यवस्थितमित्येके। 'अन्वारब्धेन सव्येन नाम्ना गोत्रेण चाप्यथ' इति योगियाज्ञवल्क्यवचनमपि सव्यहस्तस्याञ्जलिघटकताभिप्रायकमिति सर्वं समञ्जसम्। हारीतः 'वसित्वा वसनं शुक्लं स्थले विस्तीर्णबर्हिषि। विधिज्ञस्तर्प्पणं कुर्यान्न तु पात्रे कदाचन'। एतदनुद्धृतोदकस्थलतर्प्पणविषयम्। उद्धृतोदके तु स एवाह। 'पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत्। असंस्कृतप्रमीतानां स्थले दद्याज्जलं सकृत्'। इदमनुद्धृतजलतर्प्पणाभिप्रा-

येण। एवं च यानि स्थलतर्प्पणनिषेधकानि तानि जलस्थस्य, यानि जलतर्प्पणनिषेधकानि तानि स्थलस्थस्येति वचनानां विरोधः परिहरणीयः। विष्णुः 'यत्राशुचि स्थलं वा स्यादुदके देवतापितॄन्। तर्प्पयेत्तु यथा काममप्सु सर्वं प्रतिष्ठितम्'। एतत्तु स्थलस्याशुचित्वे जले तर्प्पणमनुजानीते। हारीतः 'आर्द्रवासा जले कुर्य्यात्तर्प्पणाचमनं जपम्। शुष्कवासा स्थले कुर्य्यात्तर्प्पणाचमनं जपम्। दक्षः 'प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्। उदङ्मनुष्यांस्तर्प्पयेत् पितॄन् दक्षिणतस्तथा। अग्रैस्तु तर्प्पयेत् देवान्मनुष्यान्कुशमध्यतः। पितॄंस्तु कुशमूलैस्तु विधिः कौशो यथाक्रमम्'। सत्यव्रतः 'खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्प्पणम्। मणिकाञ्चनदर्भैर्वा न शुद्धेन कदाचन'। अत्र वा शब्दोपादानान्न समुच्चयः। योगियाज्ञवल्क्यः 'अनामिकाधृतं हेम तर्जन्यां रूपमेव च। कनिष्ठिकाधृतं खड्गं तेन पूतोभवेन्नरः'। मनुः 'राजतैर्भाजनैरेषामथवा रजतान्वितैः। वार्य्यपि श्रद्धया दत्तमक्षयायोपकल्पते'। शङ्खः 'सौवर्णेन पात्रेण राजतेनौदुम्बरेण खड्गपात्रेणान्यपात्रेण वोदकं पितृतीर्थं स्पृशन्दद्यादिति। अत्राञ्जलिना तर्प्पणस्य विधानाद्यादृशपात्रेणाञ्जलिभङ्गो न भवति तादृक्पात्रं ग्राह्यम्। पात्रादिविधानं श्राद्धीयार्घदानपरमित्यपरे। असमर्थस्य संक्षेपतर्प्पणमुक्तम्। विष्णुपुराणे 'आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन्। क्षिपेत्तोयाञ्जलींस्त्रींस्तु कुर्वन्संक्षेपतर्प्पणम्'। पराशरः 'द्वादश्यां पञ्चदश्यां च संक्रान्तौ श्राद्धवासरे। वस्त्रं निष्पीडयेन्नैव नच क्षारेण योजयेत्। शङ्खः 'एवं यः सर्वभूतानि तर्प्पयेदन्वहं द्विज। स गच्छेत्परमं स्थानं तेजोरूपमनामयम्'॥

अथ देवार्चनम्। पाद्मे 'सूर्यदेवं नमस्कृत्य त्रिःकृत्वा च प्रदक्षिणम्। द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्।

आशयस्थं ततः पूज्य प्रतिमां चापि पूजयेत्' । आशयस्थं मनस्थम् । जलस्थमित्यन्ये । नारसिंहे ' जलदेवं नमस्कृत्य ततो गृहगतः पुमान् । विधिना पुरुषसूक्तेन ततो विष्णुं समर्च्चयेत् । वैश्वदेवं ततः कुर्य्याद्बलिकर्म्म यथाविधि' । एतेन विष्णुपूजाया एव नित्यत्वं प्राप्तम् । वैश्वदेवादिसाहचर्यात् । 'शिवं भास्करमग्निं च केशवं कौशिकीमपि । मनसानर्चयन् याति देवलोकादधोगतिम्' । एतच्चु शिवादीनां मानसपूजाया नित्यत्वं बोधयति । मनसाप्यनर्चयन्निति व्यवहितान्वयकल्पने मानाभावात् । अनर्चयन् भक्तिमकुर्वन्निति श्रीदत्तोपाध्यायाः । निगमे 'ब्रह्माणं विष्णुमीशं वा सूर्यमग्निं गणाधिपम् । दुर्गां सरस्वतीं गौरीं लक्ष्मीं वा निसमर्चयेत्'। अत्राप्यर्चनं भक्तिः । विष्णुपूजाया नित्यत्वे हेतुमाह योगियाज्ञवल्क्यः 'विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः । तस्मात्पूज्यतमं नान्यमहम्मन्ये जनार्दनात् । दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् । कौर्मे 'पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् । वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च । अग्नौ च हृदये सूर्य्ये स्थण्डिले प्रतिमासु च । षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्'। ब्राह्मे 'यः पूजयेद्धरिं चक्रे शालग्रामशिलोद्भवे । अश्वमेधसहस्रेण तेनेष्टं प्रतिवासरम् । यथाकाष्ठगतो वह्निर्मथ्यमानः प्रकाशते । तथातथाहरिर्व्यापी शालग्रामे प्रकाशते । न तथा रमते लक्ष्म्यां न तथा स्वपुरे हरिः । शालग्रामशिलाचक्रे यथा स रमते सदा । अग्निहोत्रं कृतं तेन दत्ता पृथ्वी ससागरा । येनार्चितो हरिश्चक्रे शालग्रामशिलोद्भवे । यः पुनः पूजयेद्भक्त्या शालग्रामशिलाश्रम् । उषित्वा स हरेर्लोके चक्रवर्त्तीह जायते । कामक्रोधप्रलोभैश्च व्याप्तो योऽत्र नराधमः । सोपि याति हरेर्लोकं शालग्रामशिलार्चनै।

यः पूजयति गोविन्दं शालग्रामे सदा नरः। आभूतसम्प्लवं यावन्न स प्रच्यवते दिवः'। एतान्यपि गुणफलान्याधारविशेषाधिकारात्। 'ततो गृहार्चनं कुर्य्यादभीष्टसुरपूजनमिति दक्षवचनेऽप्यभीष्टसुरो विष्णुरेव पूर्वोक्तवाक्यैरेकवाक्यत्वात्।

अथ पुरुषसूक्तेन पूजाविधिः। 'आनुष्टुभस्य सूक्तस्य त्रैष्टुभं तस्य देवता। पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः'। पुरुषसूक्तस्य षोडश ऋचः, तासां न्यासे क्रम उच्यते। 'प्रथमां विन्यसेत्पादे द्वितीयां दक्षिणे करे। तृतीयां वामपाणौ तु चतुर्थीं दक्षिणे तथा। पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत्। सप्तमीं वामकुक्षौ तु अष्टमीं दक्षिणेन्यसेत्। नवमीं नाभिमध्ये तु दशमीं हृदये तथा। एकादशीं कण्ठदेशे वामबाहौ ततः पराम्। त्रयोदशीं दक्षिणे तु आस्यदेशे चतुर्दशीम्। अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्द्ध्नि विन्यसेत्। एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत्। आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्। द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया। अर्घश्चतुर्थ्या दातव्यः पञ्चम्याचमनीयकम्। षष्ठ्या स्नानं प्रदातव्यम् सप्तम्या वस्त्रमेवच। यज्ञोपवीतमष्टम्या नवम्या त्वनुलेपनम्। पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम्। द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम्[1]। चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम्। अर्च्चयित्वा तु गोविन्दं षोडश्या च विसर्जयेत्। स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्। वाराहे 'हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः। पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः। अग्निष्टोमसहस्रैस्तु वाजपेयशतैरपि। तत्फलं लभते देवि विष्णोर्नैवेद्यभक्षणात्। अत्र श्रीकृष्णप्रसादं श्रीकृष्णभुक्तशेषं वा भुञ्जीत। तदुक्तं पाद्मे

१ नैवेद्यस्य निवेदनमित्यर्थः।

'उच्छिष्टमवशिष्टं वा भक्तानां भोजनं द्वयम्' । भागवते 'त्वयोपभुक्तस्रग्वासोगन्धालङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयीमहि' । स्कान्दे 'षड्भिर्मासोपवासैश्च तत्फलं परिकीर्त्तितम् । विष्णोर्नैवेद्यसिक्थेन फलं तद्भुजतां कलौ । मुकुन्दाशनशेषं तु योहि भुङ्क्ते दिनेदिने । सिक्थे सिक्थे तस्य पुण्यं चान्द्रायणशताधिकम् । अम्बरीष नवं वस्त्रं फलमन्नं रसादिकम् । कृत्वा कृष्णोपभोग्यं हि सदा सेव्यं च वैष्णवैः । नैवेद्यशेषं तुलसीविमिश्रं विशेषतः पादतलेन विष्णोः । योऽश्नाति नित्यं पुरतोमुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम्' । अत्र नैवेद्यस्य शेषं भक्षयेदिति षष्ठीसमासमाहुरभागवताः । तन्न । कर्मधारयस्य लघुत्वात् । वैष्णवाय दत्वा भुञ्जीतेति तस्यापि शेषत्वोपपत्तेः । केचित्तु अपि दीपावलोकं मे नोपयुज्यान्निवेदितमिति भागवतवचनेन स्वनिवेदितस्य स्वोपभोगनिषेधान्नैवेद्यभक्षणवाक्यानि परदत्तनैवेद्यपराणीत्याहुः । तन्न । भागवतवचनस्य स्थावरपरत्वात् । परस्मै निवेदितं मे मह्यं नोपयुंज्यादिति वा तदर्थात् । शक्तौ गौण्यादिकल्पनाविरोधाच्च । अनिवेदितभक्षणस्यापराधेषु परिगणनात् । स्वदत्तस्य स्वोपयोगविरोधे चरणोदकचन्दनकुसुमादेरपि स्वयमनुपयोगापत्तेः । नचेष्टापत्तिः । सकलशिष्टाचारविरोधादिति । नैवेद्यभक्षणे श्रुतिरप्याह 'एक एव नारायण आसीन्न ब्रह्मा नेमे द्यावापृथिव्यौ, सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाऽशितमश्नन्ति विष्णुना घ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षेयुरिति । अनिवेदितभक्षणे निन्दा च 'पत्रं पुष्पं फलं तोयमन्नं पर्णमथौषधम् । अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् । अनिवेद्य तु भुञ्जानः प्रायश्चित्तीयते नरः । पाद्मे 'अनर्प्पयित्वा गोविन्दे यो भुङ्क्ते धर्मवर्जितः । शुनो वि-

ष्ठासमं भक्ष्यं नीरं तु सुरया समम्। अनिवेद्य तु यो भुङ्क्ते हरये परमात्मने । मज्जन्ति पितरस्तस्य नरके शाश्वतीःसमाः । अवैष्णवानामन्नं च पतितानां तथैव च । अनर्पितं तथाविष्णोः श्वमांससदृशं भवेत् । अवैष्णवगृहे भुक्त्वा मूलं साष्टशतं जपेत्' इति। चरणोदकमपि पूजान्त एव पेयं न वैश्वदेवान्ते शुद्ध्यापादकत्वश्रुतेः । अतः पावनार्थत्वादेकादश्यामपि तत्पानमविरुद्धमेव । ये त्वेकादश्यां श्राद्धात्प्राक् च हरिचरणपयो न पिबन्ति ते उपेक्षणीयाः । प्रमाणाभावात् । जलपारणदर्शनेन पानमात्रनिषेधे आचमनाद्यकरणप्रसङ्गात् । नच द्वादश्यां चरणोदकेन पारणविधानादेकादश्यामपेयत्वमायाति। दुग्धसितादेरप्येकादश्यामनुपादानप्रसङ्गात् । आचमनादिकं विहितत्वाददुष्टमिति चेत् । तुल्यम् चरणोदकेऽपिशुद्ध्यापादकत्वस्य समानत्वात् । अश्नितं नाशितं च तदित्यादि वचनाच्चेतिदिक् ॥

अथ पूजोपयुक्तपुष्पाणि नारसिंहे 'पुष्पैररण्यसम्भूतैः पत्रैश्च गिरिसम्भवैः । अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः । आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेद्धरिम् । शमीपुष्पं बिल्वपत्रं चम्पकं तगरं तथा । वनमालाप्यशोकं च सेवन्ती कुब्जमालती । त्रिसन्ध्यं च तथा श्वेतं कुन्दं च शतपत्रकम् । मल्लिका चैव जातीच सर्वपुष्पाद्विशिष्यते । जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनाम् । विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ।कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेद्विष्णुपुरे श्रीमान्विष्णुतुल्यपराक्रमः॥

अथ पत्राणि 'आपामार्गं भृङ्गराजं शमीपत्रं च खादिरम्।दूर्वाच कुशपत्रं च दमनं मरुबकं तथा । ततः श्रेष्ठं बिल्वपत्रं ततस्तु तुलसी वरा । येषामुशन्ति पुष्पाणि प्रशस्तान्यर्चने हरेः । पल्लवान्यपि

१ 'प्रादुरब्भणं विप्रा' इति पूर्वः पादः।

तेषां स्युः शस्तान्यर्चाविधौ हरेः। वीरुधामप्यभावेतु बर्हिषाप्यर्चयेद्धरिम्। अपराधसहस्राणि अपराधशतानि च। पद्मेनैकेन देवेशः क्षमते हेलयाऽर्चितः। पद्मेनैकेन देवेशमभ्यर्च्य कमलापतिम्। वर्षायुतसहस्रस्य पापस्य कुरुते क्षयम्।अगस्त्यवृक्षसम्भूतैः कुसुमैरसितैः सितैः। येऽर्चयन्ति जगन्नाथं तैः प्राप्तं परमं पदम्। सुवर्णकेतकीपुष्पं यो ददाति जनार्दने।कोटिजन्मार्जितं पापं दहते गरुडध्वजः। सकृत्कदम्बपुष्पेण हेलया हरिरार्चितः। सप्तजन्मानि देवर्षे तस्य लक्ष्मीर्न दूरगा।कुम्भीपुष्पं तु देवर्षे यः प्रयच्छति केशवे। सुवर्णपलदानस्य पुष्पे पुष्पे भवेत्फलम्। गारुडे 'धात्रीपुष्पेण यत्पुण्यं जयन्त्याः समुपोषणे। खगेन्द्र यल्लभेन्मर्त्यस्तुलसीपूजनेन तत्। स्कान्दे 'विष्णुमूर्द्धनि स्थितं पुष्पं शिरसा यो वहेन्नरः। अपर्युषितपापः स्याद्यावद्युगचतुष्टयम्'। अथ वर्ज्यानि 'उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत्। अन्यायतननजातानि कण्टकीनि तथैव च। रक्तान्यकालजातानि चैत्यवृक्षोद्भवानि च। श्मशानजातपुष्पाणि विष्ठाराशिभवानि च। क्रकराख्यस्य पुष्पाणि तथा धत्तूरकस्य च। कृष्णं च कुटजं चार्कं नैव देयं जनार्दने। शाल्मलं च शिरीषं च बृहतीं गिरिकार्णिकाम्। संजकं चैव कूष्माण्डं काञ्चनालं च वर्जयेत्'। विष्णुरहस्ये 'न शुष्कैः पूजयेद्विष्णुं कुसुमैर्न महीं मतैः। न विशीर्णदलैर्मुक्तैर्न चैवाशुचिकाशितैः'। तथा 'जलं पर्युषितं साज्यं पत्राणि कुसुमानि च। तुलस्यगस्त्यबिल्वानि गाङ्गं वारि न दुष्यति। स्नानं कृत्वा तु ये केचित्पुष्पं चिन्वन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत्"। अत्र पुष्पमित्युपादानात्पत्रमनिषिद्धम्। एतच्च मध्याह्नस्नानानन्तरं वेदितव्यम्। सदाप्रातःस्नायिनः पुष्पावचयकालस्य कदाप्यलाभादिति॥

वर्ज्य-पुष्पाणि।

अथ पञ्चयज्ञस्वरूपम्। तत्र यमः 'पञ्चसूना गृहस्थस्य वर्त्त-
पञ्चसूना-निर्देशः। न्तेऽहरहः सदा। कण्डनी पेषणी चुल्ली उदकुम्भ उपस्करः।
एतानि वाहयन्विप्रो हन्ति जन्तून्मुहुर्मुहुः। एतासां पावनार्थाय
पञ्चयज्ञाः प्रकीर्त्तिताः'। सूना हिंसास्थानाम्। कण्डनी उलूख-
लादि। पेषणी दृषदादि। चुल्ली पाकस्थानम्। उदकुम्भ उद-
काधानम्। उपस्करः शूर्पादिः। नच कण्डनादिनिमित्तश्रव-
णान्नैमित्तिकत्वमाशङ्कनीयम्। 'पञ्चयज्ञविधानं तु गृही नित्यं
न हापयेत्' इति शङ्खवचनेन नित्यत्वस्य बोधनात्। के ते प-
ञ्चयज्ञा इत्याकाङ्क्षायां यमः। 'ब्रह्मयज्ञो देवयज्ञः पि-
तृयज्ञस्तथैव च। भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकी-
र्त्तिताः'। इदं लक्षणमाह यमः 'अध्यापनं ब्रह्मयज्ञः पि-
तृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजन-
म्'। अध्यापनमध्ययनोपलक्षणम्। पितरस्तर्प्यन्ते अनेनेति पि-
तृतर्पणम् श्राद्धादिः। 'स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथावि-
धि। पितॄन् श्राद्धेन नॄनन्नैर्भूतानि बलिकर्मणा' इति मनुवचनात्।
पितृयज्ञे विशेषमाह कात्यायनः 'श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो
र्बलिरथापि वा'। श्राद्धं नित्यश्राद्धम्। वैश्वदेवमध्ये पितृभ्यः स्व-
धास्त्विति यो बलिर्दीयते स वा पितृयज्ञः। मनुष्ययज्ञार्थमतिथिं भो-
जयेत्। भोजनपर्याप्तान्नदानासमर्थस्य विकल्पमाह कार्ष्णाजिनिः
'भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा'। भिक्षादिलक्षण-
माह मनुः 'ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम्। अग्रं च-
तुर्गुणीकृत्य हन्तकारो विधीयते'। पुष्कलमग्रमिति पर्यायौ।

अथ नित्यश्राद्धम्। तत्र मनुः 'दद्यादहरहः श्राद्धम्' इति।
मार्कण्डेयः 'कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा। पितॄनुद्दिश्य
विप्रांस्तु भोजयेद्विप्रमेव वा'। प्रचेताः 'नाग्नौकरणहोमश्च ना-

वाहनविसर्जने । न पिण्डदानं न सुरान्निखे युञ्ज्याद् द्विजोत्तमः । उपविश्यासनं दत्वा सम्पूज्य कुसुमादिभिः । निर्दिश्य भोजयित्वा तु किञ्चिद्दत्वा विसर्जयेत्' । न सुरान् न विश्वेदेवान् । 'नावाहनस्वधाकारपिण्डाग्नौकरणादिकम् । ब्रह्मचर्यादिनियमो वैश्वदेवस्तथैव च । तच्चु षाट्पौरुषं ज्ञेयं दक्षिणापिण्डवर्जितम्' । कात्यायनः 'एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये । अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा । अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि । पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत्' । एतदुद्धृतमन्नं ब्राह्मणायैव दद्यात् । तदभावे गोभ्यो वा । तदुक्तं कौर्मे 'उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः । वेदतत्वार्थविदुषे द्विजायैवोपपादयेत् । तथा 'सर्वेषामप्यलाभे तदन्नं गोभ्यो निवेदयेत्' । गवामप्यलाभे विष्णुः 'भिक्षुकाभावेऽन्नं गोभ्यो दद्यादग्नौ वा प्रक्षिपेदिति । अशक्ते मनुः 'दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन्' । पयोदुग्धम् । चमत्कारखण्डे 'नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्ध्यति । श्राद्धान्तरे कृते ऽन्यत्र नित्यत्वात्तन्न हापयेत्' । श्राद्धान्तरे षट्पुरुषश्राद्धे ऽमावस्याश्राद्धनान्दीमुखादौ श्राद्धे कृते नित्यं श्राद्धं न कर्त्तव्यम् । तस्मिन् श्राद्धे पूज्यानां पूजितत्वात् । अन्यत्र सांवत्सरिकादौ कृते ऽपि कर्त्तव्यम् । षण्णामपूजितत्वादित्यर्थः ॥

वैश्वदेव-निर्णयः अथ वैश्वदेवम् । कात्यायनः 'सायम्प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च । अनश्नताऽपि शततमन्यथा किल्बिषी भवेत्' । मनुः 'वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्मै चान्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्' । अस्यार्थः—वैश्वदेवानन्तरमतिथिपूजायां कृतायां द्वितीयोऽतिथिर्यद्यागच्छति अन्नं च न पक्कमस्ति तदा पुनः

पाकं कृत्वा तस्मै दद्यात्, न बलिं हरेत्, अन्नसंस्कारार्थं प्रसक्तं पुनर्वैश्वदेवं न कुर्वीतेति। एतच्च यस्मिन्नग्नौ पाकस्तत्रैव, यदुक्तं कौर्मे ‘यदि स्याल्लौकिके पाकस्ततोऽन्नं तत्र हूयते। शालाग्नौ तत्र चेदन्नं विधिरेष सनातनः। लौकिके वैदिके वापि हुतोन्मृष्टे जले क्षितौ’। लौकिकाग्नेः पात्रान्तरकरणमाहरणम्, स्मार्त्तस्य तूद्बोधनमाहरणम्, उन्मार्जनं भस्मीकरणम्। कात्यायनः ‘उद्धृतं हविरासिच्य हविष्येण घृतादिना। स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्’। व्यासः ‘जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम्। दध्यक्तं पयसाभ्यक्तं तदभावेऽम्भसापि च’। चतुर्विंशतिमते ‘अलाभे येन केनापि फलशाकोदकादिना। पयोदधिघृतैः कुर्य्याद्वैश्वदेवं स्रुवेण तु। हस्तेनान्नादिभिः कुर्य्यादद्भिरञ्जलिना जले’। परिशिष्टे ‘शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम्। संकल्पयेद्यमाहारं तेनासौ जुहुयादपाम्’। पयःप्रभृतिरसद्रव्याणां होमः स्रुवेण, हविष्यादिकठिनद्रव्याणां तु हस्तेन। आपस्तम्बः ‘न क्षारलवणानां होमोविद्यते, तथा परान्नसंस्पृष्टस्य, उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहूयाद्धुतमाहूतं चाग्नौ भवतीति। अस्यार्थः—क्षारलवणपरान्नसंस्पृष्टेन हविष्येणाग्नौ होमो न कार्य्यः, किन्तूष्णं भस्म अग्न्यायतनादुत्तरतोऽपोह्य तस्मिन् होतव्यम्। उष्णमङ्गारमिश्रितम्। यदाह बौधायनः ‘अङ्गान्भस्मविमिश्रांस्तु उद्धृत्योत्तरतोऽनलात्। जुहुयाद्वैश्वदेवं तु यदि क्षारादिमिश्रितम्’। तथापरोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्। तदेव पवित्रमित्याचक्षते। अधिश्रयणं पुनरग्नेरुपस्थापनमात्रमन्नसहित पात्रस्य, एतच्च सायं प्रातः कर्त्तव्यमित्युक्तम्। तत्र सायं विशेषमाह मनुः ‘सायमन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्। वै-

श्वदेवं हि नामैतत्सायं प्रातर्विधीयते'। एवं कृतदेवयज्ञस्य बहिर्बलिमाह
भूत- मनुः 'शुनां च पतितानां च श्वपचां पापरोगिणाम्। वायसानां
बालिः। कृमीणां च शनकैर्निःक्षिपेद्भुवि'। एतच्च वैश्वदेवाख्यं कर्म न दिवा द्विर्नक्तं च द्विराचरेत्। यदुक्तं वैष्णवे 'धर्मविन्नाचरेत्स्नानमाह्निकं च पुनः पुनः। तर्प्पणं ब्रह्मयज्ञं च वैश्वदेवं च नाचरेत्'। वैश्वदेवं बलिकर्म च सायम्प्रातः, पञ्चयज्ञास्तु दिवैवेत्याह जैमिनिः 'वैश्वदेवं तथा रात्रौ कुर्याद्बलिहृतं तथा। महतः पञ्चयज्ञांस्तु दिवैवेत्याह धर्मवित्'। अनग्निकस्य विशेषमाह वसिष्ठः 'अनग्निकस्तु यो विप्रः सोऽग्निर्व्याहृतिभिः स्वयम्। हुत्वा शाकलमन्त्रैस्तु शिष्टाद् भूतबलिं हरेत्'। अनग्निकः श्रौतस्मार्त्ताग्निरहितः, अत्र कात्यायनोक्तविधेः साग्निकमात्रपरत्वं, तत्र मणिकसंनिधाने बलिहरणाभिधानात्। उदपात्रविशेषे मणिकपदं शक्तम्। 'अलञ्जरः स्यान्मणिक' इत्यभिधानात्। अलञ्जरसन्निधाने साग्निकस्यैव बलिहरणप्रतिपादनात्। तस्माद्वसिष्ठोक्तो विधिर्निरग्निकमात्रपर इत्यवधेयम्। व्यासः 'अकृते वैश्वदेवे तु भिक्षुके गृहमागते। उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत्'। भिक्षुका अपि तेनैवोक्ताः 'ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः' ॥

अथ वैश्वदेवपाकनिर्णयः। अत्र दर्शश्राद्धं प्रकृतिरतस्तन्निर्णयेनैव तद्विकृतीनामपि निर्णय इति प्रकृतौ विचार्य्यते। किं श्राद्धार्थं वैश्वदेवार्थं च एक एव पाक उत पृथगिति। अत्र लौगाक्षिः 'पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च'। अत्र पाकस्य पृथक्त्वमपृथक्त्वं वेति सन्देहे उत्तरार्द्धेनार्थं विवृणोति स एव, 'वैश्वदेवं न पित्रर्थं न दर्शं वैश्वदेविकम्' इति। अयं च पृथक्पाको वैश्वदेवस्य श्राद्धात्पूर्वं वेदितव्यः। यदाह पैठीनसिः 'पितृपाकात्समुद्धृत्य वैश्वदेवं

करोति यः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते । श्राद्धं निर्वर्त्त्य विधिवद्वैश्वदेवादिकं ततः । कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा'। अत्र प्रथमततः शब्दो हेतुपरः द्वितीयस्तु श्राद्धावशिष्टान्नपरः, तेनायमर्थः पर्य्यवस्यति, यतः श्राद्धात्पूर्वं मध्ये वा आसुरं तद्भवेच्छ्राद्धमिति निषेधस्ततस्तस्माद्धेतोः श्राद्धं निर्वर्त्त्य तदनन्तरं तदवशिष्टादन्नाद्वैश्वदेवादिकं कर्त्तव्यमिति । यदा ब्राह्मणविसर्जनानन्तरं वैश्वदेवस्तदा तच्छेषेण अन्यत्र पृथक्पाकेनेतिसिद्धान्तः ॥

अथ वैश्वदेवकालः । तत्र लौगाक्षिः 'पक्षान्तं कर्म निर्वर्त्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः'। पक्षान्तमन्वाधानम् । अन्वाहार्यकं दर्शश्राद्धम् । एवं यानि श्राद्धात्पूर्वं वैश्वदेवविधायकानि वचनानि तानि श्रौताग्निविषयाणि । अत

साग्निक- एव साग्निक इत्यौपासनाग्निव्यावर्त्तकम् । अन्यथा पक्षान्तपिण्ड-
निराग्निक- पितृयज्ञमध्यविधिबलादेव वैश्वदेवस्य साग्निककर्तृकत्वावगतेः
योर्वैश्वदेवः। साग्निक इति व्यर्थं स्यात् । साग्निकस्यापि एकादशाहश्राद्धे पश्चादेव वैश्वदेवम् । 'सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च । अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि'। इति परिशिष्टवचनात् । शालङ्कायनः 'श्राद्धे प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः । एकादशाहिकं भुक्त्वा तत्र ह्येतद् विधीयते । तस्मादौपासनाग्निमतो निरग्नेश्च श्राद्धमध्ये विकिरान्ते ब्राह्मणविसर्जनान्ते च वैश्वदेवमायातम् । यानि च श्राद्धादौ वैश्वदेवनिषेधकानि तानि तान्यपि तयोरेवेति ध्येयम् । निषेधश्च षट्त्रिंशन्मते 'प्रतिवात्सरिको होमः श्राद्धादौ क्रियते यदि । देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा'। वृद्धगौतमः 'पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः । अकृतं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते । वसिष्ठः 'वैश्वदेवमकृत्वैव

श्राद्धं कुर्यादनग्निकः । लौकिकाग्नौ हुतशेषः पितॄणां नोपतिष्ठते' । अनग्निकः वैदिकाग्निरहितः, तस्य त्रयः कालाः । तत्र श्राद्धमध्यकालो ब्रह्माण्डे 'वैश्वदेवाहुतीरग्नावर्ध्या ब्राह्मणभोजनात् । जुहुयाद् भूतयज्ञादिश्राद्धं कृत्वा तु तत्स्मृतम्' । ब्राह्मणभोजनादर्वाक् अग्नौ करणानन्तरमित्यर्थः। न चैवमनङ्गव्यवायः पूर्वेद्युर्निमन्त्रितेषु श्राद्धापरिसमाप्तावेव प्रातर्होमाविरोधात् । विकिरान्तकालो भविष्ये 'पितॄन्सन्तर्प्य विधिवद्बलिं दत्वा विधानतः। वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणभोजनम्' । बलिस्वरूपं तत्रैव 'ये अग्निदग्धामन्त्रेण भूमौ यन्निःक्षिपेद्बुधः। जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदा'। ब्राह्मणविसर्जनान्तकालो मात्स्ये 'उच्छेषणं तु तत् तिष्ठेद्यावद्विप्रा विसर्जिताः। वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि' । मनुः पूर्वार्द्धं तदेव उत्तरार्द्धन्तु 'ततोगृहबलिं कुर्य्यादिति धर्मो व्यवस्थितः' । बलिशब्देनात्र वैश्वदेवमुच्यत इतिमेधातिथिः । भविष्ये 'श्राद्धं कृत्वा महाबाहो ब्राह्मणांश्च विसर्ज्य च । वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप' ॥

अथातिथिपूजा । तत्र वैष्णवे 'ततो गोदोहमात्रं तु तिष्ठेत्कालं गृहाङ्गणे। अतिथिग्रहणार्थाय तदूर्द्ध्वं तु यदृच्छया' । वैयाघ्रपादः 'अचिन्तितमनाहूतं वैश्वदेवेष्ववस्थितम् । अतिथिं तं विजानीयान्नैकग्रामनिवासिनम् । क्षुधार्त्तस्तृषितश्चैव स्नातो गृहमुपागतः । प्रयत्नेन तु सम्पूज्यः सोऽतिथिः स्वर्गसंक्रमः । इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा । सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः। न पृच्छेद्गोत्रचरणं न स्वाध्यायं व्रतानि च। चित्ते न भावयेत्तं वै सर्वदेवमयो हि सः' । विष्णुः 'अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते । स तस्मै किल्बिषं दत्वा पुण्यमादाय गच्छति' । याज्ञवल्क्यः 'दिनातिथौ तु विमुखे गते यत्पातकं भवे-

च । तदेवाष्टगुणं प्रोक्तं सूर्येन्दौ विमुखे गते' । सूर्येन्दौऽर्कास्तागते ॥

अथ गोग्रासः ऋष्यशृङ्गः 'गवां ग्रासं च कुर्वीत नित्यमेव समाहितः । गवां कण्डूयनं स्पर्शं ग्रासमाग्रिकमेव च' । मार्कण्डेयः 'अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् । अहुत्वाशी कृमिं भुङ्क्ते अदत्वा विषमेव च । आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम् । वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम्' ॥

अथ भोजनविधिः । दक्षः 'पञ्चमे च तथा भागे संविभागो यथार्हतः । देवपितृमनुष्याणां कीटानां चोपदिश्यते । संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्' । संविभागः शास्त्रतो विभज्य प्रतिपादनम् । देवलः 'स्नात्वा प्रक्षाल्य पादौ तु स्रग्गन्धालंकृतः शुचिः । पञ्चयज्ञावशिष्टं तु यो भुङ्क्ते सोऽमृताशनः । बौधायनः 'सुप्रक्षालितपादोऽप आचम्य शुचौ संवृते देशेऽन्नमुपसंगृह्य कामक्रोधलोभमोहानपहृत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन् प्राश्नीयात्, नापिण्डशेषं पात्रमुत्सृजेत्' । आपस्तम्बः 'यस्तु भोजनशालायां भोक्तुकाम उपस्पृशेत् । आसनस्थोऽथवान्यत्र स विप्रः पंक्तिदूषकः । ब्राह्मे 'उपलिप्ते समे स्थाने शुचौ शुद्धासनास्थिते । मण्डलं गोमयेन स्यादथवा गौरमृत्स्नया । चतुरस्रं त्रिकोणं च वर्त्तुलं चार्द्धचन्द्रकम् । कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् । ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवो मण्डलान्तरात् । निवेदितं नरैरन्नं यस्मादृगृह्णन्ति नान्यथा। अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः । तेषां तु यक्षरक्षांसि हरन्त्यन्नस्य तद्बलिम् । शङ्खः 'चतुष्कोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु । मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं मतम् । अत्र शूद्रस्यार्द्धचन्द्राभ्युक्षणयोर्विकल्पः । आसनमाह प्रचेताः 'गोशकृन्मृन्मयं भिन्नं तथा पालाशपैप्पलम् । लोहबन्धं सदैवार्कं वर्जयेदासनं बुधः । एतदतिरिक्तं प्रशस्तमासनम् । मनुः 'आयुष्यं

भोजन-विधिः

भोजने दिङ्पात्रादिनिर्णयः- प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः। श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः। प्राङ्मुख आयुष्कामः यशोर्थी दक्षिणामुखः। श्रीकामः प्रत्यङ्मुखो न शयनाधिष्ठितोऽश्नीयात् न कार्ष्णायसे न मृत्पात्रे न भिन्ने नावकीर्णे'। अवकीर्णे दुर्ब्राह्मण-भोजनक्रियया दूषिते । वामनपुराणे 'भुञ्जीत नैवेह च दक्षिणा-मुखो नच प्रतीचीमभिभोजनीयम्' । अत्र प्रत्यङ्मुखादिभोजन-निषेधो निष्कामविषयः । सकामविहितत्वात् । सकामस्यापि जीवन्मातृकस्य दक्षिणामुखभोजनं निषिद्धम् । यदाहापस्तम्बः 'वाग्यतो दक्षिणामुखो भुञ्जीत अनायुष्यत्वं तन्मुखभोजनं मा-तुरमूपदिशन्तीति । विष्णुपुराणे ' नैकवस्त्रधरो ऽप्यार्द्रपाणिपादो नरेश्वर । विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः। प्राङ्मुखो दङ्मुखोवापि न चैवान्यमना नरः' । प्राङ्मुख उदङ्मुखो वा भुञ्जीतेत्यन्वयः । कौर्मे ' यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्-मुखः । योहि भुङ्क्ते दक्षिणमुखं सर्वं विद्यात्तदासुरम् । मनुः ' सायं प्रातर्द्विजातीनामशनं देवनिर्मितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमोविधिः । सायं रात्रौ, प्रातर्दिने । अत एव छन्दोगपरिशिष्टे ' ऋषिभिर्द्विरशनमुक्तं विप्राणां मर्त्यवासिनां-नित्यं । अहनि च तथा रजन्यां सार्द्धप्रहरैकयामान्तः । पैठीनसिः 'सौवर्णे राजते ताम्रे पद्मपालाशपत्रयोः । भाजने भोजने चैव त्रिरात्रफलमश्नुते । अत्र ताम्रादिपात्रत्रये भोजनमगृहीपरम् । तदाहवृद्धमनुः 'ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । प-लाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् । केचित्तु निषेधोवल्लीप-लाशपरः । विधिस्तरुपलाशविषय इत्याहुः । 'एक एव तु यो भुङ्क्ते विमले कांस्यभाजने । चत्वारि तस्य शोभन्ते आयुः प्रज्ञा यशोवलम् । बृहन्नारदीये ' यः शूद्रेण समाहूतो भोजनं कुरुते

द्विजः। सुरापः सहि विज्ञेयः सर्वधर्मबहिष्कृतः। अत्रिः 'आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणःक्वचित्। मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणात्। मार्कण्डेयः 'पादप्रसारणं कृत्वा नच वेष्टितमस्तकः। न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान्महामुने। शेषमुद्धृत्य भोक्तव्यं पित्रर्थं न तु लुप्यते। ब्राह्मे 'पित्र्ये कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत्। विष्णुः 'न भिन्नभाजने नोत्सङ्गे न भुवि न पाणौ। मार्कण्डेयः 'यस्तु पाणितले भुङ्क्ते यशश्चायुष्यमश्नुते। अङ्गुलीं चोद्धरेद्यस्तु गोमांसाशनवत्स्मृतम्। वसिष्ठः 'सर्वाभिरङ्गुलीभिरश्नीयात्पाणिं च नावधुनुयात्। विष्णुः 'नोच्छिष्टे घृतमादद्यात्। आदित्यपुराणे 'नोच्छिष्टोग्राहयेदाज्यं जग्धशिष्टं न संत्यजेत्। शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं क्वचित्। गोभिलः 'अथातः प्राणाहुतिकल्पः, व्याहृतिभिर्गायत्र्या चाभिमन्त्र्य ऋतं च ससेन परिषिञ्चामीति सायं, सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः परिषिंच्य बलिं हरेत्। तत्र ब्रह्मादिबलिहरणमशब्दम्। अत्र मण्डलं विना ब्रह्मादयो बलिं न गृह्णन्ति। किन्तु राक्षसादय इत्युक्तत्वादशब्दमार्षम्। भविष्ये 'भोजनात्किंचिदन्नाग्रं धर्मराजाय वै बलिम्। चित्राय चित्रगुप्ताय प्रेतेभ्यश्चेदमुद्धरेत्'। ततोभुवः पतये भुवनपतये भूतानां पतये स्वाहेति मन्त्रत्रयेण बलित्रयं देयमित्युक्तम्। तत्र शाखादिनियामकं नोपलभ्यते इति देशकुलाचारतो व्यवस्था। ब्राह्मे 'हस्तेन लङ्घयेन्नान्नं सोदकेन कदाचन। दम्भाद्यो लंघयेदन्नं तेनान्नं निहतं भवेत्। छन्दोगसङ्ग्रहे 'आपोशानकरोविप्रो य आशीर्वचनं वदेत्। अभोज्यं तद्भवेदन्नं दाता भवति किल्बिषी। आपोशानं तु यः कुर्यादग्रभागे तथैव च। सद्यः पिबेत्सुरापाणमित्येवं मनुरब्रवीत्। आपोशानमकृत्वा तु यो भुङ्क्तेऽनापदि द्विजः। भुञ्जानो यदि वा ब्रूयाद्वा-

पञ्चषष्टशतं जपेत्। वैष्णवे 'पञ्चग्रासान्महामौनं प्राणाद्याप्यायनाय तत्'। महामौनमित्यनेन ध्वनिनिवृत्तिरप्यभिमता। शातातपः 'स्नास्यतो वरुणः शक्तिं जुह्वतोऽग्निः श्रियं हरेत्। भुञ्जानस्य यमश्चायुस्तस्मान्न व्याहरेत्त्रिषु'। अपामशने मन्त्रमाह हारीतः 'अमृतोपस्तरणमसीत्यपः पीत्वाऽस्वनन् पञ्चग्रासान् गृह्णीयात्, प्रा-
अशनपूर्व णाय स्वाहेति गार्हपत्यमेव तेन जुहोति। अपानाय स्वाहेति अ-
कृत्यम्। न्वाहार्यमेव तेन जुहोति। व्यानाय स्वाहेत्याहवनीयमेव तेन जुहोति। उदानाय स्वाहेति सभ्यमेव तेन जुहोति। समानाय स्वाहेत्यावसथ्यमेव तेन जुहोति' इति। शौनकः। 'स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्राश्च वायवाः। जिह्वया च ग्रसेदन्नं दशनेन च न स्पृशेत्। तर्जनीमध्यमाङ्गुष्ठलग्ना प्राणाहुतौ भवेत्। मध्यमानामिकाङ्गुष्ठैरपाने जुहुयाद्बुधः। कनिष्ठानामिकाङ्गुष्ठैर्व्याने तु जुहुयाद्द्विजः। तर्जनीं तु बहिःकृत्वा उदाने जुहुयाद्बुधः। समाने सर्वहस्तेन समुदायाहुतिर्भवेत्। विष्णुपुराणे 'अश्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम्। लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः। प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनः। अन्ते पुनर्द्रवाशी च बलारोग्यैर्न मुञ्चति। जठरं पूरयेदर्द्धमन्नैर्भागं जलेन च। वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत्'। आदित्यपुराणे 'एकपङ्क्तेरनुत्थाने मध्ये चेदाचमेत्परः। तदा शेषं विहायैव विप्रः सम्यगुपस्पृशेत्। पंक्तिभेदे तु न दोष इति तद्भेदकमाह बृहस्पतिः 'अग्निना भस्मना चैव स्तम्भेन सलिलेन च। द्वारेणैव च मार्गेण पंक्तिभेदो बुधैः स्मृतः। एकपंक्त्यां भोजनं निषिद्धम्। यदुक्तम् 'अप्येकपंक्त्या नाश्नीयात्संवृतः स्वजनैरपि। कोहि जानाति किं कस्य प्रच्छन्नं पातकं पृथक्। भस्मस्तम्भजलद्वारमार्गैः पंक्तिं च भेदयेत्। ग्रासनियममाहापस्तम्बः 'अष्टौ

ग्रासाः मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः । आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम्' । सोपवासगृहस्थस्य विधेयं बोधयति बौधायनः ' प्राणाग्निहोत्रमन्त्रांश्च निरुद्धो भोजने जपेत् । त्रेताग्निहोत्रमन्त्रांश्च द्रव्यालाभे च संजपेत्' । भोजने निरुद्धः सोपवासः । पुलस्त्यः 'भोजनन्तु न निश्शेषं प्राज्ञः कुर्य्यात्कथञ्चन । अन्यत्र दधिसक्त्वाज्यपलक्षीरमधूदकैः । भुक्तोच्छिष्टं

भोजनोत्तर कृत्यम् ।

समादाय सर्वस्मात्किञ्चिदाचमन् । उच्छिष्टभागधेयेभ्यः सोदकं निःक्षिपेद्भुवि । अत्र मन्त्रः, "रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् । अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठताम्" । व्यासः ' ततस्तृप्तः सन् अमृतापिधानमसीत्यपः प्राश्य तस्मान्मनागपसृत्य विधिवदाचमेत् । अपां प्राशने व्यासः ' हस्तं प्रक्षाल्य गण्डूषं यः पिबेत्पापमोहितः । स दैवं चैव पित्र्यञ्च आत्मानं चावसादयेत् । अर्द्धं पीत्वा तु गण्डूषमर्द्धं त्याज्यं महीतले । रसातलगतान्नागांस्तेन प्रीणाति नित्यशः' । व्यासः 'यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः । स्नानं सद्यः प्रकुर्वीत नान्यथाप्रयतो भवेत् । देवलः ' आचम्य च ततः कार्य्यं दन्तकाष्ठस्य भक्षणम् । भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् । दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् । न तत्र बहुशः कुर्याद्यत्नमुद्धरणे बुधः । तत्रासन्तमशौचं स्यात्तृणवेधाद्व्रणे कृते' । अत्यन्तमहोरात्रम् । तृणवेधादिति वचनात्तृणैरपि दन्तधावनं प्राप्तम् । कालान्तरे दन्तलग्नस्य निर्गमे याज्ञवल्क्यः ' श्मश्रु चास्यगतं दन्तलग्नं सक्त्वा ततः शुचिः' । निगिरन्नपि शुचिरित्याह ' दन्तवद्दन्तलग्नेषु जिह्वास्पर्शे शुचिर्न तु । परिच्युते पुनः स्थानान्निगिरन्नेव तच्छुचिः' । गौतमः 'दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वास्पर्शात् प्राक्च्युतेरिति । बौधायनः

'आचान्तो हृदयदेशमभिस्पृशति। प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकस्तेनान्नेनाप्यायस्वेति पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणिं निधापयति। 'अङ्गुष्ठमात्रः पुरुषो योऽङ्गुष्ठे च समाश्रितः। ईशश्च सर्वजगतः प्रभुः प्रीणातु विश्वभुग्' इति मन्त्रः। ततः करादिकमस्पृशन् जानुनी स्पृशेत्। 'माकरेण करं स्प्राक्षीर्मा जङ्घे माच चक्षुषी। ऊरू संस्पृश कौन्तेय भर्त्तव्या बहवो यदीति। जानुनीस्पृशराजेन्द्र भर्त्तव्या बहवो यदीति व्यासस्मरणाच्च। अत्रिः 'आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्। उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते मही। भूमावप्युपलिप्तायां तावत्स्यादशुचिः पुमान्। आसनादुत्थितस्तस्माद्यावन्न स्पृशते महीम्। विष्णुपुराणे 'स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः। अभीष्टदेवतायाश्च कुर्वीत स्मरणं ततः'। मार्कण्डेयः 'भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम्। श्रवणं चेतिहासस्य ततः कुर्य्यात्समाहितः। पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः। चूर्णपर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी। पर्णाग्रं पर्णपृष्ठं च चूर्णपर्णं द्विपर्णकम्। दन्तधावनपर्णं च शक्रस्यापि श्रियं हरेत्। अदत्वा तु मुखे पर्णं पूगं खादति योनरः। दशजन्म दरिद्रः स्यान्मरणे हरिविस्मृतिः। योनित्समत्ति ताम्बूलं मुखभूषाकरं नरः। न मुञ्चत्यच्युतस्येव तस्य मन्दिरमिन्दिरा।

अथ भक्षाभक्ष्यविचारः। तत्र मनुः 'अनभ्यासेन वेदानामाचारस्य वर्जनात्। आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति'। अन्नदोषादिति दुष्टमन्नं विभज्योक्तम् भविष्ये। 'जातिदुष्टं क्रियादुष्टं कालात्ययविदूषितम्। संसर्गाश्रयदुष्टं च सहृल्लेखं स्वभावतः॥ लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च। वृन्ताकं नालिकालाबु उपेयाज्जातिदूषितम्। न भक्षयेत्क्रियादुष्टं यद्दृष्टं प-

तितादिभिः ॥ कालदुष्टं च विज्ञेयं श्वस्तनं चिरसेवितम् । दधिभक्ष्यविकारादि मधुवर्जं तदिष्यते ॥ सुरालशुनसंस्पृष्टं पेयूषादिसमन्वितम् । संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत् ॥ शूद्रोच्छिष्टं तु विज्ञेयं पूर्वं शूद्रे प्रतिष्ठितम् । विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते । सहृल्लेखं तु विज्ञेयं परुषं च स्वभावतः । रसदुष्टं विकाराद्यद्विरसं तत्प्रकीर्त्तितम् । पायसं क्षीरपूपादि विरसं स्याद्दिनान्तरे" । कवकं छत्राकम् । भावदुष्टमप्यभक्ष्यमाह विश्वामित्रः 'स्यादभक्ष्यं भावदुष्टमभक्ष्यत्वेन शङ्कितम्' । याज्ञवल्क्यः 'देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा । अनुपाकृतमांसानि विड्जानि कवकानि च' । शिग्रुः सोभाञ्जनः, व्रश्चनान् वृक्षनिर्यासान् । बौधायनः 'अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः । तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च' । वृक्षग्रहणाच्छाकादीनि निषिद्धान्येव । तैत्तिरीयकश्रुतिः 'श्वेतं लोहितं च वृक्षनिर्यासं निषिद्धमन्यत्र हिङ्गुकर्पूरादेरित्याहस्म । मनुः 'शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत् । वृथाकृसरसंयावपायसापूपशष्कुलीः । शेलुः श्लेष्मातकफलम् । पेयूषं नवप्रसूताया गोः पयो यदग्निसंयोगात्काठिन्यं भजते, दोषाधिक्यप्रदर्शनार्थमिदमुक्तम् । 'अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका । दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम्' इतिस्मरणात् । कृसरस्तिलमुद्गसहित ओदनः । संयावो गुडक्षीरघृतसाधित ओदनः । अपूपो स्नेहपक्वो गोधूमविकारो मण्डकाख्यः । स्नेहपक्वो गोधूमविकारः शष्कुली । वृथात्वमेतेषां देवादिनिवेदनराहित्यम् । यमः 'ऋचीसपक्वं मांसं च मत्स्यानप्यनुपाकृतान् । वर्जयेत्सर्वशुक्तानि देवान्नानि हवींषि च । स्नेहेन त्वसमायुक्तं नैव किञ्चित्प्रयोजयेत्' । ऋचीसपक्वमांसम् भौमोष्मपक्वम् । देवान्नानि देवतोद्देश्येन सक्तानि हवींषि । गौतमः

"उद्धृतस्नेहं विलयं पिण्याकं मथितप्रभृतीनि आन्तर्वीर्याणि नाश्नीयात्। विलयं घृतमलम्। आन्तर्वीर्य्यमुद्धृतसारम्। यमः 'भिन्नभाण्डे न भुञ्जीत न रात्रौ दधिसक्तुकान्। दिवा दधीक्षु-धानासु रात्रौ च दधिसक्तुषु। कोविदारे च रजते तस्करे सूतके तथा। श्लेष्मातकेऽप्यलक्ष्मीश्च नित्यमेव कृतालया। वसिष्ठः 'उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं च वसनकेशकीटोपहतं च'। स्वमुच्छिष्टं किञ्चिद्भुक्त्वा त्यक्तम्। कालान्तरे तन्नाद्यात्। वसनोपहतं परिधानवस्त्रेण कृतोपघातम्। सुमन्तुः 'वचोभिहतं प्रेषितं चाण्डालादिभिरिक्षितं दधि पर्युषितं पुनः साधितमन्नमभोज्यमन्यत्र हिरण्योदकैः स्पृष्टात्। मनुः 'मत्तक्रुद्धातुराणां तु न भुञ्जीत कदाचन। केशकीटावपन्नञ्च पदा स्पृष्टं च कामतः॥ भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया। पतत्रिणावलीढं च शुना सँस्पृष्टमेव च॥ कौर्मे—वृन्ताकं नालिकाशाकं कुसुम्भाश्मन्तकं तथा। उदुम्बरमलाबुं च जग्ध्वा पतति वै द्विजः॥ नीपं दधित्थं प्लक्षञ्च प्रयत्नेन विवर्जयेत्। नाश्नीयात्पयसा तक्रं न वीजान्युपयोजयेत्। रात्रौ च तिलसम्बद्धं कूष्माण्डञ्च विवर्जयेत्'॥ वृन्ताकं श्वेतम्, 'कण्डूरं श्वेतवृन्ताकं कुसुम्भाश्मन्तकास्तथा' इति देवलात्। कण्डूरं करलोमवत्फलम्, कुम्भाण्डं दाडिमसदृशं फलम्। अलाबुं वर्तुलम् 'अलाबुं वर्तुलाकारं मसूरञ्च सवल्कलम्' इति वचनात्। वीजानि कूष्माण्डादिमहाफलानाम्। आपस्तम्बः—कीलालार्थौषधीनाञ्च कलञ्ज पलाण्डुपरारिका'। कीलालं सुरा तदर्थस्थापिता ओषधयः। औषधीनामिति कर्मणि षष्ठी। कलञ्जं दधिदिग्धमांसम्। परारिका कुन्दूरु। 'न वीजान्युपभुञ्जीत रोगापत्तिमृते नरः। काककुक्कुटसंस्पृष्टं शुक्रं वा कृमिसंयुतम्। अभोज्यं तद्विजानीयाद्धर्मराजवचो यथा॥

याज्ञवल्क्यः। 'उदक्यास्पृष्टसंघुष्टपर्यायान्नानि वर्ज्जयेत्'। उदक्या रजस्वला। संघुष्टं यदन्नमुपघुष्य दीयते। पर्य्यायान्नं अन्योद्देशेन दत्तम्॥ आपस्तम्बः। 'भुञ्जानेषु वा यत्रोत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा कुत्सयित्वा वा यत्रान्नं दद्युर्मनुष्यैरघ्रातमन्यैर्वामेध्यैरिति। गौतमः। 'पर्य्युषिताः शाकाः भक्ष्याः स्नेहमांसमधूनि च। नापनीयमन्नमश्नीयान्न पर्य्युषितमन्यत्र रागमुद्गखाण्डवदधिगुडगोधूमयवपिष्टविकारेभ्यः'। रागा दाडिममांसाद्याः। खाण्डवः स्वाद्वम्लकटुकसाध्याः प्रस्नेहाः। बृहस्पतिः 'दधि भक्ष्यं शुक्तमपि यदेव दधिसम्भवम्। आविकाजि भवेन्मेध्यमभक्ष्यं तद्विकारवत्'॥ यमः। 'शुक्तानि तु द्विजोऽन्नानि न भुञ्जीत कदाचन। प्रक्षालितानि निर्दोषाण्यापद्धर्मो यदा भवेत्'। शुक्तान्यम्लतामापन्नानि॥ याज्ञवल्क्यः। 'अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसञ्चितम्। अस्नेहा अपि गोधूमयवगोरसविक्रियाः'। वृद्धमनुः। 'वीर्य्यहानिर्यशोहानिः प्रज्ञाहानिस्तथैव च। भवेत्तस्मान्नरो रात्रौ धात्रीं यत्नेन वर्जयेत्। वर्ज्जयेच्छ्वेतवृन्ताकमलाबुं वर्तुलं तथा। रक्तमूलककालिङ्गबिल्वोदुम्बरभिस्सटाः। एतान्निषेवते यस्तु तस्य दूरतराः श्रियः'॥ भिःसटा दग्धमन्नं। भविष्ये। 'अपि प्रयाणसमये न रात्रौ प्राशयेद्दधि।

क्षीरशुद्धिः। मधुपर्कप्रदानं तु वर्ज्जयित्वा तु कामतः॥ याज्ञवल्क्यः। 'सन्धिन्यनिर्दशावत्सागोपयः परिवर्ज्जयेत्। औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्'॥ सन्धिनी या वत्सान्तरेण सन्धीयते। अवत्सा मृतवत्सा। गौतमः। 'स्यन्दिनीयमलसूसन्धिनीनां च। न पयः पिबेदिसनुवर्त्तते। स्रवत्पयाः स्यन्दिनी, यमलसूर्युग्मप्रसवित्री,। वसिष्ठः। गोमहिष्यजानामनिर्दशानाम्। आसां दशाहं पयोनिषिद्धमिसर्थः। शंखः। 'सर्व्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्जम्'। महिष्या आरण्यत्वेपि तत्पयो न निषिद्धम्॥ 'आरण्यानां च स-

र्व्वेषां मृगाणां माहिषं विनेति मनुस्मरणात् ॥ हारीतः ' द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ॥ चतुर्थे त्रिस्तनं दुह्याद्यथान्यायं यथाबलम् । भविष्ये । ' घृतफेनं घृतमलं पेयूषमथवापि च । सगुडं मरिचाक्तं तु तथा पर्य्युषितं दधि ॥ दीर्णन्तक्रमपेयं च नष्टस्वादं च फेनवत् । प्रमादाद्भक्षितैरेभिर्वने पक्षव्रतं चरेत् ॥ दीर्णं विश्लिष्टावयवम् । तत्रैव 'कापिलं यः पिबेच्छूद्रो नरके स विपच्यते । हुतशेषं पिबेद्विप्रो विप्रः स्यादन्यथा पशुः' । पराशरः । 'कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण त्रिभिः शूद्रो विनश्यति' ॥ आपस्तम्बः । 'क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः । यः पिबेत्कपिलाक्षीरं न ततोऽन्योस्त्यपुण्यकृत् ॥ यमः । 'भुक्त्वा तु क्षीरलवणं त्रिरात्रं तु वने वसेत् ॥ मनुः ॥

'क्रव्यादाञ्शकुनींश्चैव तथा ग्रामनिवासिनः ॥ कलविंकं प्लवं
पाक्षिणो हंसं चक्राह्वं ग्रामकुक्कुटम् ॥ सारसं रज्जुदालं च दात्यूहं शु-
भक्ष्याः कसारिके । प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् ॥ निमज्जतश्च मत्स्यादान्सौनं वल्लूरमेव च ॥ बकं चैव बलाकां च काकोलं खंजरीटकम् । मत्स्यादान्विड्वराहांश्च मत्स्यानेव च सर्व्वशः' ॥ प्लवो जलकुक्कुटः, चक्राह्वश्चक्रवाकः, रज्जुदालः काष्ठकुट्टकः । दात्यूहश्चातकः, प्रतुदाः श्येनादयः । तेषां क्रव्यादपक्षित्वेन गृध्रादिवदभक्ष्यत्वे प्राप्तेपि जीविभक्षकतया निष्कृतिगौरवाय पृथगुपादानम् ॥ जालपादा आट्यभिन्नाः । आट्या ब्रह्मवर्चसकामस्येति वचनात् ॥ सौनं सूना प्राणिवधस्थानम् तदीयं वल्लूरं शुष्कमांसं । काकोलो द्रोणकाकः । अन्यकाकस्य ग्रामवासित्वेन निषेधात् ॥ मत्स्यादा नक्रादयः । मत्स्याः सर्व्वशोऽपि निषिद्धाः 'मत्स्यादः सर्व्वमांसाद' इति वचनम् निषिद्धमत्स्यपरं वेद्यम् ॥ भक्ष्यपक्षिण आह शंखः । 'तित्तिरिं च मयूरं च लावकं च कपिञ्जलम् । वा-

र्ध्रीणसं वर्त्तकं च भक्ष्यानाह प्रजापतिः ॥ कपिञ्जलः कृष्णतित्तिरिः। वार्ध्रीणसः कृष्णग्रीवो रक्तशिराः श्वेतपक्षोविहंगमः ॥ मयूरस्तृणमयूरः ॥ 'आजं गव्यं च यन्मांसं मायूरं च विवर्ज्जयेत्। यथैवाजं तथा गव्यं मायूरमुभयोः समम्' इति ब्राह्मात् ॥ देवलः। 'अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुंजराः। सिंहव्याघ्रर्क्षशरभाः सर्प्पाजगरजालकाः। आखुमुषिकमार्ज्जारनकुलग्रामसूकराः ॥ श्वशृगालवृकद्वीपिगोलांगूलनृमर्क्कटाः' ॥ आखुमूषिकयोर्जाया भेदः कल्पनीयः। वसिष्ठः 'खड्गे तु विवदन्ते ऽग्राम्यसूकरे च'। ब्राह्मे। 'पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा' ॥ अत्र गर्भशय्यापदेन गर्भिणीनां मृग्यादीनामभक्ष्यत्वं प्राप्तम्। मनुः। जलेचरानेकचरानज्ञातांश्च मृगाद्द्विजान्। अभक्ष्येषु समुद्दिष्टान्सर्वान्पञ्चनखांस्तथा ॥ पञ्चनखानां प्रतिप्रसवमाहापस्तम्बः। 'पञ्चनखानामभक्ष्यत्वं गोधाकच्छपश्वाविच्छल्लकखड्गशशपूतिखड्गवर्ज्जम्'। श्वावित्सेधा। शल्लकः सेधावान्तरजातिविशेषः। पूतिखड्गः खड्गावान्तरजातिविशेषः ॥ याज्ञवल्क्यः। 'भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्यकाः। शशाश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः। तथा पाठीनराजीवाः सशल्काश्च द्विजातिभिः'। अत्र गोधा[1] कृकलासानुकारिणी महतीति विज्ञानेश्वरः। तन्न। तस्या अतृणहारिस्थलचरत्त्वेनाभक्ष्यत्वात्। विज्ञानेश्वरस्तु दाक्षिणात्यः संन्यासी मत्स्यमांसानाहारी तदनभिज्ञो नास्मिन्व्याख्याने प्रामाणिकोऽप्यादरणीयः ॥ किन्तु गोधा शशकाकारः पञ्चनखो मृगविशेषः सरयूपारादौ प्रसिद्धो बोद्धव्यः। मनुः ॥ 'श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशांस्तथा ॥ भक्ष्यान्पञ्चनखान्प्राहुरनुष्ट्रांश्चैकतोदतः' ॥ मनुयमौ 'यो यस्य

१ गोहटी इति प्रसिद्धा।

मांसमश्नाति स तन्मांसाद उच्यते। मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यं विवर्ज्जयेत् ॥ यमः ॥ 'मत्स्यानशल्कान्वेदाध्यायी विवर्ज्जयेत। वेदाध्यायी त्रैवर्णिकः। अशल्कानित्युक्ते सशल्का भक्ष्याः ॥ आपस्तम्बः। 'अभक्ष्या मकरसरीसृपमद्गुरमयूरवार्म्मिकनक्रकर्कटाशिशुमारोभयकास्याः'। सरीसृपो जलौकाः। मद्गुरोजलकाकः। मयूरोऽत्र जलचरो मयूराकृतिः। वर्म्मिकः सर्पसदृशो मत्स्यः। उभयकास्या द्विमुखाः। देवलः 'शम्बूको नखशुक्तिश्च शिशुमारः प्लवङ्गमः। मत्स्याश्च विकृताकारा नैव भक्ष्या जलौकसाम्' ॥ जलौकसां मध्ये एते न भक्ष्याः ॥ मनुः। 'पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः। राजीवसिंहतुण्डाश्च सशल्काश्चैव सर्वशः'। नियुक्तौ श्राद्धाद्यर्थे आद्यौ अदनीयौ। राजीवः पद्मवर्णः। सिंहतुण्डाः सिंहमुखाः। मत्स्यं वर्ज्जयेदिति बौधायनोक्तो निषेधः कामपरः। 'मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेदिति निष्कृतिश्रवणात् ॥ नच वाच्यम्, तस्य वृथामांसत्वेनैव निषेधसिद्धिरिति। त्रिरुपवासरूपप्रायश्चित्तविशेषबोधनाय पृथङ्निषेधात् ॥

अथ मांसस्यभक्षणवर्ज्जनविचारः। मनुः। 'प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया। यथाविधि नियुक्तश्च प्राणानामेव चात्यये' ॥ याज्ञवल्क्यः। 'प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया। देवान्पितॄंश्चार्च्चयित्वा खादन्मांसं न दोषभाक्'। अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणं विना यदा प्राणबाधा भवति तदा निमयेन मांसम्भक्षयेत्। सर्वत एवात्मानं गोपायेदित्यात्मरक्षणविधानात्। तस्मादिह न पुरायुषः स्वःकामी प्रेयादिति मरणनिषेधाच्च। श्राद्धे निमन्त्रितो नियमेन भक्षयेत्। यदाह यमः। 'दैवे नियुक्तः श्राद्धे च नियमेपि न वर्ज्जयेत्'। नियमे नाहं

मांसं भोक्ष्ये इति सङ्कल्पे । मनुः । 'यथाविधि नियुक्तस्तु यो-मांसं नात्ति मानवः । स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्' । यमः । 'आमन्त्रितस्तु यश्श्राद्धे दैवे वा मांसमुत्सृजेत् । यावन्ति पशुरोमाणि तावन्नरकमृच्छति' । प्रोक्षितं प्रोक्षणाख्यश्रौतमन्त्रसंस्कृतस्य पशोर्मांसं भक्षयेत् । अभक्षणे यागानिष्पत्तेरिति मिताक्षरा । तन्न । आघ्राणेनापि नियमवतो यागनिष्पत्तेः 'भक्षयेत् आघ्रापयेद्वेति श्रुतेरिति तत्वम् । द्विजकाम्यया त्वं मद्गृहे मांसं भक्षयेतिब्राह्मणप्रार्थनया । उपलक्षणं चैतत् । तथा मनुः । 'यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानां चैव वृत्त्यर्थमगस्त्योह्याचरत्पुरेति । क्षत्रियानधिकृत्य महाभारते । 'क्षत्रियाणां हि यो दृष्टो विधिस्तमपि मे शृणु । वीर्य्येणोपार्ज्जितं मांसं तथा खादन्न दुष्यति । आरण्याः सर्व्वदैवत्याः प्रोक्षिताः सर्व्वशो मृगाः । अगस्त्येन पुरा राजन् मृगयात्तश्च गृह्यते । अतो राजर्षयः सर्व्वे मृगयां यान्ति भारत । लिप्यन्ते न च दोषेण नचैतत्पातकं विदुः' । निगमः । 'अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्ज्जयेत्' । एतद्ब्राह्मणकर्त्तृकश्राद्धपरम् । 'मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः । मधु प्रधानं शूद्रस्य' इति श्राद्धप्रकरणीयपुलस्त्यवचनात् । मनुविष्णू । 'नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः । योऽद्यादविधिना मांसं प्रेत्य तैरद्यतेऽवशः । मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । इति मांसस्य मांसत्वं प्रवदन्ति मनीषिणः । स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति । अनभ्यर्च्चर्य पितॄन्देवान्न ततोन्योऽस्त्यपुण्यकृत्' । हारीतः । 'भक्षयित्वा तु यो मांसमद्भिः शौचं समाचरेत् । हसन्ति देवतास्तस्य ह्यशुचेः शुचिदर्शिनः' । मनुः । 'अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्त्ता च खादकश्चाष्ट

घातकाः ’। घातका हननपापभागिनः । अनुमन्ता स्वीकर्त्ता । विशसिता अङ्गानां पृथक्कर्त्ता । निहन्ता प्राणवियोगानुकूलव्यापारवान् । संस्कर्त्ता पाचकः । उपहर्त्ता परिवेषकः । मनुः । ‘वसेत्स नरके घोरे दिनानि पशुरोमभिः । संमितानि दुराचारो यो हन्त्यविधिना पशून्’ । मांसत्यागमाह याज्ञवल्क्यः । ‘सर्वान्कामानवाप्नोति हयमेधफलं तथा । गृहे हि निवसन्विप्रो मुनिर्मांसस्य वर्ज्जनात्’ ॥ महाभारते । ‘मासि मास्यश्वमेधेन यो यजेत शतं समाः । न खादति च यो मांसं सममेतद्युधिष्ठिर’ । अत्र विज्ञानेश्वरः । प्रोक्षितादिव्यतिरेकेण मया मांसं न भक्षितव्यमिति संकल्पं मन्यते । तन्न, कृतसंकल्पस्याघ्राणेनापि यागनिष्पत्तेरित्युक्तम् । अन्यथा प्राणात्ययव्यतिरेकेणेत्यादिविशेषणप्रक्षेपे संकल्पवाक्यस्योत्तरोत्तरं संकोचकल्पनापत्तेः । मांसस्य वर्जनादित्यसङ्कोचेन त्यागस्मरणादिति ॥

अथ भोज्याभोज्यान्नविचारः ॥ याज्ञवल्क्यः । ‘परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते’ ॥ यमजमदग्निपैठीनसयः ‘ब्राह्मणस्य सदाश्नीयात् क्षत्रियस्य तु पर्वसु । प्रकृतेषु च वैश्यस्य शूद्रस्य न कदाचन’ । प्रकृतेषु प्रक्रान्तेषूत्सवेषु । ब्राह्मे । ‘राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवां । गोरत्नभूमिहेमार्थं सच्छूद्रस्य गृहे तथा । नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः । आददीताममेवास्मादवृत्तावेकरात्रिकम्’ ॥ अश्राद्धिनो नित्यश्राद्धरहितस्य । वसिष्ठः । ‘शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते नरः । जुहुयाद्वा जपेद्वापि गतिमिष्टां न विन्दति । शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा नच स्वर्गार्हको भवेत् । अत्र शूद्रान्नमसंकल्पितं । शूद्रान्नं संकल्पितं चेत् तदा तस्य शूद्रान्नत्वाभाव इतिध्येयम् ॥ भविष्ये । ‘उपक्षेपेण धर्म्मेण शूद्रान्नं

यः पचेद्द्विजः । अभोज्यं तद्भवेदन्नमिति शातातपोऽब्रवीत् ॥ अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमंत्रितम्' । उपक्षेपोनाम शूद्रेण धर्म्मार्थं ब्राह्मणायान्नसमर्प्पणम् ॥ बौधायनः । 'यथा यतस्ततोऽप्याप: शुद्धिं यांति महींगताः । शूद्राद् विप्रगृहेष्वन्नं प्रविष्टं च तथाशुचि । एतत्प्रतिग्रहेण यल्लब्धं तत्परं तत्र शूद्रसत्वनिवृत्तेः। प्रतिप्रसवमाह याज्ञवल्क्यः । 'शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्' ॥ दासा गर्भदासादयः । गोपालो गोपालनवृत्तिः । कुलमित्रं पितृपितामहादिमित्रपितृपितामहादिकम् । अर्द्धसीरी संभूयकर्षकः ॥ यश्च तवाहमिति भक्त्यात्मनिवेदकः । चकारात्कुम्भकारः । गोपनापितकुम्भकारेस्वादिवचनात् ॥ याज्ञवल्क्यः । 'कदर्य्यबद्धचौराणां क्लीबरङ्गावतारिणाम् । वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणां । चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् । क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् । शस्त्रविक्रयकर्म्मारतुन्नवायश्ववृत्तिनाम् । नृशंसराजरजककृतघ्नबधजीविनाम् । चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥ पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् । एषामन्नं न भोक्तव्यं सोमविक्रायिणस्तथा' । सर्वे चैते कदर्य्यादयो द्विजा एव कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः । इतरेषां प्राप्त्यभावादिति मिताक्षरा । 'गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव

शूद्रान्ने- च । अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् ॥ कन्दुपक्कं स्ने-
विशेषः । हपक्कं पायसं दधिसक्तवः । एतान्यपि हि शूद्रस्य भोज्यानि मनुरब्रवीत्' ॥ कन्दुपक्कं भ्राष्ट्रभर्ज्जितम् । पायसमामिक्षादि । पराशरः । 'तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः । द्विजाग्रकरसंस्पृष्टं सर्वन्तद्धविरुच्यते' । एतद्दीनब्राह्मणवि-

षयम् । यदाह याज्ञवल्क्यः । 'आपद्गतः संप्रगृह्णन् भुञ्जानोपि यतस्ततः । नैनसा लिप्यते विप्रो ज्वलनार्कसमोहि सः' । यमः । 'अधीत्य चतुरो वेदान्सांगोपाङ्गान्विशेषतः । नरेन्द्रस्य गृहे भुक्त्वा कृमियोनौ प्रजायते ॥ अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्म्मतेः । अन्नमश्रद्दधानस्य भुञ्जानो भ्रूणहा भवेत् । स्वसुतान्नं च यो भुंक्ते स भुङ्क्ते पृथिवीमलम्' ॥ स्वसुताया अर्थात्परिणीताया अन्नं ॥ आदित्यपुराणे । 'विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत् । अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥ ब्रह्मदेयान्न वै कन्यां दत्त्वा भुञ्जीत कर्हि चित् । अथ भुञ्जीत मोहाद् यः स पूयनरकं व्रजेत् ॥ ब्रह्मदेयां ब्राह्मणे न विवाहेन दत्ताम् ।

अथ भोजनोत्तरकृत्यम् ॥ दक्षः ॥ 'भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् । इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत्' ॥ षष्ठसप्तमकौ दिवसांशौ । याज्ञवल्क्यः । 'अहःशेषं समासीत शिष्टैरिष्टैश्च बंधुभिः । उपास्य पश्चिमां संध्यां हुत्वाग्नींस्तानुपास्यह ॥ भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥ व्यासः ॥ 'मङ्गल्यं पूर्णकुंभं च शिरस्थाने निधाय च । वैदिकैर्गारुडैर्म्मन्त्रै रक्षां कृत्वा स्वपेत्ततः' । विष्णुपुराणे 'गच्छेच्छय्यामस्फुटितामेकदारुमयीं नृप । प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप । सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ मार्कण्डेयः ॥ 'शून्यालये श्मशाने च एकवृक्षे चतुष्पथे । महादेवगृहे वापि मातृवेश्मनि न स्वपेत् ॥ प्रचेताः । 'न सन्ध्यायां स्वपेत् न देवतासमीपे न वेदासमाप्तौ नाशुर्न नग्नो न विशीर्णखट्वायां न भूतयक्षगृहायतनेषु न श्मशानवल्मीकमहावृक्षच्छायासु चेत् । विष्णुः । 'नार्द्रपादः स्वपेन्न पलाशशयने न पञ्चदारुकृते न गजभग्नकृते न विद्युद्दग्धकृते नाग्निप्लुष्टे न परसिक्तद्रुमजे नारिमध्ये न धा-

ध्यगोगुडहुताशनगुरूणामुपरि नोच्छिष्टे दिवेति॥ वैष्णवे ॥'सका-
मःसानुरागश्च व्यवायं पुरुषो व्रजेत्॥यमः।'ऋतुस्तु षोडशाहानि
ऋतुगमन- रजन्यष्टौ च निन्दिताः।तासामाद्याश्चतस्रश्च सप्तम्येकादशी
विचारः। तथा।त्रयोदशी च नवमी प्रशस्ता अष्टरात्रयः।युग्मासु पुत्रा
जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। रजोऽधिकं स्त्रीजनकं पुमान्
शुक्रेऽधिको भवेत् ।उभयोः समतायां तु नपुंसकसमुद्भवः॥
भिन्ने वीर्य्ये युग्ममिति गर्भोपनिषदीरिता' ॥ अत्रेति ध्येयम्।
शुक्राधिक्यादेरेव पुत्राद्युत्पत्तिनियामकत्वं न युग्मरात्र्यादिगम-
नादेः। इयान्परं विशेषः । अयुग्मनिशाधाने पुत्रस्य मात्राकृति-
त्वं युग्मनिशाधाने कन्यायाः पुत्राकृतित्वमिति । बृहस्पतिः।
'ऋतुकालाभिगमनं कुर्य्यात्पर्वणि वर्ज्जयेत्'। याज्ञवल्क्यः। 'एवं
गच्छन्स्त्रियं क्षामां मघां मूलं विवर्ज्जयेत् । सुस्थइन्दौ सकृत्पुत्रं
लक्षण्यं जनयेत्पुमान्' । सकृत् एकरात्रावेकवारम्। देवलः।
'यः स्वभार्य्यामृतुस्नातां सुस्थः सन्नोपसर्प्पति । भ्रूणहत्या-
मवाप्नोति गर्भं प्राप्य विनाश्य च । ऋतौ नोपैति यो भार्य्याम-
नृतौ यश्च गच्छति। तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिंचति' ॥
अनृतुनिषेधोऽयमकामाविषयः। ' यथाकामी भवेद्वापि स्त्रीणां व-
रमनुस्मरन्। स्वदारनिरतश्चैव स्त्रियो रक्ष्याः यतः स्मृताः'। व-
रमिन्द्रदत्तं स्वपत्यौ इच्छारतिरूपम्। 'चतुर्थेऽहनि यत्प्राप्तं गमनं
देवलादिभिः । रजोनिवृत्तौ तत्कार्य्यं सोऽल्पायुरधनःस्मृतः' ॥
विष्णुः॥ 'निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत्। पर्य्यंकात्प्रम-
दां नित्यं तथा पुष्पाणि मस्तकाद्' इति संक्षेपः ॥

अथ स्मृतिपरिभाषाः॥ तत्र विष्णुः॥'स्नातोऽधिकारी भवति
दैवे पित्र्ये च कर्म्मणि।पवित्राणां तथा जप्ये दाने च विधिदेशि-
ते' ॥ पवित्राणां मन्त्राणां जप्ये वाचिके। 'न दोषो मानसे जप्ये

सर्वदेशे ऽपि सर्वदा' इति वचनात्। आग्नेये। 'स्नानानामपि सर्वेषां वारुणेनैव मानवः । कर्त्तुमर्हति कर्माणि विधिवत्सर्वदा द्विजः'। जाबालिः। 'असामर्थ्याच्छरीरस्य देशकालाद्यपेक्षया। मन्त्रस्नानादिकान्सप्त केचिदिच्छन्ति सूरयः'। योगियाज्ञवल्क्यः। 'मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसं चैव सप्तस्नानान्यनुक्रमात्। आपोहिष्ठादिभिर्मान्त्रं मृदालम्भेन पार्थिवम्। आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्। यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते। वारुणं चावगाह्याम्बु मानसं विष्णुचिन्तनम्। कालदेशाद्यसामर्थ्यात्सर्वं तुल्यफलं स्मृतम्'॥ जाबालिः। 'अशिरस्कं भवेत्स्नानं स्नानाशक्तौ च कर्मिणाम्। आर्द्रेण वाससा वापि मार्ज्जनन्दैहिकं विदुः'। शक्ताशक्तसाधारणं गोशृङ्गजलस्नानमिति केचित्। 'स्वास्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिधरं स्मरेत्। अनन्तादिससङ्काशं वासुदेवं चतुर्भुजम्। शङ्खचक्रगदापद्ममुकुटं वनमालिनम्। तत्पादोदकजां धारां निपतन्तीं स्वमूर्द्धनि॥ चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम्। तया सङ्क्षालयेत्सर्वमन्तर्देहगतं मलम्'॥ इत्यान्तरं स्नानं साधारणम्॥

स्नान-भेदाः

मनुः। 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तयेत्। न साम्परायिकं तस्य दुर्मतेर्जायते फलम्'॥ मार्क्कण्डेये। 'सूर्य्योदयं विनानैव स्नानदानादिकाः क्रियाः। अग्नेर्विहरणं चैव नक्तत्वादि प्रवर्त्तते'॥ अत्र सूर्य्योदयकालेनोषःकालो लक्ष्यते। यदाह विष्णुः। 'प्रातस्नायादरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति। अत्रास्मत्पितामहचरणाः श्रीनीलकण्ठदीक्षितास्तु—अत्र अरुणोदयपदेन सूर्योदय एवेति ? न काप्यनुपपत्तिरिति प्राहुः। व्यासः। 'रात्रौ

---

१ कालदोषादसामर्थ्यादिति पाठान्तरम्।

२ साम्परायिकं पारलौकिकम्।

स्नानं न कुर्वीत दानं चैव विशेषतः। नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु। ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च। न नैमित्तिकं प्रोक्तं रात्रावपि न दुष्यति। दक्षः। 'देवकार्य्याणि पूर्वाह्ने मनुष्याणां च मध्यमे। पितॄणामपराह्ने तु कार्य्याणीति विनिश्चयः। छन्दोगपरिशिष्टे॥ 'यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न चोच्यते। दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः। यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु। तिस्रस्तत्र दिशोज्ञेया ऐन्द्री सौम्यापराजिता'। अपराजिता ऐशानी। 'आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता'। तथा 'क्रिया च त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिभिः। स्वक्रिया च परोक्ता च तृतीया चायथाक्रिया'। स्वक्रिया स्वशाखोक्तकरणम्। परोक्ता परशाखोक्ता। अयथाक्रिया विहितेतरप्रकारेणानुष्ठानम्। तत्र परोक्तायां दोषमाह॥ 'स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यः। कर्त्तुमर्हति दुर्म्मेधा मोघं तत्तस्य यत्कृतम्'॥ इदं तु निराकाङ्क्षस्वशाखोक्तविषयम्। 'स्मृतिशास्त्रविकल्पस्तु आकाङ्क्षापूरणे सति' इति वचनात्॥ अत एवोक्तम्। 'यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्'॥ यथाग्निहोत्रं यजुर्वेदोक्तं छन्दोगादिभिर्विधीयते। यथा वा मात्रादितर्प्पणं कात्यायनोक्तं गोभिलोक्त माध्यन्दिनैः क्रियते। अस्यापवादमाह। 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्। प्रवृत्तमन्यथाकुर्याद्यदिमोहात्कथञ्चन। यतस्तदन्यथाभूतं तत एव समापयेत्। समाप्तौ यदि जानीयान्मयैतदयथाकृतम्। तावदेव पुनः कुर्य्यान्नावृत्तिः सर्वक-

क्रियायां विशेषः

1 'अक्रिया त्रिविधा' इति पाठः, अक्रिया च परोक्ता चेत्युत्तरार्द्धे पाठश्च ग्रन्थान्तरे।

र्मणः'॥ एतदुभयमन्यथाकरणविषयम् ॥ 'प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः। तदङ्गस्याक्रियायां तु नावृत्तिर्नापि तत्क्रिया॥ तथा
क्रियायास 'पित्र्यमन्त्रानुद्रवणे आत्मालम्भेऽप्यवेक्षणे। अधोवायुसमुत्सर्गे
पस्पर्शनि प्रहासेऽनृतभाषणे। मार्ज्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे।
मित्तानि। निमित्तेषु च सर्वेषु कर्म कुर्वन्नपः स्पृशेत्'। अनुद्रवणे उच्चारणे। आत्मालम्भे आत्माधिष्ठानहृदयस्पर्शे। अवेक्षणे हृदयस्यैव। अधमेक्षण इतिकेचित्। एते च स्पर्शावेक्षणे यज्ञादौ निषिद्धे। आक्रुष्टे परुषभाषणे। अपः स्पृशेदित्याचमनाभिप्रायकमिति केचित्। तन्न मानाभावात्। योगियाज्ञवल्क्योऽपि 'रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाभिचारिकान्। व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत्'। तथा। 'स्त्रीशूद्रपतितांश्चैव चाण्डालं च रजस्वलाम्। जपकाले न भाषेत स्नानहोमादिकेषु च। तूष्णीमासीत्तु जपंश्चाण्डालपतितादिकान्। दृष्ट्वा तान्वार्य्युपस्पृश्य स्नात्वाभाष्य पुनर्जपेत्'। दृष्ट्वा वार्य्युपस्पृश्य तानाभाष्य स्नात्वेत्यन्वयः। 'मार्ज्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं खरं कपिम्। दृष्ट्वाचम्य चरेत्कर्म्म स्पृष्ट्वा स्नानं विधीयते॥ विधिदृष्टं तु यत् कर्म्म करोत्यविधिना नरः। फलं न किञ्चिदाप्नोति क्लेशमात्रं तु तस्य तत्॥ श्रद्धाविधिसमायुक्तं कर्म्म यत्क्रियते नृभिः। शुचि शुद्धेन भावेन तदानन्त्याय कल्पते॥ विधिहीनं भावदुष्टं कृतमश्रद्धया च यत्। तद्धरन्त्यसुरास्तस्य मूढस्य त्वकृतात्मनः। यदि वाग्यमलोपः स्याज्जपादिषु कथं च न। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्। अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः। शाट्यायनः। 'दानमाचमनं होमं भोजनन्देवतार्चनम्। प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्प्पणम्। आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको

यस्तु पीढपादः स उच्यते'। कृते अवनते शक्थिनी येन स तथा, जानुभ्यां भुवमवष्टभ्योपवेशने तथात्वं ज्ञेयं। वायवीये 'क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः। भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः'। तथा। 'दानं प्रतिग्रहो होमो भोजनं बलिरेव च। साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत्। एतान्येव च कर्म्माणि दानादीनि विशेषतः। अंतर्जानु विशेषेण तद्वदाचमनं नृप'। अंतर्जानु जानुनोर्म्मध्ये यथाबाहुर्भवति तथा कर्त्तव्यानीत्यर्थः। योगियाज्ञवल्क्यः। 'परिधानाद्बहिःकक्षा निबद्धा ह्यासुरी भवेत्। धर्म्ये कर्म्मणि विद्वद्भिर्वर्ज्जनीया प्रयत्नतः'।

वस्त्रपरिधाने विशेषः।

बहिःकक्षा असंवृतपरिधानवस्त्रान्तः। बौधायनः। 'काषायवासाः कुरुते जपहोमप्रतिग्रहान्। न तद्भवेद् देवगमं हव्यकव्येष्वयं विधिः'। काषायवासाः वृक्षकाथादिरक्तवासाः। व्यासः। 'आर्द्रवासास्तु यः कुर्य्याज्जपं होमं प्रतिग्रहम्। सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम्'। शंखलिखितौ। 'नापसव्यं परिदध्यान्नच विकृतं वासः। बौधायनः 'कर्म्मयुक्तो नरो नाभेरधः स्पर्शं विवर्ज्जयेत्। होमदेवार्च्चनाद्यासु क्रियास्वाचमने तथा। नैकवस्त्रः प्रवर्त्तेत द्विजोवाचनिके जपे॥ आपस्तंबः। 'नित्यमुत्तरीयं वासोधार्य्यमथवा सूत्रमेवोत्तरीयार्थे। योगियाज्ञवल्क्यः। 'यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्ते च कर्म्मणि। तृतीयमुत्तरीयं स्याद्वस्त्राभावे तदिष्यते'। उत्तरीयवस्त्राभावे परिहितवस्त्रस्यैवोत्तरार्द्धेनोत्तरीयं कुर्य्यात्। तदाहपारस्करः॥ एकं चेद्वासो भवति तस्योत्तरवर्गेण प्रच्छादयीत। यत्तु 'नोत्तरीयैकदेशेन कल्पयित्वोत्तरीयकमिति निषेधवचनं तदनापद्विषयम्। द्विवस्त्रत्वेप्येकवस्त्रत्वमाह शातातपः। 'सव्यादंसात्परिभ्रष्टं कटिदेशे धृताम्बरम्। एकवस्त्रं विजानीयाद्दैवे पित्र्ये च कर्म्मणि'। वसिष्ठः। 'जपहोमोपवासेषु धौतवस्त्रधरो-

भवेत्। अलङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः'। कात्यायनः। 'सदोपवीतिना भाव्यं सदाबद्धशिखेन च। विशिखो व्युपवीतश्च यत्करोति न तत् कृतम्'॥ सदेत्यनेन शिखाबंधनोपवीतधारणयोः पुरुषार्थतया सदाधारणात्कर्म्मकालेपि धारणप्राप्तिः, तत्किं कर्म्माङ्गतया नास्त्येवेत्यत उक्तं विशिख इति। विगुणत्वेन फलासाधकमित्यर्थः। योगियाज्ञवल्क्यः। 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः। अविदित्वा च यः कुर्य्याद्याजनाध्यापनं जपम्। होममन्तर्जलादीनि तस्य चाल्पफलं भवेत्। यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्। विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्म्म च। एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत्। देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः'। अन्तर्जलादीनि अघमर्षणादीनि। अङ्गिराः। 'सन्ध्ययोरुभयोर्जप्ये भोजने दन्तधावने। पितृकार्य्येषु दैवेषु तथा मूत्रपुरीषयोः। गुरूणां सन्निधौ दाने जप्ये चैव विशेषतः। एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः। विना दर्भैश्च यत्स्नानं यच्च दानं विनोदकैः। असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत्'॥ शिवपुराणे। 'अङ्गुल्या जपसंख्यानमेकमेव उदाहृतम्। रेखयाष्टगुणं विद्यात्पुत्रजीवैर्दशाधिकम्॥ शतं स्याच्छंखमालाभिः प्रबालैस्तु सहस्रकम्। स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते। कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत्॥ तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका। सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदा॥ अनुलोमविलोमस्थैर्बिन्दुयुन्मातृकाक्षरैः। क्षमेरुकैः साष्टवर्गैर्माला स्याद्योगिनां शुभा। सूर्य्यस्याग्नेर्गुरोरिन्द्वार्दीपस्य च जलस्य च। विप्राणां च गवां चैव संनिधौ संमुखोजपेत्। मनःसंहरणं शौचं मौनं मन्त्रार्थचि-

न्तनम्। अव्यग्रत्वमनिर्वेदो जपसंस्मृतिहेतवः॥ उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः। अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचित्॥ अप्रावृतौ करौ कृत्वा शिरसा प्रावृतोपि वा। चिन्ताव्याकुलचित्तो वा क्रुद्धः शान्तः क्षुधान्वितः। अनासनः शयानो वा गच्छन्नुत्थित एव वा। रथ्यायामशिवस्थाने न जपेत्तिमिरान्तरे॥ उपानद्गूढपादो वा यानं शय्यां गतस्तथा॥ प्रसार्य न जपेत्पादौ कुक्कुटासन एव च। अशुचिर्वाशुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि॥ मन्त्रैकशरणो विद्वान्मनसैव समभ्यसेत्॥ गृहे जपः समः प्रोक्तो गोष्ठे शतगुणस्तथा। आरामे च तथारण्ये सहस्रगुण उच्यते॥ अयुतं पर्वते पुण्ये नद्यां दशगुणं तु यत्। कोटिं देवालये प्राहुरनन्तं शिवसंनिधौ'। इमान्यागमोक्तवाक्यानि प्रसङ्गाद्दर्शितानि॥ मनुः॥

ब्राह्मादितीर्थनिर्णयः 'ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन'॥ उत्तरार्द्धस्य निषेधेनान्वयः। ब्राह्ममङ्गुष्ठमूलं, कायं प्राजापत्यम् कनिष्ठामूलं। त्रैदशिकम् दैवतं चाङ्गुल्यग्रं, पित्र्यं तर्ज्जनीमूलम्॥ हारीतः। 'मार्ज्जनार्च्चनबलिकर्मभोजनादि दैवेन कुर्य्यात् पित्रर्थान् पित्र्येण, प्रतिग्रहमाग्नेयेन'। आग्नेयं हस्तमध्यम्। भविष्ये॥ 'कमण्डलूपस्पर्शनं दधिप्राशनमेव च। सोमतीर्थेन राजेन्द्र सदा कुर्य्याद्विचक्षणः॥ सोमतीर्थं पाणिमध्यं 'मध्ये सौम्यं प्रतिष्ठितमिति'योगियाज्ञवल्क्यस्मरणात्। मार्क्कण्डेये। 'नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम्। प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजापतेः'। ओङ्कारपूर्विकाः क्रियाः प्रोक्ता महाभारते। 'तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्। यमः। 'पुण्याहवाचनं दैवे विप्रस्यौङ्कारपूर्वकम्। एतदेव निरोङ्कारं कुर्य्यात् क्षत्रियवैश्ययोः'। योगियाज्ञवल्क्यः। 'न कुर्य्यात्क-

स्यचित्पीडां कर्मणा मनसा गिरा। आचरन्नभिषेकं च कर्माण्यन्यानि वा चरन्। व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत्। फलमूले च वा क्षीरं यज्ञशिष्टं च वा हविः। व्रतमध्ये च रोगार्त्ते वैद्यप्रोक्तमथौषधम्। करोति च गुरोर्वाक्यं व्रतस्थस्तत्क्षणादपि। ब्राह्मणस्याभिलषितं साधयेदविचारयन्। एतान्यष्टौ व्रतस्थानां न व्रतघ्नानि कुत्रचित्। देवलः 'सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम्। अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः। तथा। 'उपवासो विनश्येत दिवास्वापाच्च मैथुनैः। अत्यये चाम्बुपानेन नोपवासः प्रणश्यति। मात्स्ये 'तस्मात् कृतोपवासेन स्नानमभ्यङ्गपूर्वकम्। वर्ज्जनीयं प्रयत्नेन रूपघ्नं तत्परं स्मृतम्। वृद्धशातातपः। 'उपवासं ततः कुर्य्यात्ततो ब्राह्मणभोजनम्। कुर्य्यात्तेनास्य सगुण उपवासो हि जायते'। सर्वभोगविवर्जित उपवासः प्रोक्तस्तत्र भोगविशेषाननुजानाति शातातपः। 'गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्। उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्'। ननूपवासदिने श्राद्धे न खादेद्दन्तधावनमिति वसिष्ठवाक्येन विरोध इति चेन्न। काष्ठसंयोगस्य निषिद्धत्वात्पर्णादिनाभ्यनुज्ञानात्। शातातपवचनं स्त्रीपरमित्यन्ये॥

अथ कुशप्रकरणम्। छन्दोगपरिशिष्टे। 'हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः। समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः। ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु बर्हिषः। दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि। सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः'। कल्माषाश्चित्रवर्णाभा इतिकेचित्। ह्रस्वा गोकर्णपरिमाणाः। 'गोकर्णदीर्घा हरिताः श्राद्धे साग्राः समूलका' इति वाय-

---

१ 'यतः प्रचरणादौ ह्रस्वादिविशेषविधिरतः सन्ध्यादौ तादृशविशेषाभावाद्दर्भमात्रमेवाङ्गम्' इत्याचारादर्शः।

वीयात् ॥ 'अनंतर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र चित् ॥ पवित्रस्य तु नाशौचमाचान्ते तु कदाचन' । द्विदलमितिवचनान्नैकदलभंगे पवित्रता । देवीपुराणे । 'कुशौ समावशीर्णाग्रावनन्तर्ग्गर्भिणौ तथा । कुशोश्छिनत्ति यन्मौनी पवित्रकरणं हि तत् ॥ एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम् । आज्यस्योत्पवनार्थं हि तदप्येतावदेवतु ॥ तथा 'एतत्प्रमाणामेवैके कौशीमेवार्द्रमंजरीम् । शुष्कां वा शीर्णकुसुमां पिञ्जूलिं परिचक्षते ॥ तथा ॥ 'दर्भाः कृष्णाजिनं मंत्रब्राह्मणाहविरग्नयः । अयातयामान्येतानि नियोज्यानि पुनः पुनः' । यातयामं जीर्णम् अयातयामं नवम् । मरीचिः 'मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः। अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः' ॥ पूर्व्ववचनेपि दर्भपदमेतद्दर्भपरं एकमूलकत्वकल्पनायां लाघवात् ॥ मासपदं शुक्लादिमासपरं 'मासस्तु तावुभाविति वचनात् । लघुहारीतः। 'पथिदर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु। स्तरणासनपिण्डेषु षट्कुशान्परिवर्ज्जयेत् । पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्प्पणम् । मूत्रोच्छिष्टैर्धृता ये च तेषान्त्यागो विधीयते । नीवीमध्ये च ये दर्भा यज्ञसूत्रधृताश्च ये । पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः । आचम्य प्रयतोनित्यं पवित्रेण द्विजोत्तमः। नोच्छिष्टस्तु भवेत्तत्र भुक्तशेषं विवर्जयेत् । जपे होमे तथा दाने स्वाध्याये पितृतर्प्पणे ।

पाणौपवित्रनिर्णयः।

अशून्यन्तु करं कुर्य्यात्सुवर्णरजतैः कुशैः' । अशून्यं सामान्याभावराहितम् । सुवर्णरजतैरिति जातिबोधनाय बहुवचनम् । सुवर्णादिजातीयेनेत्यर्थः । मैथिलास्तु सुवर्णरजतैरिति बहुवचनमेकसुवर्णत्त्वादिजातेरवयवावयविद्वर्णाद्यवयवाविधारणेऽप्युपपद्यते । सुवर्णत्त्वादिजातेरवयवावयविद्वर्णाद्यवयवाविधारणेऽप्युपपद्यते । कुशैरिति त्रित्वपरं कपिंजलन्यायात् । अत्रित्त्वादित्याहुः ॥ कुशैरिति त्रित्वपरं कपिंजलन्यायात् । अ- तएव परिशिष्टोक्तोविभागः संगच्छते । 'द्वौ दर्भौ दक्षिणे हस्ते सव्ये

त्रीण्यासने सकृत्' । सकृत् एकवारं । तथा 'सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रक' इति । योगियाज्ञवल्क्यः ॥ 'अनामिकाधृतं हेम तर्जन्यां रजतं तथा । कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः । सत्यव्रतः । 'खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम् । मणिकाञ्चनदर्भैर्वा न शुद्धेन कदाचन' इति । अत्र वा शब्दान्न समुच्चयः । मरीचिः । 'तिलानामप्यभावे तु सुवर्णरजतान्वितम् । तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः । छन्दोगपरिशिष्टे । 'सर्वत्र दर्भपाणिः स्याद्दैवे पित्र्ये च कर्म्मणि । तिलकं पादशौचं च न कुर्याद् दर्भपाणिना । तत्रैव 'व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त विपदोघ्नन्ति धारिताः । यवगोधूमधान्यानि तिलाः कंगूस्तथैव च । श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् । मानाक्रियायामुक्तायामनुक्ते मानकर्त्तरि । मानकृद्यजमानस्तु विदुषामेष निश्चयः । अङ्गुष्ठांगुलिमानं तु यत्र यत्रोपदिश्यते । तत्र तत्र वृहत्पर्वग्रंथिभिर्मितुयात्सदा । नन्दीपुराणे । 'प्रमादतस्तु तन्नष्टं तावन्मात्रं प्रदीयते । अन्यथा स्तेयदोषः स्याद्धेम्न्यदत्ते विनाशिनि' । एतदुत्सृष्टसुवर्णपरम् । अन्यथान्यथेत्युक्ते चतुर्थचरणेन पौनरुक्त्यं स्यादिति । तस्मादद्त्ते उत्सृष्टमित्यर्थः । गन्धशास्त्रे 'कस्तूरिकाया द्वौ भागौ चत्वारः कुंकुमस्य च । कर्प्पूरस्यैकभागस्तु चन्दनस्य तु षोडश । सर्वगंध इति प्रोक्तः समस्तसुरवल्लभः' । कालिकापुराणे । 'कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्चरत्नानि । छन्दोगपरिशिष्टे । 'यथोक्तवस्त्वलाभे तु ग्राह्यं तदनुकारि यत् । यवानामिव गोधूमा व्रीहिणामिव शालयः । पैठीनसिः । 'काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्यात्' । प्ररोहोऽङ्कुरः । तथा । 'सर्वालाभे यवः प्रतिनिधिर्भवति । मैत्रायणी-

थपरिशिष्टे।'दर्भास्तरणे काशः प्रतिनिधिस्तदलाभे पर्ववतीभिरोषधी-
भिस्तरणार्थान्कुर्वन्ति। आज्यार्थे तैलं प्रतिनिधिस्तदलाभे दधि पयो-
वा तदलाभे श्वेततण्डुलपिष्टानि चाद्भिः संसृष्टानि आज्यार्थे कुर्वन्ति॥
पारस्करः। "अथातो गृह्यस्थालीपाकानां कर्म्म,परिसमुह्योपलिप्योे-
ल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतोब्रह्मासनमास्तीर्य्य
प्रणीय परिस्तीर्य्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थव-
त्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्य्यग्नि कुर्य्यात्। स्रुवं प्रतप्य संमृ-
ज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् आज्यमुद्वास्योत्पूयावेक्ष्य प्रो-
क्षणीश्च पूर्ववदुत्पूयोपयमनकुशानादाय समिधोऽभ्याधाय पर्युक्ष्य
जुहुयादेष एव विधिर्य्यत्रक्वचिद्धोमः"। अस्य भाष्यम्। "अथ श्रौ-
तकर्म्मविधानानन्तरं, अतो हेतोर्यतः श्रौतानि कर्म्माणि विहितानि
स्मार्त्तानि तु विधेयानि। गृह्ये आवसथ्ये अग्नौ ये स्थालीपाका-
स्तेषां कर्म्म अनुष्ठानं व्याख्यास्यत इति शेषः। परिसमुह्य त्रिभि-
र्दर्भैः पांशूनपसार्य्य, उपलिप्य गोमयोदकाभ्यामुपलिप्य, उल्लिख्य
खादिरेण खड्गाकृतिना स्फ्येन प्रागग्रा उदक्संस्थाः स्थण्डिले
प्रादेशपरिमाणास्तिस्रोरेखाः कृत्वा, उद्धृत्य अनामिकाङ्गुष्ठाभ्यां
यथोल्लिखिताभ्योरेखाभ्यः पांशूनुद्धृत्य, अभ्युक्ष्य अद्भिरभिषिच्य।
अग्निमुपसमाधाय— श्रौतं स्मार्त्तं लौकिकं वा अग्निमात्माभिमुखं
स्थापयित्वा। दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रागग्रैः कुशैस्तत्र ब्रह्म-
स्वेन वृतमुपवेश्य। प्रणीय चतुरङ्गुलविस्तारं चतुरङ्गुलखातं पात्रं
सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थजलेन पूरयित्वा पश्चिमास-
नेनिधाय सव्योत्तराभ्यां पाणिभ्यामालभ्य पूर्वासने निदध्यात्।
परिस्तीर्य्य बर्हिर्मुष्टिमादाय प्रागग्रैर्बर्हिभिः कुशैराग्नेयादीशा-
नान्तमग्नेः परिस्तरणं विधाय। अर्थवदासाद्य यावद्भिः पदार्थैरर्थः

१ पर्ववतीभिः काण्डवतीभिः।

प्रयोजनं तावतोऽग्नेरुत्तरत आसाद्य । तद्यथा । पवित्रच्छेदनार्थं दर्भास्त्रयः, पवित्रार्थमनन्तर्गर्भसाग्रकुशपत्रद्वयम्। प्रोक्षणीपात्रं द्वादशाङ्गुलदीर्घं, आज्यस्थाली तैजसी मृन्मयी वा द्वादशाङ्गुलवितता प्रादेशोच्चा । तथा चरुस्थाली संमार्जनार्थं कुशास्त्रयः, समिधः पालाश्यः प्रादेशमात्रास्तिस्रः, स्रुवः खादिरो हस्तमात्राङ्गुष्ठमात्रखातः । आज्यं गव्यम् । चर्वर्थं व्रीहितण्डुलाः षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमिततण्डुलाद्यन्नपूर्णपात्रं दक्षिणाऽवरो वा यथाशक्ति हिरण्यमिति। पवित्रे कृत्वा— त्रिभिः कुशैश्छित्वा प्रादेशमात्रे कुशपवित्रे विधाय। प्रोक्षणीः संस्कृत्य— प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण वामहस्तेन वा प्रणीतोदकमासिच्य द्वाभ्यामनामिकाङ्गुष्ठाभ्यामुदगग्रे पवित्रे गृहीत्वा ताभ्यां प्रोक्षणीजलमुत्पूय पवित्रे प्रोक्षणीपात्रे निधाय दक्षिणहस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणहस्तेनाच्छाद्य, अर्थवत्प्रोक्ष्य—अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीस्थाभिरद्भिरासादनक्रमेणैकैकशः प्रोक्ष्य, निरूप्याज्यमासादितमाज्यमाज्यस्थाल्यां पश्चादग्नेर्निहितायां प्रक्षिप्य चरुस्थाल्यां प्रणीतोदकमासिच्यासादितांस्तण्डुलांस्तत्र प्रक्षिप्य, अधिश्रित्य तत्राज्यं ब्रह्माधिश्रपयति तदुत्तरतः स्वयमेव चरुं युगपदग्नावारोप्य, पर्य्यग्नि कुर्य्यात् ज्वलदुल्मुकं प्रदक्षिणमुभयोः समन्ताद्भ्रामयेत् । तदप्युल्मुकं च वह्नौ प्रक्षिपेत् । स्रुवं प्रतप्य दक्षिणहस्तेन स्रुवमादाय प्रागग्रमधोमुखमग्नौ तापयित्वा, संमृज्य— सव्ये पाणौ कृत्वा दक्षिणहस्तेन संमार्जनकुशत्रयाग्रैर्मूलतोऽग्रपर्य्यन्तं संशोध्य। अभ्युक्ष्य प्रणीतोदकेन स्रुवमभिषिच्य, पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् । आज्यमुद्वास्य चोत्थाप्य चरोः पूर्वेणानीयाग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्याज्यस्योत्तरतः स्थापयित्वाग्नेः पश्चा-

दानीय चरुं चाज्यं चोत्तरतो निधाय उत्पूय उपयमनकुशानादाय दक्षिणपाणिना गृहीत्वा सव्ये निधाय समिधमाधाय उत्तिष्ठन्नग्नौ समिधस्तूष्णीं प्रक्षिप्य पर्य्युक्ष्य प्रोक्षण्युदकेण सव्यप्रदक्षिणं चुलुकं गृहीतेन सपवित्रेणाग्निमीशानादितः परिषिच्य जुहुयात्। आघारादीनीति शेषः। एष एव हि विधिर्यत्र क्वचिद्धोमः। परिसमूहनादिः पर्य्युक्षणपर्य्यन्तो यत्र क्वचिल्लौकिके स्मार्त्ते वाग्नौ होमस्तत्र वेदितव्यः। तथा "अन्वारब्ध आघाराद्वाज्यभागौ महाव्याहृतयः सर्व्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्चैतन्नित्यं सर्व्वत्र" अस्यार्थः— ब्रह्मणा दक्षिणबाहुना दक्षिणबाहावन्वारब्धे होतरि आघारसंज्ञिके आहूती यथा। मनसा ॐप्रजापतये स्वाहा इदं प्रजापतये। ॐइन्द्राय स्वाहा इद मिन्द्राय। आज्यभागौ आज्यभागसंज्ञिकौ होमौ। ॐअग्नये स्वाहा इदमग्नये। ॐसोमाय स्वाहा इदं सोमाय। महाव्याहृतयो भूराद्या स्तिस्रो यथा। ॐभूः स्वाहा इदं भूः, इदमग्नये वा। ॐभुवः स्वाहा इदं भुवः, इदं वायव इति वा। ॐस्वः स्वाहा इदं स्वः, इदं सूर्य्यायेति वा। सर्वप्रायश्चित्तं सर्वप्रायश्चित्तसंज्ञिकाः पञ्चाहुतयः। यथा 'त्वन्नो अग्ने' इति 'सत्वन्नो अग्ने' इति 'अयाश्चाग्ने' इति 'येते शतम्' इति 'उदुत्तमम्' इति एभिः पञ्चभिर्मन्त्रैर्वरुणदेवताकाः पञ्चाहुतयः। प्राजापत्यं प्रजापतिदेवताको होमः। यथा। ॐप्रजापतये स्वाहा इदं प्रजापतये। स्विष्टकृच्च स्विष्टकृद्धोमः। यथा। ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते। एतान्नित्यम्। एतदाघारादि स्विष्टकृदवसानं। सर्वत्र सर्वेषु विहितेषु। स्विष्टकृद्धोमस्य कर्म्मविशेषे स्थानान्तरमाह। "प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः" पूर्वं स्विष्टकृद्धोमो भवति। यद्याज्यादन्यच्चरुप्रभृतिहविर्भवति केवलाज्यं तु सर्वाहुतिशेषे भवतीत्यर्थः। देवीपुराणे। 'होमो ग्रहा-

दिपूजायां शतमष्टाधिकं भवेत् । अष्टाविंशतिरष्टौ वा यथाप्राप्तौ विधीयते'। इयं च होमसंख्या शक्त्यनुसारेण वैकल्पिकी द्रष्टव्या। होमद्रव्या-छन्दोगपरिशिष्टे 'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। मदुक्तौ। न्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः'। अनादेशे अविधाने होमद्रव्यस्येति शेषः । मन्त्रस्य देवतायाश्चानादेश इत्यनुषज्यते । मन्त्रस्यानादेशे प्रजापतिदेवताको ग्राह्यः । महाव्याहृतिमन्त्र एव प्रजापतिरित्युच्यते।देवतायाश्चानादेशे प्रजापतिर्देवतेत्यर्थः। एकेनैव प्रजापतिपदेनोभयोः सङ्ग्रहः। कल्पतरुस्वरसोऽप्येवम् । तथा 'होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः । पाणिनैवेतरस्मिंश्च स्रुचा चात्र न हूयते' । अनादेशे आधारपात्रस्येति शेषः। इतरस्मिन् द्रवद्रव्येतरहोमे। उभयत्राप्यनुपदेशे स्रुचा होमो न कार्य्यः । स्रुवो जुहूरिति समाख्याबलाज्जुह्वा अपि वैकल्पिकहोमकर्म्मसाधनत्वशङ्कानिरासार्थं स्रुचा न हूयत इत्युक्तम् । 'खादिरो वाऽथ पालाशो द्विवितस्तिः स्रुवः स्मृतः । स्रुग्बाहुमात्री विज्ञेया वर्त्तुलः प्रग्रहस्तयोः'। प्रगृह्यते इति प्रग्रहो दण्डः। स च स्रुक्स्रुवोर्वर्त्तुलो ज्ञेयः। 'समिदादिषु होमेषु मन्त्रदैवतवर्ज्जिताः। पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् । नांगुष्ठादधिका ग्राह्या समित्स्थूलतरा क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता । प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका । न सपत्रा न निर्वीर्य्या होमेषु च विजानता' । विशाखिका विविधशाखायुक्ता, निर्वीर्य्या निःसारा । मरीचिः । 'प्रागग्राः समिधो देयाः पुष्ट्यर्थं हि विजानता । शान्त्यर्थेषु सवल्कार्द्रा विपरीता जिघांसता । विशीर्णा विदला ह्रस्वाः वक्राः सशुषिराः कृशाः । दीर्घाः स्थूला घुणैर्युक्ताः कर्म्मसिद्धिविनाशिकाः' । समिदधिकारे ब्राह्मे । 'पलाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः । अश्वत्थोदुम्बरौ बिल्वश्चन्दनः

सरलस्तथा। शालश्च देवदारुश्च खादिरश्चेति यज्ञियाः'। अश्व-त्थन्यग्रोधोऽश्वत्थसंपृक्तो वटः। वैकङ्कतः स्रुवावृक्षः। आप-स्तम्बः। नाप्रोक्षितमिन्धनमग्नावादध्यात्। विष्णुधर्म्मोत्तरे। 'मन्त्रेणोङ्कारपूर्वेण स्वाहान्तेन विचक्षणः। स्वाहावसाने जुहुया-द्ध्यायन्वै मन्त्रदेवताम्'। छन्दोगपरिशिष्टे कात्यायनः। 'पाण्याहु-तिर्द्वादशपर्वपूरिका स्रुवादिना चेत्स्रुवमात्रपूरिका। दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तत्र पावके। योऽनर्चिषि जुहोत्यग्नौ मन्दार्चिषि च मानवः। मन्दाग्निर्मन्दबुद्धिश्च द-रिद्रश्च प्रजायते। तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन। आरोग्यमिच्छताऽयुश्च श्रियमात्यन्तिकीं तथा। जुहूषंश्च हुते चैव पाणिस्रूर्प्पस्फयदारुभिः। न कुर्यादग्निधमनं न कुर्याद्व्यजना-दिना। मुखेनैव धमेदग्निं मुखादेषोऽभ्यजायत। नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्'। जुहूषन् होतुमिच्छन्।

अथ स्नातकब्राह्मणधर्म्मानाह मनुः॥'उपानहौ च वस्त्रं च धृत-मन्यैर्न धारयेत्। उपवीतमलंकारं स्रजं करकमेव च'। करकः कमंडलुः। विष्णुः। 'विभवे सति न जीर्णमलवद्वासाः स्यात्। न नास्तीत्यभिलषेत॥ याज्ञवल्क्यः। 'न स्वाध्यायविरोध्यर्थमीहेत न यत-स्ततः। न विरुद्धप्रसंगेन संतोषी च भवेत्सदा'। विरुद्धप्रसंगेन अयाज्यया जनादिना॥ कुतस्तर्हि धनमन्विच्छेदित्याकांक्षायां स एवाह 'राजा-न्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा। दंभिहैतुकपाखंडिबकवृ-त्तींश्च वर्ज्जयेत्'। मनुः। 'पाखंडिनो विकर्म्मस्थान् वैडालव्रतिका-ञ् शठान्। हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्'॥ या-ज्ञवल्क्यः। 'शुक्लांबरधरोनीचकेशश्मश्रुनखः शुचिः। न भार्या-दर्शनेऽश्नीयान्नैकवासा न संस्थितः॥ न संशयं प्रपद्येत नाकस्मा-

स्नातक-धर्म्माः

१ युक्तिबलेन सर्वत्र संशयकारी हैतुकः।

दप्रियं वदेत् । नाहितं नानृतं चैत्र न स्तेनः स्यान्न वार्धुषिः' । वार्द्धुषिः प्रतिषिद्धवृत्त्योपजीवी । तथा । 'दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः । कुर्य्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन्' । दाक्षायणं सुवर्णम् । ब्रह्मसूत्रं यज्ञोपवीतं तद्वान् । अत्र ब्रह्मचारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्राप्त्यर्थम् । यदाह वसिष्ठः । 'स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् । यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः' । मनुः । 'वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले' ॥ अत्र दाक्षायणीतिसामान्यमपि कुण्डलपरमेवेति मिताक्षरा । तन्न । अङ्गुलीयकादेरपि सौवर्णस्य धारणविधानात्सुवर्णरजतैरित्यादिना । याज्ञवल्क्यः । 'नेक्षेतार्कं न नग्नां स्त्रीं नच संसृष्टमैथुनाम् । न च मूत्रं पुरीषं वा नाशुचीराहुतारकाः' । संसृष्टमैथुनां संसक्तमैथुनां । अत्र यद्यपि नेक्षेतार्कमिति सामान्योक्तिस्तथापि तदुदयादिपरम् । यदाह मनुः । 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम्' । उपसृष्टं राहुग्रस्तम् । 'नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां च न चासीनां यथासुखम् । नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत्प्रसवन्तीं च तेजस्कामो द्विजोत्तमः' । अशुचिः सन् राहुतारका न पश्येदित्यन्वयः । तथा । 'अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयन् । वर्षत्यप्रावृतो गच्छेत्स्वप्यात्प्रत्यक्शिरा न च' । अयं मे वज्र सर्वं पाप्मानमपहन्तु इति मन्त्रः । गच्छेन्न तु धावेत् ' न प्रधावेच्च वर्षतीति मनुस्मरणात् । प्रत्यक्शिरा न चेति चकारान्नग्न एकश्च शून्यगृहे नशयीत । न च नग्नः शयीतेति वचनात् । नैकः स्वप्याच्छून्यगृहे इति वचनाच्च । 'ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षि-

पेत्। पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत्'। मनुः 'नामेध्यं प्रक्षिपेदग्नौ नच पादौ प्रतापयेत्। अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत्। न चैनं पादतः कुर्य्यान्न प्राणाबाधमाचरेत्'। तथा 'जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत्। नाक्षैः क्रीडेत धर्म्मघ्नैर्व्याधितैर्वा न संविशेत्'। शयानं श्रेष्ठं न प्रबोधयेत्। 'विरुद्धं वर्ज्जयेत्कर्म्म प्रेतधूमं नदीतरम्। केशभस्मतुषाङ्गारकपालेषु च संस्थितिम्। नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्कचित्। न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः। प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः। दुष्टा दशगुणं पूर्वात्पूर्वादेते यथोत्तरम्'। सूनी वध्यघातकः। ध्वजी शौण्डिकः। तथा 'देवर्त्त्विक्स्नातकाचार्य्यराज्ञां छायां परस्त्रियाः। नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च'। मनुः। 'देवतानां गुरोराज्ञः स्नातकाचार्य्ययोरपि। नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च'। बभ्रुणो नकुलवर्णस्य। 'उद्वर्त्तनमलस्नानं विण्मूत्रे रक्तमेवच। श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः। याज्ञवल्क्यः 'विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन। आमृत्योः श्रियमाकांक्षेन्न कञ्चिन्मर्म्मणि स्पृशेत्'। विप्रो बहुश्रुतो ब्राह्मणः, अहिः सर्प्पः। क्षत्रियो नृपतिः। आत्मा स्वात्मा। 'दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत्। श्रुतिस्मृत्युदितं सम्यङ्नित्समाचारमाचरेत्। दूरात् गृहाद्दूरात्। 'गोब्राह्मणजलान्नानि नोच्छिष्टो न पदा स्पृशेत्। न निन्दा ताडने कुर्य्यात्सुतं शिष्यं च ताडयेत्। ताडनमनपकारिणो न कुर्य्यात्। 'अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृजं ततः। दुःखं सुमहदाप्नोति प्रेत्याज्ञानतया नर' इतिवचनात्। 'कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेत्। अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु'॥ लोकविद्विष्टं लोकाभिशस्तिजननम् धर्म्यं विहितमपि मधुपर्क्के गोवधा-

दिकं नाचरेत् । 'मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः । वृद्धबालातुराचार्य्यवैद्यसंश्रितबांधवैः । ऋत्विक्पुरोहितापत्यभार्य्यादाससनाभिभिः । विवादं वर्ज्जयित्वा तु सर्वाँल्लोकान् जयेद्गृही' । जामयो विद्यमानभर्त्तृकाः स्त्रियः । वैद्योविद्वान् । तथा 'पञ्चपिंडाननुद्धृत्य न स्नायात्परवारिषु । स्नायान्नदीदेवखातगर्त्तप्रस्रवणेषु च' । परवारिष्विति परविशेषणोपादानात्स्वकृतवारिषु न पिण्डोद्धार इतिध्येयम् । एतच्च नित्यस्नानविषयम् । 'नदीषु देवखातेषु तडागेषु सरःसु च । स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु चेति वचनात् । शौचाद्यर्थं स्नाने पिण्डानुद्धरणेऽप्यदोषः । 'परशय्यासनोद्यानगृहयानानि वर्ज्जयेत् । अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि' । अग्निहीनस्य श्रौतस्मार्त्ताग्निरहितस्येति ।

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।
परिभाषाह्निकनिर्णयनामागाद्दशम उद्धारः ॥ १० ॥

व्यवहारो विवादश्चैकादशे दर्श्यते लघु ।

---

याज्ञवल्क्यः । 'व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्' इति प्रथमाध्याये उक्तम् । पुनर्द्वितीयाध्याये । 'व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह । धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्ज्जित' इति । एतत्कर्त्तव्यताकलापाभिधानम् । अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः । अनुकल्पमाह स एव । 'अप-

व्यवहारविचारोपक्रमः

श्यता कार्य्यवशाद्व्यवहारान्नृपेण तु । सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्म्मवित्' ॥ कात्यायनः । 'ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् । वैश्यं वा धर्म्मशास्त्रज्ञं शूद्रं यत्नेन वर्ज्जयेत्' । मनुः । 'यस्य राज्ञस्तु कुरुते शूद्रो धर्म्मविवेचनम् । तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः' । प्राड्विवाकादिसाहितस्य नृपस्य व्यवहारदर्शनफलमाह कात्यायनः । 'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः' । अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् । तयोर्वचनं विरुद्धं विविधं च सभ्यैः सह विविनक्ति विवेचयति वा विवाकः । ब्राह्मणा अनियुक्ताः सभ्या नियुक्ता इति भेदः ॥ अत एवोक्तं 'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति । दैवीं वाचं स वदति यः शास्त्रमुपजीवति' । व्यवहारविषयमाह याज्ञवल्क्यः । 'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति यद्राज्ञे व्यवहारपदं हि तत्' । व्यवहारं द्विविधमाह नारदः । 'द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतान्तु संसर्गात्तत्त्वं होढाभिदर्शनात्' । हेढं लोप्त्रं लिङ्गमितियावत् । तेन दर्शनं साक्षाद्वा दर्शनं होढाभिदर्शनम् । 'वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्विवादार्थी यावदाह्वान-

दर्शनम्'। आसेधो राजाज्ञया स्वयं वाऽवरोधः। आसेधकाल आसिद्ध आसेधं योऽतिवर्त्तते। स विनेयोऽन्यथाकुर्वन्नासेद्धा दण्डभाग्भवेत्। नदीसन्तारकान्तारदुर्देशोपप्लवादिषु। आसिद्धस्तं परासेधमाक्रामन्नापराध्नुयात्। अत्र राजदैवादिपीडायामावश्यकासाधारणकर्मादौ न दोषः। नारदः। 'यो न भ्राता न च पिता न पुत्रो न नियोगकृत्'। परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्'। याज्ञवल्क्यः। 'प्रत्यर्थिनोऽग्रतो लेख्यं यथाऽवेदितमर्थिना। समामास तदर्द्धाहर्नामजात्यादिचिह्नितम्'। यथा येन प्रकारेण पूर्वमावेदितं न पुनरन्यथा। अन्यथावादिना भङ्गप्रसङ्गात्। यदुक्तम्। 'अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतःप्रपलायी च हीनः पञ्चविधः स्मृतः'। देशस्थानादयः स्थावरेषु लेख्याः। यदुक्तम्। 'देशश्चैव तथा स्थानं सन्निवेशस्तथैव च। जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च। पितृपैतामहं चैव पूर्वराजानुकीर्त्तनम्। स्थावरेषु विवादेषु दशैतानि निवेशयेत्'। पक्षाभासमाह कात्यायनः। 'अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्ज्जयेत्'। निराबाधं अस्मद्गृहप्रदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि। उत्तरमाह स एव। 'पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्। अव्याख्यागम्यमित्येतदुत्तरं तद्विदोविदुः। सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा। पूर्वन्यायविधिश्चैव मुत्तरं स्याच्चतुर्विधम्'। सत्योत्तरं यथा। 'साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता'। मिथ्योत्तरं चतुर्द्धा। 'मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः। अजातश्चास्मि तत्काले इति मिथ्याचतुर्विधम्'। प्रत्यवस्कन्दनं कारणोत्तरम्। तदाह नारदः। 'अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनन्तथा'। प्राङ्न्या-

योत्तरं तु यत्राभियोक्तारं व्यवहारमार्ग्गेण जितं ब्रूतेऽभियुक्त इति। तदाह कात्यायनः। 'आचारेणाऽवसन्नोऽपि पुनर्ल्लेखयते यदि। सोऽभिधेयोजितः पूर्व्वं प्राङ्न्यायस्तु स उच्यते'। उक्तं चतुर्विधमुत्तरम्। तदन्ये चोत्तराभासाः। याज्ञवल्क्यः। 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्'। तत उत्तरानन्तरं। हारीतः। 'प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी निर्द्दिशेत्क्रियाम्। मिथ्योक्तौ पूर्व्ववादी तु प्रतिपत्तौ न सा भवेत्'। क्रियां साक्षिदिव्यादिरूपाम्। याज्ञवल्क्यः। 'चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः'। भाषापादः उत्तरपादः क्रियापादः साध्यसिद्धिपादश्चेति चत्वारः पादा व्यवहारस्य॥

अथ सङ्क्षेपादष्टादश विवादपदान्याह मनुः। 'तेषामाद्यमृणादानं निःक्षेपोऽस्वामिविक्रयः। सम्भूय च समुत्थानं दत्तस्यानपकर्म्म च। वेतनस्यैव चादानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामिपालयोः। सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके। स्तेयं च साहसं चैव स्त्रीसङ्ग्रहणमेव च। स्त्रीपुंधर्मोविवादश्च द्यूतमाह्वय एव च। पदान्यष्टादशैतानि व्यवहारस्थिताविह'। तत्र ऋणादानं नारदः। 'ऋणन्देयमदेयं च येन यत्र यथा च यत्। दानग्रहणधर्म्माश्च ऋणादानमिति स्मृतम्'। वृहस्पतिः। 'परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम्। लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा'। भोगलाभयुत आधिस्तद्राहितो बन्धः। मनुः। 'वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धनीम्। अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते'। व्यासः। 'सबन्धे भाग आशीतः साष्टभागः सलग्नके। निराधाने द्विकशतं मासलाभ उदाहृतः'। आशीतः अशीतितमः। साष्टभागोऽशीतितमभागस्याष्टमभागसहितः।

निराधाने बन्धादिशून्ये । मनुः । ' द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् । मासस्य वृद्धिं गृह्णीयाद्वर्णानामानुपूर्व्यतः । कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता । धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ' । सदो धान्यातिरिक्तं फलादिक्षेत्रभवम् । वाह्योवृषादिः । लवोलोमादिः ॥

अथ प्रतिभूः । बृहस्पतिः । 'दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा । चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः । आहैको दर्शयामीति साधुरेषोऽपरोऽब्रवीत् । दाताहमेतद्द्रविणमर्पयाम्यपरोऽब्रवीत् । आद्यौ तु वितथे दाप्यौ तत्कालावेदिते धनम् । उत्तरौ च विसंवादे तौ विना तत्सुतावपि' ॥

अथ निःक्षेपः । नारदः । 'स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः' । याज्ञवल्क्यः । 'वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते । द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् । स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा । प्रतिदानन्तथैवास्य प्रत्ययः स्याद्विपर्य्यये' । विपर्य्ययोऽन्यथाकरणम् । प्रत्ययः शपथः ॥

अथास्वामिविक्रयः । मनुः'अस्वामिना कृतो यस्तु दायोविक्रय एव च । अकृतः स तु विज्ञेयो व्यवहारो यथास्थितिः' । कात्यायनः । 'नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातिभिः स्वकम् । अदत्तसक्तविक्रीतं कृत्वा स्वं लभते धनी' ॥

अथ सम्भूयसमुत्थानम् । 'समवायेन वणिजां लाभार्थं कर्म कुर्वताम् । लाभालाभौ यथाद्रव्यं यथावासमुदाहृतम्' । बृहस्पतिः । 'क्षयोहानिर्यदा तत्र देवराजकृता भवेत् । सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः' । क्षयो मूलहानिर्ह्लाभस्य ॥

---

१ निक्षेपद्रव्यस्याधारभूतं पात्रं वासनं करण्डादि ।

अथ दत्ताप्रदानिकम्। नारदः 'दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति। दत्ताप्रदानिकं नाम व्यवहारपदं स्मृतम्'। तत्रादेयानि। 'सामान्यपुत्रदाराधिसर्व्वस्वन्यासमाचितम्। प्रतिश्रुतं तथान्यस्य न देयं व्यष्टधा स्मृतम्। पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः। स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदोविदुः। अदत्तं तु भयक्रोधशोकमोहरुजान्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥ बालमूढा ऽस्वतंत्रार्त्तमत्तोन्मत्तापवर्ज्जितम्। कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत्॥ अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्म्मसंहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम्'॥ बालेनाप्राप्तषोडशवर्षेण॥

अथ वेतनादानम्॥ नारदः 'भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः। वेतनस्यानपाकर्म्म तद्विवादपदं स्मृतम्'॥ याज्ञवल्क्यः॥ 'गृहीतवेतनः कर्म्म त्यजन् द्विगुणमावहेत्। अगृहीते समं दाप्यो भृत्यैरक्ष्य उपस्करः'॥ समं यावदुपगतम्। उपस्करो लांगलग्रहयोक्त्रादीनाम्॥

अथ संविद्व्यतिक्रमः। नारदः॥ 'पाखण्डिनैगमादीनां स्थितिः समय उच्यते। समयस्यानपाकर्म्म तद्विवादपदं स्मृतम्'॥ समयः संवित्॥ तदतिक्रमे दण्डमाह याज्ञवल्क्यः। 'गणद्रव्यं हरेद्यस्तु संविदं लंघयेच्च यः। सर्व्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्'॥ गणस्य ग्रामादिजनसमूहस्य साधारणम्।

अथ क्रीतानुशयः। नारदः। 'क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते। द्वितीयेऽह्नि दद्त्क्रेता मूल्यात्त्रिंशांशमाहरेत्। द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तु'। परतश्चतुर्थेऽह्नि। 'दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम्। बीजं जायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्'। अत्र क्रमेणान्वयः। बीजं

व्रीह्यादि । अयो लौहं, वाह्योऽश्वः । स्त्री दासी । दोह्यं महिष्यादि, पुमान् दासः ।

अथ स्वामिपालविवादः । स्वामी गवादिस्वामी । पालः क्षेत्रादिपालकः । यदाह याज्ञवल्क्यः । 'माषानष्टौ तु महिषी सस्यघातस्य कारिणी । दण्डनीया तदर्द्धन्तु गौस्तदर्द्धमजाविकम्' । अत्र महिष्यादिपदेन तत्स्वामी विवक्षितः । माषोऽत्र ताम्रिकपणस्य विंशतितमो भागः । 'माषो विंशतिमोभागः पणस्य परिकीर्त्तित' इतिनारदोक्तेः । एतच्चाज्ञानविषयम् । ज्ञानकृते तु ' पणस्य पादौ द्वौ गां तद्द्विगुणं महिषीं तथा । तथाऽजाविकवत्सानां पादोदण्डः प्रकीर्त्तितः' ।

अथ सीमाविवादः । याज्ञवल्क्यः । 'सीम्नो विवादे क्षेत्रस्य सामन्तस्थविरादयः । गोपाः सीमां कृषाणाश्च सर्वे च वनगोचराः । नयेयुरेते सीमानं स्थलांगारतुषद्रुमैः । सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम्' ।

अथ दण्डपारुष्यम् । नारदः । 'परगात्रेष्वभिद्रोहे हस्तपादायुधादिभिः । भस्मादिभिश्चोपघाते दण्डपारुष्यमुच्यते । अवगोरणनिःसंगपातनक्षतदर्शनैः । हीनमध्योत्तमानां च द्रव्याणां समतिक्रमात् । त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधने' । त्रीणि साहसान्याह याज्ञवल्क्यः । 'साशीतिपणसाहस्रो दण्ड उत्तमसाहसः । तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः' । कार्षिकस्ताम्रिकः पणः । पलस्य चतुर्थोंऽशः कर्षः, कर्षसंमितस्ताम्रविकारः कार्षिक इति ॥

अथ वाक्पारुष्यम् । नारदः । 'देशकालकुलादीनामाक्रोशं व्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थं वाक्पारुष्यन्तदुच्यते । उच्चैर्भाषणमाक्रोशः, व्यङ्गमवद्यम् । प्रतिकूलार्थं उद्वेजकम् । 'नि-

१ मिताक्षरोद्धृतेऽस्मिन्नवाक्ये 'न्यङ्गसंयुतम्' इति पाठः ।

ष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् । गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद्गुरुः । साक्षेपं निष्ठुरं ज्ञेयमश्लीलं व्यंगमुच्यते । पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः' । साक्षेपं धिङ्मूर्ख जाल्मेसादि । अश्लीलं भगिनीत्यादि । पतनीयं सुरापानादि ।

अथ स्तेयम् । मनुः । 'स्यात्साहसं त्वन्वयवत् प्रसभं कर्म्म यत्कृतम् । निरन्वयं भवेत्स्तेयं कृत्वा चोपह्नुतेभयात्' । अन्वयवत्समक्षम्, निरन्वयमसमक्षम् । नारदः । 'साहसेषु य एवोक्तास्त्रिषु दण्डो महर्षिभिः । स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्' । वृद्धमनुः । 'अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् । अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत्' । इदं महापराधविषयम् । विप्रे चौरे विशेषमाह याज्ञवल्क्यः । 'सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्' । सचिह्नं ललाटे श्वपदाङ्कम् । यथाह मनुः 'गुरुतल्पे भगः कार्य्यः सुरापाणे सुराध्वजः । स्तेये च श्वपदं कार्य्यं ब्रह्महण्याशिराः पुमान्' ॥

अथ साहसम् । नारदः । 'सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः। तत्साहसमिति प्रोक्तं सहो बलमितिस्मृतम् । तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा । उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् । फलमूलोदकादीनां क्षेत्रोपकरणस्य च । भङ्गाक्षेपोपमर्द्दाद्यैः प्रथमं साहसं स्मृतम् । वासःपश्वन्नपानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्' । एतेनैव भङ्गाक्षेपोपमर्द्दादिना । 'व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् । प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् । वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः' । वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः ॥

अथ स्त्रीसंग्रहणं व्यासः । 'अदेशकालभाषायां निर्ज्जने च

परस्त्रियाः । कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् । प्रेषणं गन्धमाल्यानां पुष्पभूषणवाससाम् । प्रलोभनं चान्नपानैर्मध्यमं साहसं स्मृतम् ॥ सहासनं विविक्ते तु परस्परमुपाश्रयः । केशाकेशिग्रहश्चैव सम्यक्संग्रहणं स्मृतम् । नीवीस्तनप्रावरणसक्थिकेशाभिमर्शनम् । अदेशकालसंभाषं सहैकस्थानमेवच' ॥ यः परदाराणां नीव्याद्यभिमर्शनं करोति। यश्चादेशेनिर्ज्जने एकस्मिन्मंचकादाववतिष्ठते सोपि संग्रहणे प्रवृत्तो ग्राह्य इत्यर्थः । स्त्रीपुंसयोर्मिथुनीभावः संग्रहणं। तथा 'पुमान्संग्रहणे ग्राह्यः केशाकेशिपरस्त्रियाः । सद्योवा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा' ॥ पुमान्केशाकेश्यादिभिर्लिङ्गैर्गृहीतव्यः ॥ दण्डमाह याज्ञवल्क्यः ॥ 'स्वजातावुत्तमो दण्डश्चानुलोम्ये तु मध्यमः । प्रातिलोम्ये वधः पुंसोनार्य्याः कर्णादिकर्त्तनम् । विशेषमाह मनुः ॥ 'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः ॥ नारदः ॥ ' स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी तथा । गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः' ॥ निष्कासिनी दासी अनवरुद्धा ॥

अथ स्त्रीपुंयोगः ॥ नारदः । 'विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते । स्त्रीपुंयोगः समाख्यं तद्विवादपदमुच्यते ॥ मनुः । 'अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च संज्जन्त्यः संस्थाप्या आत्मनो वशे' ॥ यद्यपि स्त्रीपुंसयोर्व्यवहारो निषिद्धस्तथापि प्रत्यक्षेण कर्णपरम्परया वा विवदमानौ दम्पती राज्ञा निजधर्ममार्ग्गे स्थापनीयौ ॥

अथ विभागः ॥ नारदः । 'विभागोऽर्थस्य पित्र्यस्य तनयैर्यत्र कीर्त्यते । दायभाग इति प्रोक्तं व्यवहारपदं बुधैः' ॥ विभागो नाम द्रव्यसमुदायानामनेकस्वामिकानामेकैकस्थाने स्थापनम् ॥

याज्ञवल्क्यः ॥ 'त्रिभागं चेत्पिता कुर्य्यादिच्छया विभजेत्सुतान् । ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः' ॥ व्यक्तमाह मनुः । 'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्द्धं मध्यमस्य स्याच्चतुरीयं तु यवीयसः ॥ इदं तु पितृकर्त्तृकपित्रर्जितद्रव्यविभागविषयम् ॥ नारदः । 'अत ऊर्द्ध्वं पितुः पुत्रा विभजेयुर्द्धनं समम् । मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ॥ निवृत्ते चापि रमणे पितर्य्युपरतस्पृहे । सममित्यनेन पितुरूर्द्ध्वं विषमविभागो न विहितः । मनुः ॥ 'ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् । भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः' ॥ पितृकर्त्तृकपुत्रीयसमविभागे पत्नीनामप्यंशमाह याज्ञवल्क्यः ॥ 'यदि कुर्य्यात्समानंशान्पत्न्यः कार्य्याः समांशिकाः । न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा' ॥ नारदः ॥ 'व्याधितः कुपितश्चैव विषयासक्तमानसः । अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥ अजेकस्य द्व्यंशमाह वसिष्ठः । येनैषां स्वयमुपार्ज्जितं स्यात्स द्व्यंशमेव लभेत । अस्यापवादमाह याज्ञवल्क्यः । 'सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः' । सामान्ये साधारणे । अर्थसमुत्थाने अर्थोपार्ज्जनोपाये । ज्येष्ठस्य विंशानुद्धारेपि विषमविभागमाह मनुः । 'एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः । अंशमंशं यवीयांस इति धर्मो व्यवस्थितः' । एकाधिकं द्वौ भागौ । अध्यर्द्धं सार्द्धैकभागं, ततोज्येष्ठात् अनुजः अनन्तरजः । अंशमंशं एकैकमंशम् । एतदनुद्धारपरम् । 'यथा नियोगधर्मो नो नानुबन्ध्यावधोऽपि वा । तथोद्धारविभागोपि नैव संप्रति वर्त्तते । इत्युद्धारविभागनिषेधात् । नियोगधर्मः क्षेत्रजस्पत्तये देवरादिनियोजनम् । अनुबन्ध्यावधः मैत्रावारुणीं गां वशामनुबन्ध्यामालभेतेति श्रुत्युक्तो गोवधः । अत एवापस्तम्बोऽप्युद्धारविभागं दर्शयित्वा तच्छास्त्रैः प्रतिषिद्धमपि निषिद्धमिति निराकृ-

तवान्। 'पुत्रेभ्यो दायं विभजेदित्यविशेषेण श्रुतेरिति। गौतमः। 'मातृधनं दुहितॄणां अप्रत्तानामप्रतिष्ठितानां च'। प्रत्तासमवाये अप्रत्तानां प्रतिष्ठितासमवायेऽप्रतिष्ठितानामित्यर्थः। अविभज्यमाह याज्ञवल्क्यः। 'पितृद्रव्याविरोधेन यदन्यत्स्वयमर्ज्जितम्। मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत्'। मैत्रं मित्राल्लब्धम्। औद्वाहिकं विवाहलब्धम्। अत्रोभयत्रापि पितृद्रव्याविरोधेनेत्यनुवर्त्तनीयम्। तथा 'क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः। दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च'। अत्र सर्वत्र पितृद्रव्याविरोधेनेत्यनुवर्त्तनीयम्। अन्यथाद्याः दृष्टतार्थतापत्तेः। मनुः। 'पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्। न तं भजेरन् दायादा भजमानाः पतन्ति ते'। धृतो भवेदिति विशेषणादधृतानां विभज्यत्वं गम्यते। 'भूर्य्या पितामहोपात्ता निबन्धो द्रव्यमेव च। तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि। विभक्तेषु सुतोजातः सवर्णायां विभागभाक्'। मनुरपि 'ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत्। याज्ञवल्क्यः। 'दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्। दृश्यात् भ्रातृधनात्। तस्य विभागानन्तरोत्पन्नस्य। आयः नित्यप्राप्तिः, व्ययः पितृकृतर्णापाकरणम्। याज्ञवल्क्यः। 'पितुरूर्द्ध्वं विभजतां माताऽप्यंशं समं हरेत्। तथा। 'असंस्कृतास्तु संस्कार्य्याः भ्रातृभिः पूर्वसंस्कृतैः। भगिन्यस्तु निजादंशादंशं दत्वा तुरीयकम्'। गलितांशविभागमाह स एव। 'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः'। मुख्यगौणसुताभावे दायादक्रममाह स एव। 'पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतो गोत्रजो बन्धुःशिष्यस्सब्रह्मचारिणः। एषामभावे सर्वेषां धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः। औरसाः क्षेत्रजास्त्वेषां निर्द्दोषा भागहारिणः'। तेषां क्रीतादीनाम्।

अथ स्त्रीधनं याज्ञवल्क्यः । 'पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्त्तितम्' । अध्यग्निविवाहाग्निकाले प्राप्तम् । आधिवेदनिकम् अधिविन्नास्त्रियै दत्तम् । मनुः । 'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्' । अध्यावाहनिकं पतिगृहप्रापणकालीनं । 'ऊढया कन्यया चापि पत्युः पितृगृहेपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं मतम् । सौदायिकं धनम् प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते' । स्त्रीधनविभागमाह याज्ञवल्क्यः । 'अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः । तत्स्त्रीधनम् । 'दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके । गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति' । सम्प्रतिरोधके वन्दिग्रहणनिग्रहादौ । विभागानिह्नवे ज्ञातिबन्धुसाक्षिभिर्लेखितैः । विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः । यौतकैः पृथक्कृतैः । नारदः । 'साक्षित्वं प्रातिभाव्यं च दानग्रहणमेव च । विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः कथञ्चन' ॥

अथ द्यूतसमाह्वयौ । मनुः । 'अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः' । तत्र द्यूतसभाधिकारिणो वृत्तिमाह स एव । 'ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् । गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतम्' । ग्लहे पणे, शतपरिमाणवृद्धिर्यस्यासौ शतिकवृद्धिः । तस्माच्छतिकवृद्धेः कितवात्सभिकः सभास्थः कितवानामुत्तवर्णः सभापतिर्वा इतरात् अपरिपूर्णशतिकवृद्धेः दशकं शतं जितद्रव्यस्य दशमं भागं । 'स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम्' । स सभिकः । 'जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी' । उद्ग्राहयेत् पराजितादुद्धरेत् । द्यूते वादे निर्णयार्थमाह । 'द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि । राज्ञा सचिह्ना निर्वास्याः कूटाक्षेपाधि-

वेदिनः'। द्यूतनिषेधमाह मनुः । 'द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत्तथा । तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः । द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्' ।

अथ प्रमाणानि । 'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्' । तत्र लिखितम् । नारदः । 'लेख्यन्तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा । असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थिते तयोः' । तत्रान्यकृतमाह । 'यः कश्चिदर्थो निष्णातः स्वरुच्या च परस्परम् । लेख्यन्तु साक्षिमत्कार्यन्तस्मिन् धनिकपूर्वकम् । विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् । तत्प्रमाणं स्मृतं सर्वं बलोपाधिकृताहते । ऋणं लेख्यकृत्तन्देयं पुरुषैस्त्रिभिरेव तु' ॥

अथ भुक्तिः । याज्ञवल्क्यः । 'पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी । परेण भुज्यमाना या धनस्य दशवार्षिकी' । हानिर्वृद्धिर्न तु स्वत्वाभाव इत्येके । नारदः । 'उपेक्षां कुर्वतस्तस्य तूष्णीं भूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिद्ध्यति । अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः । एतद् बलात्कारोपभोगपरम्' ॥ मनुः ॥ 'अजडश्चेदपौगंडो विषयश्चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति ॥ कात्यायनः ॥ अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः । तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्ज्जिता । तथा'सीमाविवादे निर्णीते सीमापत्रं विधीयते । तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः ॥ तस्माद्भूमेर्धनस्य च फलहानिरिह विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिरिति मिताक्षराप्याह ॥ तदुपपन्नं स्वाम्युपेक्षालक्षणस्वापराधात् । अनुपेक्षायां पुनर्विंशतेरूर्द्धं नष्टं फलं लभत इतिराद्धान्तः ॥

अथापवादमाह याज्ञवल्क्यः । 'आधिसीमोपनिक्षेपजडबालधनैर्विना । तथोपनिधिराजस्त्रीश्रोत्रियाणान्धनैर्विना' । आध्यादिषु पश्यतोऽब्रुवतोपि हानिर्नभवतीत्यर्थः । नारदः । 'आगमेन विशुद्धेन भोगोयाति प्रमाणताम् । अविशुद्धागमोभोगः प्रामाण्यं नैव गच्छति' । पञ्चविशेषणयुक्तो भोगः प्रमाणमिति हि स्मर्यते । 'सागमो दीर्घकालश्च निराक्रोशोनिरंतरः । प्रत्यर्थिसंन्निधानश्च परिभोगोपि पञ्चधेति । यदपि 'अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम् । तदप्यस्मार्त्तकालोपलक्षणम् । त्रिपुरुषविवक्षायामेकवर्षाभ्यंतरेपि पुरुषत्रयातिक्रमसम्भवात् द्वितीयवर्षेऽप्यनागमभोगस्य प्रामाण्यप्रसंगादिति।

अथ साक्षी । सच साक्षाद्दर्शनाच्छ्रवणाच्च भवति यदाह मनुः । 'समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति' । सच द्विविधः । कृतोऽकृतश्च, यथाह नारदः । 'एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः । कृतः पञ्चविधश्चैव षड्विधोऽकृत उच्यते । लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च । गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः' । लिखितादीनां स्वरूपं कात्यायनेनोक्तम् । 'अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते । स साक्षी लिखितो नामस्मारितः पत्रकादृते । यदृच्छयागतः साक्षी यदृच्छाभिज्ञ उच्यते । अर्थिना साध्यसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते स्थितो गूढं गूढसाक्षी स उच्यते । तथा 'साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते । श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञकः' । अकृतान्षडाह नारदः । 'ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् । कार्य्येष्वधिकृतो यःस्यादर्थिना प्रहितश्च यः । कुल्याः कुलविवादेषु विधेयास्तेऽपि साक्षिणः । याज्ञवल्क्यः । 'त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियापराः । यथाजाति यथावर्णं सर्वे

सर्वेषु वा स्मृताः । त्रयोऽवरा अन्यूना येषान्तेऽप्यवराः । त्रिभ्यो
साक्षिभेदाः । न्यूना न भवन्तीत्यर्थः।असाक्षिणः पञ्चविधानाह नारदः । 'असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः । वचनाद्दोषतो भेदात्स्वयमुक्तेर्मृतान्तरः । श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः । असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः । तापसा वानप्रस्था । 'स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥ साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम् । तेषामेको ऽन्यथावादी भेदात्सर्वे न साक्षिणः।स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् । योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि । क तद्वदतु साक्षित्वामित्यसाक्षी मृतान्तरः।मृतान्तरेऽर्थिनि प्रेते मुमूर्षुश्रावितान्तरे' । यत्र मुमूर्षुणा पित्रादयः श्राविताास्तत्र मृतान्तरोपि साक्षीत्यर्थः । ऽप्यवराः साक्षिणोज्ञेया इत्यस्यापवादमाह । याज्ञवल्क्यः। 'उभयानुमतः साक्षी भवत्येकोपि धर्मवित्' । अपिशब्दाद्द्वावपि । 'सर्वः साक्षी संग्रहणे चौर्य्यपारुष्यसाहसे । सर्वपदेन तपस्वीदानशीलादिव्यावृत्तिः । साक्षिश्रवणमाह कात्यायनः । 'सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ । प्राड्विवाको नियुञ्जीत विधिनानेन सान्त्वयन् । देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् । उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन् । विशेषमाह मनुः । 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः । याज्ञवल्क्यः 'असाधयन् दमन्दाप्यो दूषणं साक्षिणं स्फुटम् । भाविते साक्षिणोवर्ज्याः साक्षिधर्मनिराकृताः । मनुः । 'पितरस्त्ववलम्बन्ते पुत्रे साक्षित्वमागते । तारयिष्यति किन्न्वस्मान्किमधः पातयिष्यति । पंच पश्वनृते हन्ति दश हंति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ।

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् । सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदेत्' ।

अथ अकथने दोषमाह याज्ञवल्क्यः । 'अब्रुवन् हि नरः साक्ष्यमृणं सदश बन्धकम् । राज्ञा सर्वं प्रदाप्यः स्यात्षट्चत्वारिंशकेऽहनि । तथा । 'साक्षिणस्तु समुद्दिश्य यस्तु तान्न निगादयेत् । त्रिंशद्रात्रात्त्रिपक्षाद्वा तस्य हानिः प्रजायते । याज्ञवल्क्यः । 'न ददाति हि यः साक्ष्यं जानन्नपि नराधमः । स कूटसाक्षिणां पापैस्तुल्योदण्डेन चैवहि । मनुः । 'यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत् । तत्तत्कार्य्यं निवर्त्तेत कृतं चाप्यकृतं भवेत् । साक्षिविप्रतिपत्तौ निर्णयमाह याज्ञवल्क्यः । 'द्वैधे बहूनां वचनं समेषु गुणिनां तथा । गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः' । यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् । अन्यथा वादिनो यस्य ध्रुवन्तस्य पराजयः । उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः । द्विगुणा वा ऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः । यस्य जायेत सप्ताहादुक्तं साक्ष्यस्य साक्षिणः । रोगोऽग्निर्ज्ञातिमरणं तस्य कूटत्वमादिशेत्' ।

अथ प्रकीर्णकम् । दुष्टत्वादिलक्षणमाह याज्ञवल्क्यः । 'देशाद्देशान्तरं याति सृक्किणी परिलेढि च । ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ शुष्यत्स्खलद्वाक्यो वा विरुद्धं बहु भाषते । वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि । स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः । अभियोगेऽथवा साक्ष्ये दुष्टः स परिकीर्तितः' । निर्भुजति वक्रयति । यत्रार्थिप्रत्यर्थिनौ युगपदागतौ तत्र प्रथमं कस्य क्रियेत्याकाङ्क्षायामाह याज्ञवल्क्यः । 'साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः । पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः । सपणश्चेद्विवादः स्यात्तत्र हीनन्तु दापयेत् । दण्डं च स्वपणं चैव धनिने

धनमेव च'। सपणश्चेद्विवादइत्युक्ते पणरहितोऽपि विवादोदर्शितः। 'छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः । भूतमप्यनुपन्यस्तं हीयते व्यवहारतः'। भूतेन तत्वेन। भूतं वस्तुतत्त्वम्। 'स्मृत्त्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः। गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन । आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्'।इत्यर्थशास्त्रं।'इयं विशुद्धिरुदिता प्रमाप्याकामतोद्विजम्। कामतोब्राह्मणवधे निष्कृतिर्न्न विधीयते' इतिधर्मशास्त्रम्। इयं द्वादशाब्दादिनिष्कृतिः। सुमन्तुः। 'नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात् ।मनुः।'आचार्य्यं च प्रवक्तारं पितरं मातरं गुरुम् । न हिंस्याद्ब्राह्मणं गाश्च सर्वांश्चैव तपस्विनः'। एतदाततायिपरं, हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रादेव सिद्धेः। 'अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः'। तथा 'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्। एषामन्यतमाभावे दिव्यान्यतममुच्यते'। कात्यायनः। 'यद्येको मानुषीं ब्रूयादन्योब्रूयात्तु दैविकीम्। मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां बुधः'। याज्ञवल्क्यः।'सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया। आधौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरा। बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्त्तयेत्। स्त्रीनक्तमन्तरागारबलोपधिकृतांस्तथा। राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः। विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः।इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्। अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च। हीनवर्णं परिक्षीणमृणार्थं कर्म कारयेत् । ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्। दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्। मध्यस्थ-

स्थापितं तत्स्याद्वर्द्धते न ततः परम् ॥ पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा। पुत्रपौत्रैर्ऋणन्देयं निह्नवे साक्षिभाषितम्। रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च। पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः'। रिक्थं धनम्। नारदः। 'धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्। पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः।

अथ दासाः। तत्र नारदः। 'गृहजातस्तथाक्रीतो लब्धो दायादुपागतः। अनाकालभृतस्तद्वदाहितः स्वामिना च यः। मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः। तवाहमित्युपगतः प्रव्रज्याऽवसितः कृतः। भक्तदासश्चावज्ञेयस्तथैव वडवाहृतः। विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः'। दायादुपागतः पित्रादिदासः। अनाकालभृतो दुर्भिक्षे पोषितः। आहितः आधितां नीतः। प्रव्रज्यावसितः प्रव्रज्याच्च्युतः। भक्तदास ओदनार्थमेव दासः। वडवा दासी, तया हृतः तल्लोभेन दासतां गतः। 'निग्रहाद्वडवाया वडवाहृतः' । निग्रहात् त्यागात्। 'स्वदासमिच्छेद्यः कर्त्तुमदासं प्रीतमानसः। स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा। साक्षताभिः सपुष्पाभिर्मूर्द्धन्याद्भिरवाकिरन्। अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमवासृजेत्। अप्रव्रज्यावसितस्य तु मोक्षो नास्तीत्याह। 'प्रव्रज्यावसितो दासो राज्ञ आमरणान्तिकः' ॥

अथ दिव्यानि। तत्र बृहस्पतिः। 'घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः। षष्ठश्च तण्डुलः प्रोक्तः सप्तमस्तप्तमाषकः। अष्टमः काल इत्युक्तो धर्मजं नवमं भवेत्। दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा'। याज्ञवल्क्यः। 'तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये। महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि' ॥

शीर्षकस्थस्तत्प्रयुक्तदण्डभाक् ॥ महाभियोगेष्वेतानीति श्रुतेस्तत्रैवैतानि नान्यत्रेति नियम्यते । न पुनरिमान्येव दिव्यानीति मिताक्षरा । 'स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः । विधिदृष्टस्य दिव्यस्य न भेदो जायते क्वचित्' । व्यासः । 'नाममन्त्रौषधित्रशात्प्रदत्तं चाविधानतः । विसंवदेद्दिव्यमपि न तु साक्षी गुणान्वितः' । गुणवत्साक्षिसद्भावे दिव्यं न देयमित्यर्थः ।

अथ दिव्यकालाः । कात्यायनः । 'सचैलस्नातमाहूय सूर्य्योदय उपोषितम् । कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ' । पितामहः । 'नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे । चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव हि । एते साधारणा मासा दिव्यानामविरोधिनः । कोशस्तु सर्वदा देयस्तुला स्यात्सर्वकालिकी' । कोशग्रहणं सर्वशपथोपलक्षकम् । 'अग्निः शिशिरहेमन्तवर्षासु परिकल्पितः । शरद्ग्रीष्मे च सलिलं हेमन्ते शिशिरे विषम्' । नारदः । 'न शीते तोयशुद्धिः स्यान्नोष्मकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यान्न प्रवाते तुलां तथा । नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन' । अत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । उष्णशब्देन शरद्ग्रीष्मयोः । 'याम्यायने हरौ सुप्ते सर्वकर्म्माणि वर्ज्जयेत्' इति दिव्येतरपरं वर्षाविहितेतरपरम् वा विशेषविधेरिति ॥

अथ दिव्यविशेषाधिकारिणः । नारदः । 'ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः । वैश्यस्य सलिलं देयं विषं शूद्रस्य चैव हि । साधारणश्च सर्वेषां कोशः प्रोक्तो मनीषिभिः । विषवर्ज्जं ब्राह्मणस्य सर्वेषां वा तुला स्मृता । कुष्ठिनां वर्ज्जयेदग्निं सलिलं श्वासकासिनाम् । पित्तश्लेष्मवतां दिव्यं विषं तु परिवर्ज्जयेत्' । द्रव्यसंख्यातो दिव्यभेदाः । 'विषं सहस्रेऽपहृते पादोने च हुताशनः । त्रिभागोने च सलिलमर्द्धे देयो घटस्तथा । चतुश्शता-

भियोगे तु दातव्यस्तत्प्रमाषकः । त्रिशते तण्डुला देया कोशश्चैव तदर्द्धके । शतेतदर्द्धेऽपहृते दातव्यं धर्म्मशोधनम् । गोचोरस्य प्रदातव्यं सभ्यैः फालावलेहनम्' । याज्ञवल्क्यः । 'नासहस्राद्धरेत्फालं न विषं न तुलां तथा । नृपार्थेष्वभिशापेषु दहेयुः शुचयः सदा । सहस्रे तु घटं दद्यात्सहस्रार्द्धे तथायसम् । अर्द्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं तथा । इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् । नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत्' ॥

अथ दिव्यप्रयोगः 'तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः । प्रतिमानसमीभूतो रेखां कृत्वावतारितः । त्वं तुले सत्यधामासि पुरादेवैर्विनिर्मिता । तत्सत्यं वद कल्याणि संशयान्मां विमोचय । यद्यस्मि पापकृन्मातस्ततो मां त्वमधोनय । शुद्धश्चेद्गमयोर्द्ध्वं मां तुलामित्यभिमन्त्रयेत्' । अथ घटनिर्माणं पितामहनारदौ । 'छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् । प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः । मन्त्रः सौम्यः । 'चतुरस्रा तुला कार्य्या दृढा ऋज्वी तथैव च । कण्टकानि च देयानि त्रिषु स्थानेषु चार्थवत् । चतुर्हस्ता तुला कार्य्या पादौ चोपरि तत्समौ । अन्तरं तु तयोर्हस्तौ भवेदध्यर्द्धमेव च । हस्तद्वयं निखनयेत्पादयोरुभयोरपि । तोरणे च तथाकार्य्ये पार्श्वयोरुभयोरपि ॥ घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ।अवलंबौ च कर्त्तव्यौ तोरणाभ्यामधोमुखौ । मृन्मयौ सूत्रसंबद्धौ घटमस्तकचुंबिनौ । प्राङ्मुखोनिश्चलः कार्य्यः शुचौ देशे घटस्तथा । शिक्यद्वयं समासाद्य पार्श्वयोरुभयोरपि । प्राङ्मुखःकल्पयेद्दर्भान् शिक्ययोरुभयोरपि । पश्चिमे तोलयेत्कर्त्तृनन्यस्मिन्मृत्तिकां शुभाम् । पिष्टकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः ॥ उदकं च प्रदातव्यं घटस्योपरि पण्डितैः । यस्मिन्न प्लवते तोयं स विधेयो घटः समः । तोलयित्वा नरं पूर्व

पश्चात्तमवतारयेत् । घटं तु कारयेन्नित्यं पताकाध्वजशोभितम्' । ततः प्राड्विवाकः प्राञ्जलिर्देवानावाहयेत् । 'एह्येहि भगवन् धर्म्म अस्मिन्दिव्ये समाविश । सहितो लोकपालैश्च वस्त्रादिसमरुद्गणैः । ततोदिक्षु लोकपालांश्च पूजयेत् । एह्येहीति मंत्रेण धर्म्मं पूजयेत् । 'चतुर्दिक्षु तथा होमः कर्त्तव्यो वेदपारगैः । आज्येन हविषा चैव समिद्भिर्होमसाधनैः । वाक्यं तदभियुक्तस्य लिखित्वा तन्तु पत्रके । मंत्रेणानेन सहितं तत्कार्यं तु शिरोगतम्' । मंत्रश्च । "आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्म्मश्च जानाति नरस्य वृत्तम्" ॥ एतच्च धर्म्मावाहनादि शिरःपत्रारोपणान्तं सर्वदिव्यसाधारणम् । ततः प्राड्विवाकोघटमामन्त्रयेत् । 'त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् । धकाराद्धर्म्ममूर्तिस्त्वं टकारात्कुटिलः स्मृतः । धृतोभावयसे यस्माद्धटस्तेनाभिधीयसे । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति । तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि' । ततो घटारोपितं तं विनाडीपञ्चकं स्थापयेत् । 'दशगुर्वक्षरः प्राणः षट् प्राणाः स्युर्विनाडिका । तासां षष्ट्या घटी ज्ञेया स्यात्रिंशद्घटिकास्त्वहः' । तासां षष्ट्येति, हंसीच्छन्दसा पद्यं विनाडिका । यथा 'अभ्रश्यामः पीतं वासोबिभ्रद्गीतं योगीन्द्रैः । गोपैः सार्द्धं वृन्दारण्ये पद्भ्यां चक्रे गोचारम् । भक्तप्रेष्ठं देवश्रेष्ठं विघ्नौघानां भेत्तारं । तं वन्देऽहं निस्सन्देहं श्रीगोविन्दं सानन्दम्' इति ॥

अथ शुध्यशुद्धी । 'तुलितो यदि वर्द्धेत स शुद्धः स्यान्न संशयः । समो वा हीयमानो वा नापि शुद्धो भवेन्नरः' । अशुद्धिकारणं कक्षादिच्छेदोभङ्गो वा । तदुक्तम् । 'कक्षच्छेदे तुलाभङ्गे घटकर्क्कटयोस्तथा । रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत्' । कक्षं शिक्यम् । कर्कटकौ कर्कटशृङ्गाभौ तुलान्तयोः शिक्याधारावीषद्वक्रावा-

यसकीलकौ। अक्षः पादः। 'एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्। महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते'।

अथाग्निविधिः। याज्ञवल्क्यः। 'करौ विमृदितव्रीहेर्लक्षयित्वा ततोन्यसेत्। सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत्'। ततो धर्मावाहनादिशिरःपत्रारोपणान्तविधेरनन्तरम्। कर्त्तुरग्न्यभिमन्त्रणमाह। 'त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत्पापपुण्येभ्यो ब्रूहि सत्यं करे मम। नारदः। 'अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरञ्जितम्। तापे तृतीये सन्ताप्य ब्रूयात्सत्यपुरस्कृतम्। त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्यानि मानवाः। तस्येत्युक्तवतोलौहं पञ्चाशत्पलिकं स्मृतम्। अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि। 'पितामहः। 'अस्त्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्। पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम्'। उभयोर्हस्तयोरश्वत्थदलदधिदूर्वाद्यन्तरितयोरयःपिण्डं न्यस्य किं कुर्य्यात्तत्राह याज्ञवल्क्यः 'स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्। पितामहः। 'न मण्डलमतिक्रामेन्नार्वाक् संस्थापयेत्पदम्'। मण्डलप्रमाणमाह याज्ञवल्क्यः 'षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम्। पितामहः। 'कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमन्तथा। आग्नेयं मण्डलं चाद्यं द्वितीयं वारुणं स्मृतम्। तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्। पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौवेरमुच्यते। सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं स्मृतम्। नवमं सर्वदैवत्यं इति दिव्यविदोविदुः। द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम्। अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम्। षट्पंचाशत्समधिकम् भूमेस्तु परिकल्पना। कर्त्तुः पदसमं कार्य्यं मण्डलं तु प्रमाणतः। मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः'। अत्रापि गन्तव्यानि सप्तैव मण्डलानि। अङ्गुलप्रमाणं तु। 'तिर्य्यग्यवोदराण्यष्टौ ऊर्द्ध्वा वा व्रीहयस्त्रयः।

प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला'। याज्ञवल्क्यः 'मुक्ताग्नि मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्'। अष्टमे स्थित्त्वा नवमे मुक्तेत्यर्थः। कात्यायनः। 'प्रस्खलन्नभिशस्तश्चेत्स्थानादन्यत्र दह्यते। अदग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत्'। याज्ञवल्क्यः। 'अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत्'॥

अथोदकविधिः। याज्ञवल्क्यः। 'सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम्। नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्'। अभिशाप्य अभिमन्त्र्य कं जलं विशेत्। शोध्य इतिशेषः। एतच्च धर्मावाहनादिवरुणपूजाद्यनन्तरम्। प्राड्विवाको जलमभिमन्त्रयेत्। "तोय त्वं प्राणिनां प्राणाः सृष्टेराद्यं तु निर्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा। अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे"। पितामहः 'स्थिरतोये निमज्जेत्तु न ग्राहिणि नचाल्पके। तृणशैवालरहिते जलौकामत्स्यवर्जिते। देवखातेषु यत्तोयं तस्मिन् शस्तं तु शोधनम्। आहार्य्यं वर्ज्जयेन्नित्यं शीघ्रगासु नदीषु च। आविशेत्सलिले नित्यमूर्मिपङ्कविवर्ज्जिते'। आहार्य्यमुद्धृतम्। 'उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च'। याज्ञवल्क्यः। 'समकालमिषुं मुक्तमानीयाऽन्यो जवी नरः। गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात्'। अयमर्थः। त्रिषु शरेषु मुक्तेषु एको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति, अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति एवं स्थितयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति। तत्समकालमेव तोरणमूलस्थितोपि द्रुततरं मध्यमशरपातस्थानं गच्छति। शरग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्ज्जलगतं यदि शोध्यं पश्यति तदा स शुद्धो भवति। इदं स्पष्टयति पितामहः। 'गन्तुश्चापि च कर्त्तुश्च समङ्गमनमज्जनम्। गच्छेत्तोरणमूला-

तु लक्ष्यस्थानं जवी नरः। तस्मिन् गते द्वितीयोऽपि वेगमादाय सायकम्। गच्छेत्तोरणमूलं तु यतः स पुरुषोगतः। आगतस्तु शरग्राही न पश्यति स शुद्ध्यति'। जविनौ निर्द्धारयति नारदः। 'पञ्चाशतो धात्रकानां यौ स्यातामधिकौ जवे। तौ च तत्र नियोक्तव्यौ शरानयनकारणात् इति। गत्वा तु तज्जलस्थानतटे तोरणमुच्छ्रितम्। कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ'। कर्णमात्रं शोध्यकर्णप्रमाणम्। पितामहः। 'शरान्सम्पूजयेत्पूर्वं वैणवं च धनुस्तथा। मङ्गलैः पुष्पधूपैश्च ततः कर्म्म समाचरेत्'। नारदः 'मध्यमेन तु चापेन प्रक्षिपेच्च शतत्रयम्। हस्तानां च शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः। न्यूनाधिके तु दोषः स्यात्क्षिपतः शायकांस्तथा॥ क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम्। मन्दं पञ्चशतं ज्ञेयमेष प्रोक्तो धनुर्विधिः। इयमंगुलसंख्या। एवमेकादशांगुलाधिकं हस्तचतुष्टयम्-क्रूरं, दशांगुलाऽधिकं मध्यमं, नवांगुलाधिकं मन्दमिति। शराश्चानायसाग्रा वैणवाः कार्याः। 'शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये। वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत्'। इति वचनात्॥ क्षेप्ता च क्षत्रियः प्रोक्तस्तदृत्तिर्ब्राह्मणोऽपि च। 'अक्रूरहृदयः शान्तः सोपवासस्ततः क्षिपेत्। तेषां च प्रेषितानां च शराणां शस्त्रचोदनात्। मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा। शरस्य पतनं ग्राह्यं सर्प्पणं तु विवर्ज्जयेत्। सर्प्पन्सर्प्पन् शरो याति दूराद्दूरतरं यतः। इषुं न प्रक्षिपेद्धीमान्मारुते चातिवाति वा। विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले। तृणगुल्मलतावल्लीपङ्कपाषाणसंकुले। अन्यथा नैव शुद्धः स्यादेकाङ्गस्यापि दर्शनात्। स्थानाद्वान्यत्र गमनाद्यस्मिन्पूर्वन्निवेशितः। शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका। अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत्'। अयमत्र प्रयोगः। शरेषु त्रिषु मुक्तेषु

मध्यमशरपातस्थाने मध्यमं शरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थितेऽन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद्गमनमज्जने ॥

अथ विषविधिः ॥ तमाह याज्ञवल्क्यः । 'त्वं विष ब्रह्मणः पुत्रः सत्यधर्म्मे व्यवस्थितः । त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् । एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् । यस्य वेगैर्विना जीर्णं शुद्धिं तस्य विनिर्द्दिशेत्' ॥ धातोर्द्धात्वंतरप्राप्तिर्विषवेग इतिस्मृतः ॥ धातवश्च त्वगादयः सप्त प्रसिद्धाः । विषवेगाश्च सप्तोक्ता विषतंत्रे । 'वेगोरोमांचमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ, तस्योर्द्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । योवेगः पञ्चमोऽसौ नयति विवशतां कंठभङ्गं च हिक्कां, षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य' । नारदः । 'दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ । धूपोपहारमंत्रैश्च पूजयित्त्वा महेश्वरम्' । सोपवासः प्राड्विवाकः धर्म्मावाहनादिशिरःपत्रारोपणान्तं साधारणविधिं विधाय विषमभिमन्त्रयेत् । 'त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् । पापानां दर्शयात्मानं शुद्धानाममृतं भव । मृत्त्युमूर्त्तिर्विष त्वं हि ब्रह्मणा परिनिर्म्मितम् । त्रायस्वैनं नरं पापात्सत्त्येनास्यामृतं भव' इत्यभिमंत्र्य दक्षिणाभिमुखाय दद्यात् । 'द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते । उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः' । इति वचनात् । नारदः कालमाह । 'तोलयित्त्वेप्सितं काले देयं तद्धि हिमागमे । नापराह्णे न मध्याह्ने न संध्यायां तु धर्म्मवित् । वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता । हेमन्ते स्यात्सप्तयवा शरद्यल्पा ततोऽपि हि' । अल्पा षड्यवा, हेमन्तपदं शिशिरस्याप्युपलक्षकम् । सर्वदिव्यसाधारणे वसन्तेऽपि सप्तयवा विषस्य मात्रा । यथाह नारदः 'विषस्य पलषड्भागाद्भागोविंशतिमस्तु

यः। तमष्टभागहीनन्तु शोध्ये दद्याद्घृतप्लुतम्। विंशतिमो भागोऽष्टयवाः तस्याष्टमभाग एव यवः । घृतं च विषात्त्रिंशद्गुणं ग्राह्यम् । 'घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितं'। इति कात्यायनवचनात्। पितामहः। 'त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितं। कुहकादिभयाद्राजा धारयेद्दिव्यकारिणम्। औषधीर्मन्त्रयोगांश्च मणीनथ विषापहान्। कर्त्तुः शरीरसंस्थांश्च गूढोत्पन्नात्परीक्षयेत् । विषमपि रक्षणीयं 'अकृत्रिममसंमूढममन्त्रोपहतं च यत्'। इति नारदस्मरणात्। विषे पीते यावत्करतालिकापञ्चशतं तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः। यदाह नारदः। 'पञ्चतालशतं कालं निर्विकारो यदा भवेत्। तदा भवति संशुद्धस्ततः कुर्य्याच्चिकित्सितम्'। पितामहः। 'भक्षिते तु यदा स्वस्थो मूर्च्छाच्छर्द्दिविवर्ज्जितः। निर्विकारोदिनस्यान्ते शुद्धं तमपि निर्द्दिशेत्। एतदल्पमात्राविषयम्॥

अथ कोशविधिः॥ याज्ञवल्क्यः। 'देवानुग्रान्समभ्यर्च्च्य तत्स्नानोदकमाहरेत् । संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम्'। धर्म्मावाहनादिशिरःपत्रारोपणान्तं कृत्वा 'तोय त्वं प्राणिनां प्राणा इति तोयमभिमन्त्र्य तत्तोयं प्राड्विवाकः । संश्राव्य 'सत्येन माभिरक्ष त्वं वरुणेति शोध्येनाभिमन्त्रितं पाययेच्छोध्यम् । पितामहः। 'भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्यस्य तु पाययेत् । दुर्गायाः पाययेच्चौरान्ये च शस्त्रोपजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत्। दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम्। अन्येषामपि देवानां स्नापयेदायुधानि च'। इति देवतानियमः। 'विस्रम्भे सर्वशङ्कासु सन्धिकार्य्ये तथैव च। एषु कोशःप्रदातव्यो नित्यं चित्तविशुद्धये'। इति कार्य्यनियमः। 'पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशूकस्याव्यसनिनः कोशपानं विधीयते'।

सशूक आस्तिकः। 'मद्यपस्त्रीव्यसनिनां कितवानां तथैव च। कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः। महापराधिनिर्द्धर्म्मकृतघ्नक्लीबकुत्सिते। नास्तिकव्रात्यदासेषु कोशपानं विवर्ज्जयेत्'। इत्यधिकारिनियमः। नारदः। 'तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम्। आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम्'। याज्ञवल्क्यः। 'अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम्। व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः'। नारदः। 'ऊर्द्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत्। नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात्'। वैकृतं रोगाग्नीष्टमरणादि। रोगानाह शातातपः। 'ज्वरातीसारविस्फोटगूढास्थिपरिपीडनम्'॥

अथ तण्डुलविधिः। पितामहः। 'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम्। चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः'। तण्डुलविधिः। पितामहः। 'तण्डुलान्कारयेच्छुक्लाञ् शालेर्नान्यस्य कस्यचित्। मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः। स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्। प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकं। तण्डुलान् भक्षयित्वा च पत्रे निष्ठीवयेत्ततः। पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव च। लोहितं दृश्यते यस्य हनुस्तालु च शीर्यति। गात्रं च कम्पते यस्य तमशुद्धं विनिर्द्दिशेत्'। धर्म्मावाहनादिः साधारणविधिरपीति॥

अथ तप्तमाषविधिः। पितामहः 'सौवर्णं राजतं वापि ताम्रं वा षोडशांगुलम्। चतुरङ्गुलखातं तु मृन्मयं वाथ मण्डलम्'। मण्डलं वर्त्तुलम्। पूरयेद्घृततैलाभ्यां विंशत्या तु पलैश्च तत्। सुवर्णमाषकं तस्मिन्सुतप्ते निक्षिपेत्ततः॥ अंगुष्ठांगुलियोगेन उद्धरेत्तप्तमाषकम्। कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते। शुद्धो भवति धर्मेण निर्विकारकरांगुलिः'। उद्धरेदिति वचनात्पा-

त्रादुत्क्षेपणमात्रं न बहिः प्रक्षेपोऽप्यादरणीय इति मिताक्षरा ॥

अथापरकल्पः। 'सौवर्णे राजते ताम्रे आयसे मृन्मयेपि च। गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः। सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम्। सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम्। भ्रमद्वीचितरङ्गाढ्ये सनखस्पर्शगोचरे। परीक्षेतार्द्रवस्त्रेण क्षुक्षुङ्कारं सघोषकम्। ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत्। परम्पवित्रममृतं घृत त्वं यज्ञकर्मसु। दह पावक पापं मां हिमशीतं शुचौ भव। उपोषितं ततः स्नातमार्द्रवाससमागतम्। ग्राहयेन्मुद्रिकां तान्तु घृतमध्यगतां तथा। प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः। यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः'। अत्रापि धर्मावाहनाद्यनुसन्धेयम्। घृतानुमन्त्रणं प्राड्विवाकस्य। 'त्वमग्ने सर्वभूतानामित्यग्निमन्त्रणं शोध्यस्य कार्य्यम्। प्रदेशिन्यैवोद्धरणं मुद्रिकायाः 'प्रदेशिनीं परीक्षेयुरिति वचनादिति।

अथ धर्माधर्माख्यदिव्यविधिः। नारदः।'अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम्। हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम्। हन्तॄणां साहसिनां, याचमानानां उत्तमर्णादीनां, प्रायश्चित्तार्थिनां पातकेनाभियुक्तानां 'राजतं कारयेद्धर्ममधर्मं सीसकायसम्'। इति प्रतिमाविधानम्। सीसकं वा आयसं वेत्यर्थः। पक्षान्तरमाह। 'लिखेद्भूर्ज्जे पटे वापि धर्माधर्मौ सितासितौ। अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्च्चयेत्। सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक्। एवंविधौ चोपलिख्य पिण्डयोस्तौ निधापयेत्। गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः। मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ। उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ। आवाहयेत्ततोदेवांल्लोकपालांश्च पूर्ववत्। धर्मावाहनपूर्वन्तु प्रतिज्ञापत्रकं लिखेत्'। ततोऽभिशस्तो मन्त्रयेत्। 'यदि पाप-

विमुक्तोऽहं धर्मस्त्वायातु मे करे । अशुद्धश्चेन्मम करे पापमायातु धर्मतः' ॥ इति मन्त्रेण । 'अभियुक्तस्तयोरेकं प्रगृह्णीतावित्रलम्बितः । धर्मे गृहीते शुद्धः स्यादधर्मे हीयते तु सः । एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणं' । अन्ये च शपथा द्रव्याल्पत्वमहत्त्वजातिविशेषविषया मन्वादिभिरुक्ताः । यथा 'निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् । त्रिनिष्कादर्वाक् पुण्यं स्यात्कोशपानमतः परम् । सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तुपातकैः' । इदमप्यसाक्षिपरम् । साक्षिणं श्लोकश्रावणस्योचितत्वात् । इतिध्येयम् । कात्यायनो दण्डमाह । 'शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत्' । दण्डस्तु । 'विषे तोये हुताशे च तुलाकोशे च तण्डुले । तप्तमाषकदिव्ये तु क्रमाद्दण्डं प्रकल्पयेत् । सहस्रं षट्शतञ्चैव तथा पञ्चशतानि च । चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत्' । अयं दिव्यनिबन्धो दण्ड इति ॥

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रन्थे ।
एकादश उद्धारोव्यवहृतिनिर्णीतिरूपोऽगात् ॥ ११ ॥

## द्वादशे तु समुद्धारे प्रायश्चित्तं निरूप्यते।

अङ्गिराः। 'प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते। प्रायश्चित्त-परिभाषा। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्'। शङ्खः। 'पापात्मनस्तु पापेभ्यः कृच्छ्रैः सन्तारिता नराः। गतपापा दिवं यान्ति नात्र कार्य्या विचारणा। पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते। मुच्यते पातकैः सर्वैः महाभ्रैरिव चन्द्रमाः'। मनुः। 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसज्य चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः'। प्रायश्चित्तकल्पनायां शङ्खः। 'सर्वतो जीवितं रक्षेज्जीवन्पापं व्यपोहति। व्रतैः कृच्छ्रैस्तथा दानैरित्याह भगवान्यमः'। विष्णुः। 'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च'। अङ्गिराः। 'ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च। चरेद्गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये। लघुविष्णुः। 'स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा। पादो बालेषु प्रदातव्यः सर्वपापेष्वयं विधिः'। प्रायश्चित्ताकरणे याज्ञवल्क्यः। 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान्। तामिस्रं लोहशंकुं च महारौरवशाल्मली। रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम्। सङ्घातं लोहितोदं च ऋचीकं संप्रतापनम्॥ महानरककाकोलं सञ्जीवननदीपथम्। अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च। असिपत्रवनं घोरं तपनं चैकविंशकम्। महापातकजैर्घोरैरुपपातकजैस्तथा। अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः'। जमदग्निः। 'नदी वैतरणीनाम दुर्गन्धरुधिरावहा। उष्णतोया महावेगा अस्थिकेशतरङ्गिणी। अचीर्णैस्तत्र पच्यन्ते प्रायश्चित्तैस्तु मानवाः। तस्मादात्मविशुद्ध्यर्थं कर्त्तव्यं श्रेय एव च'। यमः।

अकृतप्रायश्चित्तयातना

'दक्षिणां तु दिशं याम्यां मनुष्याः पापकारिणः।यमदूतैः प्रणीयन्ते बद्धा पाशैरयोमयैः । क्रोशन्ते पच्यमानास्ते दह्यन्ते स्वेन कर्मणा। विशस्यमानाः प्रेतैश्च पुरुषादैर्भयङ्करैः । वर्णधर्मपरिभ्रष्टा आश्रमेभ्यः परिच्युताः । भिन्ने देहे प्रपद्यन्ते प्रेतीभूता यमक्षयम् । क्षुत्पिपासाभिभूतास्ते पच्यमानाः स्वकर्मभिः । क्षुधिता भक्षयन्त्येते आयसं वह्निसन्निभम् । दीर्घाः कृशा श्मश्रुलाश्च शूचीकर्णा विवाससः । स्वानि कर्माणि शोचन्ते यात्यमानाः समागताः । परस्वान्यभिलिप्सन्ते योजनायतकुक्षयः । सरित्कूपतडागानां पुष्करिण्याश्च लिप्सवः । दीनस्वरा अश्रुकण्ठा विकृता शुष्कतालवः । देहि देहीति भाषन्ते कल्पमानास्ततस्ततः' ।

प्रायश्चित्तानुकल्पाः

अथ प्रायश्चित्तभेदाः । मनुः।'पापं कृत्वा हि सन्तप्य तस्मात्पापात्प्रमुच्यते। नैतत्कुर्य्यां पुनरिति निवृत्त्या पूयते ततः'। यमः।'शोषणेन शरीरस्य तपसाऽध्ययनेन च।पापकृन्मुच्यते पापाद्दानेन च दमेन च'। अङ्गिराः।'ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम्।स्वापकेष्वपि भुञ्जानो ध्यायी नैव तु लिप्यते।प्राप्त षोडशवर्षेण यद्बाल्ये दुष्कृतं कृतम् । पश्चाद्धर्मप्रवृत्तस्य तत्सर्वमुपशाम्यति'। महाभारते । 'यद्यकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनम् । सर्वं दहति गङ्गाम्भस्तृणराशिमिवानलः'।लिङ्गस्थापनमपिप्रायश्चित्तं कालिकापुराणे। 'रावणं सूदयित्त्वा तु रामो दाशरथिस्तदा । विमुक्तोब्रह्महत्यायाः स्थाप्य लिंगं स्वतेजसम् । अद्यापीन्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं प्रभुम् । मुच्यते ब्रह्महत्याया नरो नैवात्र संशयः' । संवर्तः । 'हिरण्यदानं गोदानं भूमिदानन्तथैव च। नाशयन्त्याशु पापानि महापातकजान्यपि' । तत्र रहस्यकृते पापे विशेषमाह मनुः । 'एतैर्द्विजातयः शोध्याः व्रतैश्चाविष्कृतैनसः । अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्' । एतैः कृच्छ्रादिलक्षणैस्सर्व-

मस्माभिः कर्म्मविपाकसारोद्धारे निरूपितमिति नेह प्रदर्श्यते ।
देवलः । 'प्रकाश उक्तं यत्किंचित्त्रिंशद्भागो रहस्यके । त्रिंशद्भागः
षष्टिभागः कल्प्यो जप्याद्यपेक्षया ।

अथ किञ्चिद्भाग्यवतां भागवतानां भाव्यमभाव्यमितरेषामुच्यते।
भगवत्स्मरणा- विष्णुपुराणे ।'प्रायश्चित्तान्यशेषाणि तपःकर्म्मात्मका-
त्प्रायश्चित्ताभावः । नि च । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् । प्रात
र्निशि तथासंध्यामध्याह्नादिषु संस्मरन् । नारायणमवाप्नोति
सद्यः पापक्षयं नरः । तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने ।
न याति नरकं शुद्धः संक्षीणाखिलपातकः' । तथा । 'अवशोऽपि
हि यन्नाम कीर्त्तनात्सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंह-
त्रस्तैर्मृगैरिव । यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम् । मैत्रेय
सर्वपापानां धातूनामिव पावकः' । श्रीभागवते । 'न निष्कृतै-
र्ब्रह्मविशारदोदितैस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः, यथा हरेर्ना-
मपदैरुदीरितैस्तदुत्तमश्लोकगुणोपलंभकम्' । निष्कृतैः प्रायश्चि-
त्तैः । ब्रह्मविशारदा मन्वादयः । उपलम्भकं परिचायकं । 'नैका-
न्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्द्धावति वेदसत्पथे । तत्क-
र्म्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः' । कर्म्मनि-
र्हारः प्रायश्चित्तम् । सत्त्वभावनोऽन्तःकरणशोधकैः । तथा ।
'प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् । न निष्पुनाति
राजेन्द्र सुराकुंभमिवापगा' । नच द्वादशाब्दादिवैयर्थ्यम् । वि-
ष्णुनामाविश्वस्तेषु सार्थकत्वादिति ॥

अथ च सकलोऽपि प्रायश्चित्तविधिरगङ्गादेशपरः ।'प्रायश्चित्तं
तु तत्रैव यत्र गङ्गा न विद्यते' इति वचनात् । तस्माद्गङ्गास्नानभ-
गवत्कीर्त्तनयोर्महिमा यैर्न ज्ञायते तान्प्रति प्रायश्चित्तविधानमिति
प्रायश्चित्तैः किं क्रियते महद्रहस्यम् । तथापि किञ्चिदुच्यते । याज्ञवल्क्यः । 'प्रायश्चित्तैरपैसे-

नोयदज्ञानकृतम्भवेत्’ । तथा ‘म्लेच्छेनाधिगता शूद्रा त्वज्ञानात्तु कथञ्चन कृच्छ्रत्रयं प्रकुर्वीत ज्ञानेतु द्विगुणम्भवेदितिवचनात् । मनुः । ‘इयं विशुद्धिरुदिताप्रमाप्याकामतोद्विजम् । कामतोब्राह्मणवधे निष्कृतिर्न्नविधीयते’ । अनेन द्वादशाब्दादिव्रतमेव निषिध्यते । न प्रायश्चित्तमात्रम् । ‘यः कामतो महापापं नरः कुर्य्यात् कथञ्चन । न तस्य निष्कृतिर्द्दष्टा भृग्वग्निपतनादृते’ । इति मरणरूपप्रायश्चित्तदर्शनात् । यत्तु । ‘कामकृते प्रायश्चित्ते व्यवहार्य्यत्वमात्रं न पापक्षय इति मिताक्षरा । तदपि महापापपरम् । ‘अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं पापं प्रायश्चित्तैः पृथग्विधैरिति मनुस्मरणात् । मरणान्तिके तु पापक्षयोभवत्येव । ‘नास्यास्मिंल्लोके प्रत्यापत्तिर्विद्यते कल्मषन्तु निहन्यत’ इत्यापस्तम्बात् । महापातकान्याह याज्ञवल्क्यः । ‘ब्रह्महा मद्यपः स्तेनस्तथैवगुरुतल्पगः । एते महापातकिनोयश्च तैः सह संविशेत्’ । स्तेनः सुवर्णस्य, सुवर्णापहरणं महापातकमित्यापस्तम्बस्मरणात् । गुरुतल्पगो मातृगामी । ‘शिरः कपाली ध्वजवान् भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्’ । अन्यच्छिरःकपालं दण्डाग्रसमारोपितं ध्वजपदवाच्यं गृह्णीयात्, तच्च कपालं स्वव्यापादितब्राह्मणशिरः सम्बन्धि ग्राह्यं, तदलाभेऽन्यस्य ब्राह्मणस्यैव ग्राह्यम् । एतदुभयं पाणिनैव ग्राह्यं ‘खट्वाङ्गकपालपाणिरिति गौतमस्मरणात् । खट्वाङ्गशब्देन दण्डारोपितशिरःकपालात्मकोध्वजो गृह्यते । यत्तु द्विव्राह्मणवधे सकृदेव द्वादशवर्षाद्यनुष्ठानन्तन्न । ‘विधेः प्राथमिकादस्माद्द्वितीये द्विगुणश्चरेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः’ इति वचनात् । अत्रान्यान्यपि लघूनि गुरूणिच ब्रह्मवधप्रा-

---

१ अत्र ग्रन्थस्त्रुटितः प्रति भाति, इतिवचनादिति पञ्चम्यन्तहेतूपादानात् ।

यश्चित्तानि गुरुलघुपापापेक्षया व्यवस्थाप्यानि ॥

अथ सुरापानप्रायश्चित्तम्। याज्ञवल्क्यः 'सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम्। सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति'। पैठीनसिः। 'सुराप आर्द्रवासा अग्निवर्णां सुरां पिबेत् । प्रचेताः। 'आयसेन पात्रेण ताम्रेण च पिबेत्'। बृहस्पतिः। 'सुरापाणे कामकृते ज्वलन्तीं तां सुरां पिबेत्'। मुखे तया विनिर्दग्धो मृतः शुद्धिमवाप्नुयात् । मनुः। 'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा। यथैवेका तथैवान्या न पातव्या द्विजोत्तमैः'। अत्र सुरापदं गौड्यादिषु तिसृषु शक्तं अन्यत्र लक्षणेति ज्ञेयम्। पुलस्त्यः। 'पानसं द्राक्षमाधूकं खार्ज्जूरं तालमैक्षवम्। मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम्। समान्यपि विजानीयान्मद्यान्येकादशैव तु। द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम्'। अतश्च मद्यपदं द्वादशसु योगरूढम् वस्तुतस्तु सुरापदमपि पैष्ट्यामेव शक्तम्। 'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्‌ब्राह्मणराजन्यौवैश्यश्च न सुरां पिबेदितिवचनात्। किञ्चानेन वचनेन क्षत्रियवैश्ययोः पैष्ट्या एव निषेधः प्रतीयते। तथा च मनुरेव। 'यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्‌ ब्राह्मणेन नात्तव्यं देवानामश्नता हविः। बृहद्याज्ञवल्क्यः। 'कामादपि हि राजन्यो वैश्यो वापि कथञ्चन। मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते'। बृहद्विष्णुः। 'अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु'। अनुपनीतस्यानूढायाश्च सुरा निषिद्धा। 'सुरापाननिषेधस्तु जात्याश्रय इति स्थितिः। पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति वचनात्। सर्वपापेषु सुरापानादिष्विति व्याख्यानात्। याज्ञवल्क्यः। 'पतिं लोकं न सा याति ब्राह्मणी या सुरां पिबेत्। इहैव सा शुनी गृध्री सूकरी चोपजायते'। सुरापानसमेषु सुरापानप्रायश्चित्तव्रतार्द्धं बोध्यम्॥

सुवर्णस्तेयप्रायश्चित्तमाह याज्ञवल्क्यः। 'ब्राह्मणः स्वर्णहारी तु राज्ञे मुसलमर्पयेत्। स्वकर्म ख्यापयंस्तेन हतो मुक्तोपि वा शुचिः'। स्वर्णं सुवर्णं, तच्चात्र षोडशमाषपरिमितहेमपरम्। न तु जातिमात्रपरम्। सुवर्णन्यूनहेमहरणं क्षत्रियादिहेमहरणवदुपपातकमिति विभाव्यम्, सुवर्णस्तेयसमेऽर्द्धमिति सङ्क्षेपः॥

क्रमप्राप्तगुरुतल्पप्रायश्चित्तमाह। याज्ञवल्क्यः। 'तप्तेऽयः शयने सार्द्धमायस्या योषिता स्वपेत्। गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां चोत्सृजेत्तनुम्'। एतन्मुण्डितलोमकेशेन घृताभ्यक्तेन च कर्त्तव्यम्। 'निष्कालको घृताभ्यक्तस्तप्तां सूर्मीं परिष्वज्य मरणात्पूतो भवतीति विज्ञायते' इति वासिष्ठस्मरणात्। 'गुरुशब्दश्चात्र मुख्यया वृत्त्या पितरि वर्त्तते। 'निषेकादीनि कर्माणि यः करोति यथाविधि। सम्भावयति चान्नेन स विप्रो गुरुरुच्यते'। इति मनुना गुरुत्वप्रतिपादनपरे वाक्ये निषेकादिकर्त्तुर्जनकस्यैव गुरुत्वाभिधानात्। 'आचार्य्यादेस्तु भार्य्यासु गुरुतल्पं व्रतं चरेत्' इत्यतिदेशाच्च। आचार्य्यादेर्मुख्यगुरुत्वे तूपदेशापत्तेरिति विप्रग्रहणमुपलक्षणम्। अतः पितृपत्नीगमनमेव महापातकम्। गमनं चरमधातुविसर्गपर्य्यन्तमुच्यते। अतस्ततोऽर्वाङ्निवृत्तौ न महापातकित्वमिति मिताक्षरा। जनन्यामकामकृते तत्सपत्न्यां च कामकृते मरणान्तिकन्द्रष्टव्यम्। यदुक्तं षट्त्रिंशन्मते 'पितृभार्य्यां च विज्ञाय सवर्णां योऽधिगच्छति। जननीं चाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात्'। गुरुतल्पसमे त्वर्द्धमिति सङ्क्षेपः॥

अथावसरप्राप्तं तत्संसर्गिप्रायश्चित्तमाह याज्ञवल्क्यः। 'एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः'। एभिः पूर्वोक्तैर्ब्रह्महादिभिश्चतुर्भिस्तत्समः तदीयमेवप्रायश्चित्तं कुर्य्यादित्यर्थः। मनुः 'यो येन पतितेनैषां संसर्गं याति मानवः। स तस्यैव व्रतं कुर्य्यात्तत्संसर्ग-

विशुद्धये'।वृद्धबृहस्पतिः ।'एकशय्यासनं पङ्क्तिर्भाण्डपक्त्यन्नमिश्रताम् । याजनाध्यापने यौनस्तथा च सह भोजनम् । नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह' । एकशय्यासनमेकखट्वासनं,एकपङ्क्तिभोजनम् । एकभाण्डपचनमन्नेन सह मिश्रणं संसर्गः । देवलः।'संलापस्पर्शनिश्श्वाससहयानासनाशनात् । याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ।एषां मध्ये केन कर्मणा कियता कालेन पातित्यमित्यपेक्षायामाह वृद्धविष्णुः॥संवत्सरेण पतति पतितेन सहाचरन् ॥ देवलः ॥ 'याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतत्येव पतितेन न संशयः' ।अत्र याजनादीनां समुदितानां पातित्यहेतुत्वमसमुदितानां दोषहेतुत्वमस्त्येव । पराशरः ॥ 'आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् । संक्रामन्ति हि पापानि तैलबिन्दुरिवांभसि' ॥ अनेन निरपेक्षाणामपि पापहेतुत्वमुक्तं संलापस्पर्शनिःश्वासेति देवलवचनस्योक्तत्वात् । पतितसंसर्गप्रतिषेधेन प्रतिषिद्धयौनसंबन्धस्य प्रतिप्रसवमाह याज्ञवल्क्यः ॥ 'कन्यां समुद्धरेदेषां सोपवासामकिञ्चनाम्' ॥ एषां पतितानां, समुद्धरेत् उद्धृत्सोद्वहेत् ॥ न तु पतितहस्तात्प्रतिगृह्णीयात् । अकिञ्चनां अगृहीतपितृधनाम् ॥ अत एव वसिष्ठः ॥ 'पतितोत्पन्नः पतितो भवति । अन्यत्र कन्यायाः, साहि परगामिनी । तामरिक्थामुपेयादिति ॥

अथोपपातकप्रायश्चित्तं विवक्षुर्गोवधप्रायश्चित्तमाह याज्ञवल्क्यः

गोवधप्रायश्चित्तम्। 'पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः । गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति।कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः । दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः' ।एवं कुर्वन्मासान्ते गोप्रदानेन एकां गां दत्वा तावता शास्त्रार्थस्य सम्पत्तेर्गोहत्यायाः शुद्ध्यतीत्येकं व्रतं, मासं गोष्ठेशयो गोऽनुगामीति चानुवर्त्तते,

पञ्चगव्याहारस्य तु निवृत्तिः कृच्छ्रविधानादेव । अतश्च मासं निरन्तरं कृच्छ्रं समाहितश्चरेदिति द्वितीयम्, अतिकृच्छ्रं वा तथैव समाचरेदिति तृतीयं । कृच्छ्रातिकृच्छ्रलक्षणं च कर्मविपाकसारोद्धारे मदीयेऽनुबन्धेऽनुसन्धेयम् । अथवा त्रिरात्रमुपवासं कृत्वा वृषभ एकादशो यासां गवां ता दद्यादिति चतुर्थं व्रतं । अत्र षड्भिः षड्भिरुपवासैरेकैकप्राजापत्यकल्पनया पञ्चकृच्छ्राणां प्रत्याम्नायत्वेन पञ्चधेनवो मासान्ते च दीयमाना गौरेकेति षट्धेनवो भवन्तीति लघु, वृषभैकादशगोदानसहितत्रिरात्रव्रतं गुरु । अत्र गुरुव्रतन्देवद्विजराजगोवधप्रायश्चित्तं बोध्यम् । कथं पुनर्ब्राह्मणादिगवीनां गुरुत्त्वम् । 'देवब्राह्मणराज्ञां तु विज्ञेयं द्रव्यमुत्तमम्' इति नारदवचनाद्गुरुत्त्वम् । विशिष्टस्वामिकविशिष्टगोवधे मनुः । 'उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् । कृतवापो वसेद् गोष्ठे चर्मणार्द्रेण संवृतः । चतुर्थकालमश्नीयादक्षारलवणं मितम् । गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेन्द्रियः । दिवानुगच्छेत्ता गास्तु तिष्ठन्मूर्द्ध्नि रजः पिबेत् । शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं विशेत् । तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् । आसीनासु तथासीनो नियतो वीतमत्सरः । आतुरामभिषिक्तां वा चौरव्याघ्रादिभिर्भयैः । पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोचयेत् । उष्णे वर्षति शीते वा मारुते चातिवाति वा । न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः । आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले । भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् । अनेन विधिना यस्तु गोघ्नो गामनुगच्छति । स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति । वृषभैकादशागाश्च दद्यात्सुचरितव्रतः । अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्' । पुष्टितारुण्यादिरहितायां गव्यर्द्धं प्रायश्चित्तम् । 'अतिबालामतिकृशामतिवृद्धामतिरोगिणीम् । हत्वा पूर्वविधानेन चरेदर्द्धं व्रतन्द्विज' इति

वचनादिति । शङ्खः । 'पादं तु शूद्रहत्यायामुदक्यागमने तथा । गोवधे च तथाकुर्य्यात्परस्त्रीगमने तथा' । अङ्गिराः । 'गोसहस्रं शतं वापि दद्यात्सुचरितव्रतः । अविद्यमाने सर्वस्वं वेदविद्भ्योनिवेदयेत्' । अत्र गोसहस्रयुक्तं गोशतयुक्तं च द्वैमासिकं व्रतद्वयमभिहितम् । इदं च यदा सवनस्थश्रोत्रियातिदुर्गतबहुकुटुम्बिब्राह्मणसम्बन्धिनीं कपिलां कर्माङ्गभूतां गर्भिणीं बहुक्षीरतरुणिमादिगुणशालिनीं निर्गुणो धनवान्सप्रतिज्ञं खड्गादिना व्यापादयति तदा गोसहस्रयुक्तं द्वैमासिकं कुर्य्यात् । 'गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम् । खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेत्' इति बृहस्पतिवचनात् । ब्राह्मणादिवर्णविशेषस्वामिकगोवधे प्रायश्चित्तविशेषः कल्पनीयः । वयोविशेषे प्रचेताः । 'एकवर्षे हते वत्से कृच्छ्रपादो विधीयते । अबुद्धिपूर्वे पुंसः स्यात् द्विपादस्तु द्विहायने। त्रिहायणे त्रिपादः स्यात्प्राजापत्यमतः परम्' इति सङ्क्षेपः । यदा त्वेकेनैव रोधनादिव्यापारेण बहवो गावो व्यापादितास्तदा संवर्त्तापस्तम्बौ विशेषमाहतुः ॥ 'व्यापन्नानां बहूनां तु रोधने बन्धनेपि वा । भिषङ्मिथ्योपचारे तु द्विगुणं व्रतमाचरेत्' । व्यासः । 'औषधं लवणं चैव पुण्यार्थमपि भोजनम् । अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् । अतिरिक्ते विपत्तिश्चेत्कृच्छ्रपादोऽभिधीयते । पादमेकं चरेद्रोधे द्वौपादौ बन्धने चरेत् । योजने पादहीनं स्याच्चरेत्सर्वं निपातने । पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात् । निपातयन्ति ये गास्तु कृत्स्नं कुर्य्युर्व्रतं हि ते । तथैव बाहुजङ्घोरुपार्श्वग्रीवादिमोढनैः' । पराशरः । 'गवां बन्धनयोक्त्रैस्तु भवेन्मृत्युरकामतः । अकामकृतपापस्य प्राजापत्यं विनिर्दिशेत् । प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम्' । आपस्तम्बः । 'अति-

दोहातित्राहाभ्यां नासिकाच्छेदने तथा । नदीपर्वतसंरोधान्मृते पादोनमाचरेत्' । पराशरः । 'अन्यत्राङ्कनलक्ष्मभ्यां वाहने मोचनेऽपि वा । सायं संयमनार्थं च न दुष्येद्रोधबन्धयोः' । नालिकेरादिभिर्बन्धने भवत्येव दोषः।तदाह व्यासः । 'न नालिकेरेण न शाणवालैर्न वापि मौञ्जेन न शृंखलेन । एतैस्तु गावो न निबन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा । कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते । घण्टाभरणदोषेण विपत्तिर्यत्र गोर्भवेत् । कृच्छ्रार्द्धन्तु भवेत्तत्र भूषणार्थं हि तत्स्मृतम् । अतिदोहातिदमने सङ्घान्ते चैव योजने । बध्वा शृङ्खलपाशैश्च मृते पादोनमाचरेत्' । पालकस्योपेक्षायां प्रायश्चित्तविशेषस्तेनैवोक्तः 'जलौघपल्वले मग्ना मेघविद्युद्धताऽपि वा । श्वभ्रे वा पतिताकस्मात् श्वापदेनापि भक्षिता । प्राजापत्यं चरेत्कृच्छ्रं गोस्वामी व्रतमुत्तमम् । शीतवाताहता वा स्याद्दुद्बन्धनमृतापि वा । शून्यागार उपेक्षायां प्राजापत्यं विनिर्दिशेत्' । मनुः । 'व्यापन्नानां बहूनां तु रोधने बन्धनेपि वा । भिषङ्मिथ्योपचारे च द्विगुणं व्रतमाचरेत्' । व्यासः 'औषधं लवणं चैव पुण्यार्थमपि भोजनम् । अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत्' । आपस्तम्बः । 'पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात् । निपातयन्ति ये गास्तु कृत्स्नं कुर्य्युर्व्रतं हि ते । एतत्तु साक्षात्कर्त्तुः । तद्व्यवहितव्यापारिणोनिमित्तकर्त्तुस्तु 'पादमेकं चरेद्रोधे इत्यापस्तंवोक्तं द्रष्टव्यम् । क्वचिदुपकारार्थं प्रवृत्तौ वचनाद्दोषाभावः । यदाह सम्वर्त्तः ।' यन्त्रणे गोचिकित्सार्थे मूढगर्भविमोचने । यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते । दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम् । द्विजानां गोहितार्थं च प्रायश्चित्तं न विद्यते । औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च । दीयमाने

१ अङ्कनं स्थिरचिह्नकरणम्, लक्ष्म साम्प्रतोपलक्षणम् ।

विपत्तिश्चेन्न स पापेन लिप्यते। पराशरः। 'ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने। अतिवृष्टिहतानां च प्रायश्चित्तं न विद्यते। कूपखाते च धर्मार्थे गृहदाहे च या मृता। ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते'। अस्थ्यादिभङ्गे मरणाभावेपि क्वचित्प्रायश्चित्तमुक्तम्। 'अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा। पातनं दन्तशृङ्गाणां मासार्द्धं तु यवान्पिबेत्'। अङ्गिराः। 'शृङ्गभङ्गेऽस्थिभङ्गे वा चर्मनिर्मोचनेपि वा। दशरात्रं पिबेद्वज्रं स्वस्थापि यदि गौर्भवेत्'। वज्रं क्षीरादिवर्त्तनम्। एतदशक्तविषयम्। इदं च प्रायश्चित्तम् गोस्वामिने व्यापन्नसदृशीं गां दत्वैव कार्य्यम्। तद्यदाह पराशरः। 'प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्। तस्यानुरूपं मूल्यं च दद्यादित्यब्रवीद्यमः'। मनुः। 'यो यस्य हिंस्याद्द्रव्याणि ज्ञानतोऽज्ञानतोपि वा। स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्'। अत्र पूर्वोक्तप्रायश्चित्तजातं ब्राह्मणस्यैव हन्तुर्वेदितव्यम्। क्षत्रियादेस्तु हन्तुर्वृद्धहारीतविष्णुना विशेषोऽभिहितः। 'विप्रे तु सकलं ज्ञेयम् पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्द्धं पादकृच्छ्रस्तु शूद्रजातिषु शस्यते'। अङ्गिराः। पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता। वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्'। स्त्रीणां तु विशेषमाह पराशरः। 'वपनं नैव नारीणां नानुव्रज्या जपादिकम्। न गोष्ठेशयनं तासां न वसीरन् गवाजिनम्। सर्वान् केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम्। सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम्'। पुरुषेषु विशेषः संवर्त्तेनोक्तः। 'पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे तु शिखावर्ज्जं सशिखं तु निपातने'। इति गोवधप्रायश्चित्तम्।

अथान्येषामप्युपपातकानां प्रायश्चित्तं गोवधवदेव। याज्ञवल्क्यः। 'उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा। पयसा वापि मासेन

पराकेणाथवा पुनः'। एवमुक्तेन गोवधव्रतेन। अत्रातिदेशसामर्थ्याद्गोचर्म्मवसनगोपरिचर्य्यादिभिः कतिपयैर्न्यूनत्वमवगम्यते॥ मनुः॥ 'एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः। अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा'। एतत्त्रैमासिकं गोवधव्रतम्॥

अथोपपातकानि परिगणयामास याज्ञवल्क्यः। "गोवधोव्रात्यता स्तेयमृणानां चानपाक्रिया। अनाहिताग्नितापण्यविक्रयः परिवेदनम्। भृताद्ध्ययनादानं भृतकाध्यापनं तथा। पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया। स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्। नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः। हीनेंदक्षिणयाज्ञित्त्वं क्रतुविक्रयणं तथा। कन्यासन्दूषणं चैव परिविन्दकयाजनम्। कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्। आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम्। स्वाध्यायाग्निसुतत्त्यागो बान्धवत्याग एव च। इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम्। हिंस्रयंत्रविधानं च व्यसनान्यात्मविक्रयः। शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्। तथैवानाश्रमे वासः परान्नपरिपुष्टता। असच्छास्त्राधिगमनमाकरेष्वाधिकारिता। भार्य्याया विक्रयश्चैवमेकैकमुपपातकम्"। अत्रावकीर्णिवर्ज्जं सर्वेषामेवोपपातकानां गोवधव्रतातिदेशः कृत इति पृथगवकीर्णिप्रायाश्चित्तमाह याज्ञवल्क्यः। 'अवकीर्णं भवेद्गत्वा ब्रह्मचारी तु योषितम्। गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति'। अत्र चरमधातुविसर्गोऽवकीर्णं तद्यस्यास्तीति सोवकीर्णी स निर्ऋतिदैवत्येन गर्द्दभपशुना यागं कृत्वा शुद्ध्यतीत्यर्थः। गर्द्दभस्य पशुत्त्वे सिद्धेऽपि पशुग्रहणम-

---

१ मुद्रितयाज्ञवल्क्यपुस्तके 'धान्यकुप्यपशुस्तेयप्रयाजानां च याजनम्। पितृमातृसुतत्यागस्तडागारामविक्रयः'॥ इत्येतच्छ्लोकमस्ति, उपरि लिखितमर्द्धं नास्ति॥

थ पशुकल्प इत्याश्वलायनगृह्योक्तपशुधर्मप्राप्त्यर्थम्। एतच्चारण्ये चतुष्पथे लौकिकेऽग्नौ कार्य्यम्। यदाह वसिष्ठः। 'ब्रह्मचारी चेत् स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेतेति। तत्रापि रात्रौ काणेन यष्टव्यम्। यदाह मनुः। 'अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे। पाकयज्ञविधानेन यजेत निर्ऋतिं निशि'। गौतमः। 'गर्द्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत। तस्याजिनमूर्द्धवालं परिधाय लोहितपात्रे सप्तगृहान्भैक्षं चरेत् कर्माचक्षाणः संवत्सरेण शुद्ध्येदिति। तथा त्रिषवणमेककालं भोजनं च कर्त्तव्यम्। यदाह मनुः। 'एतस्मिन्नेनसि प्राप्ते वसित्वा गर्द्दभाजिनम्। सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्त्तयन्। तेभ्यो लब्धेन भैक्षेण वर्त्तयेदेककालिकम्। उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यतीति सङ्क्षेपः॥

अथ ब्रह्महत्यासमानि। याज्ञवल्क्यः। 'गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः। ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्'। अधि आधिक्येन अधिक्षेपो अनृताभिशंसनम्। नाशनं विस्मरणम्॥

अथ सुरापानसमानि।'निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम्। रजस्वलामुखास्वादः सुरापाणसमानि तु। स्वर्णस्तेयसमान्याह स एव। 'अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा। निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम्। गुरुतल्पसमान्याह स एव। 'सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च। सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्'। कुमार्युत्तमजातीया कन्यका।'सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः। दूषणे तु करच्छेद उत्तमायां वधस्तथेति। तत्रैव दण्डविशेषप्रतिपादनात्प्रायश्चित्तगुरुत्वं युक्तम्। स्वयोनिर्भगिनी। अत्र गमनं रेतःसेकपर्यन्तं बोध्यम्। 'रेतःसेकः सख्युः पुत्रस्य च स्त्रीषु कुमारीषु स्वयोनिष्वन्त्यजासु च

गुरुतल्पसमं विदुरितिमनोः । अत्र सर्वत्र समशब्दोपादानाद्ब्रह्म-हत्यादिव्रतेभ्यो न्यूनत्वमवगम्यते । लोके राजसमो मन्त्रीति किञ्चिन्न्यूने समशब्दप्रयोगदर्शनात् । महापातकस्येतरस्य च गुरुत्वायोगाच्चेति । गुरुतल्पातिदेशमाह याज्ञवल्क्यः । 'पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा । आचार्यपत्नीं तनयां गच्छंस्तु गुरुतल्पगः । लिङ्गं छित्वा वधस्तस्य सकामायास्त्रिया अपि' । अत्र यानि पापानि महापातकशब्दोदितानि तानि पातकसंज्ञकानि । तदुक्तम् । 'महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्' । तथा चाङ्गिराः । 'पातके तु सहस्रं स्यान्महत्सु द्विगुणं तथा । उपपाते तुरीयं स्यान्नरकं वर्षसंख्यया' । अत्र क्रमात्पातकं त्रिविधम् । उपपातकं पातकं महापातकं चेति । ननु 'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा।दुहिताचार्यभार्या च सगोत्रा शरणागता।राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या।आसामन्यतमांगच्छन् गुरुतल्पग उच्यते । शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते'। इति नारदीयवचनादिषु शिश्नस्योत्कर्त्तनं राज्ञा दण्डः प्रकर्त्तव्यः । प्रायश्चित्तमपि तदेवायाति । ईदृक्षु महापातकाद्यतिदिष्टेषु पूर्वोक्तत्रयावसिष्टेषु पापेषु तुरीयत्त्वमायात्विति चेन्न । महापापातिदिष्टानामपि महापापत्वानपायादिति सांप्रदायिकाः । अतिदिष्टं तुरीयमेव । नच नरकवर्षसंख्याविशेषानभिधानान्न त्रयाधिकमिति वाच्यम् । तस्य कल्पत्त्वादिति नव्याः । ब्रह्महत्यासमानां तु गुर्वधिक्षेपादीनामातिदेशिकेभ्यो न्यूनत्त्वात्तदर्द्धोनं द्वादशवर्षादिप्रायश्चित्तमिति मिताक्षरा । सैव च सुरापाणसमेषु निषिद्धभक्षणादिषु सुरापाणप्रायश्चित्तार्द्धमुक्तवतीति सर्वेषु तत्समेषु तदर्द्धादिकल्पन-

मित्यलं प्रपञ्चेन ।

स्मृतिहेमाद्रिहलायुधमिताक्षराकालमाधवीयेभ्यः ।
कालादर्शकलानिधिनिर्णयपीयूषनिर्णयाब्जेनात् ॥
रूपनरायणभोजप्रतापमार्त्तण्डहोरिलस्मृतितः ।
आनन्दकरनिबन्धादनन्तभट्टीयगृह्यभाष्येभ्यः ॥
सिद्धान्तसुधोद्धारस्मृतिसारप्रथितभारतादिभ्यः ।
इतिहासपुराणेभ्यः कल्पद्रुमपारिजाताभ्यां ॥
अन्येभ्योऽपि हि मैथिलगौडनिबंधेभ्य उचितेभ्यः ।
विश्वम्भरेण विदुषा स्मृतिसारोद्धार आचरितः ॥

श्रीविश्वम्भरविहिते स्मृतिसारोद्धारसंज्ञके ग्रंथे ।
प्रायश्चित्तनिरूपणनामाऽगादूद्वादशोद्धारः ॥१२॥

---

अमुञ्चक्रनारायणीयं निबन्धोत्तमं
भीममल्लक्षितीशात्मजस्य ॥
व्यधान्मल्लनारायणक्षोणिभर्त्तु-
स्त्रिवेदी निदेशेन विश्वम्भराख्यः ॥ १ ॥

---

इति श्रीमच्चक्रनारायणेत्यादिविविधिविरुदावलीविराज-
मानमानोन्नतमध्यावली(मझौली)नरेशश्रीमन्महाराजाधि-
राजभीममल्लदेवात्मजश्रीमहाराजनारायणमल्लदेवानुज्ञया
श्रीमन्महामहोपाध्याय पं. श्रीविश्वम्भरदीक्षितकृतश्चक्रना-
रायणीयनिबन्धापरपर्य्यायः स्मृतिसारोद्धारः सम्पूर्णः ॥